# प्रस्तावना

अयि गीर्वाणवाणीविलासासादितहृदयानन्दा ! विद्वांसोऽन्तेवासिनश्च !

विदितमेवैतत्तत्रभवतां भवतां यदस्मिन् जगतीतले निसर्गप्रतिकूलस्वभावं सकलजनानुभवगोचरं दुःखमनवरतं जिहासूनां सततं सुखं दुःखाभावं चाभिकांक्षतां समेषां मानवानां तदुपायभूतधर्मार्थकाममोक्षाख्यचतुर्विधपुरुषार्थावाप्तिसाधनमभीप्सतां—

> धर्मार्थकाममोक्षेषु वैचक्षण्यं कलासु च ।
> करोति कीर्तिं प्रीतिञ्च साधु काव्यनिषेवणम् ॥

इत्यादि पद्यरत्नं श्रवणविषयं विदधतां "रसो वै ब्रह्म"त्यनुध्यायतामनायासेन निरुक्तपुरुषार्थचतुष्टयसाधकेषु सत्काव्येषु सञ्जायते प्रवृत्तिरिति । अतएव—

> नरत्वं दुर्लभं लोके विद्या तत्र सुदुर्लभा ।
> कवित्वं दुर्लभं तत्र शक्तिस्तत्र सुदुर्लभा ॥
> काव्यालापाश्च ये केचिद् गीतकान्यखिलानि च ।
> शब्दमूर्त्तिधरस्यैते विष्णोरंशा महात्मनः ॥
> काव्यशास्त्रविनोदेन कालो गच्छति धीमताम् ।
> व्यसनेन च मूर्खाणां निद्रया कलहेन वा ॥

इत्यादीनि पद्यकमलानि विराजन्त एव सकललोकानां मानसमानसेषु ।

एतदेव विभाव्य विविधविद्याविद्योतिताशयाः महाकविशिरोमणीभूताः श्रीहर्षपादाः निजनिरवद्यहृद्यकाव्यकलया जनान् प्रीणयितुकामाः—

> कर्कोटकस्य नागस्य दमयन्त्या नलस्य च ।
> ऋतुपर्णस्य राजर्षेः कीर्त्तनं कलिनाशनम् ॥
> पुण्यश्लोको नलो राजा पुण्यश्लोको युधिष्ठिरः ।
> पुण्यश्लोका च वैदेही पुण्यश्लोको जनार्द्दनः ॥

इत्यादिवचनानां विभावनया निखिलजगत्पावनीकरणशक्तिमती नलकथेति निरन्तरमनुभवन्तोऽरीरचन्नैषधचरिताख्यं महाकाव्यम् ।

अत्र रसगङ्गाधरकारपण्डितराजश्रीजगन्नाथानुमोदितस्य रमणीयार्थप्रतिपादकशब्दत्वात्मकस्य, साहित्यविद्यार्णवकर्णधारसाहित्यदर्पणकारश्रीविश्वनाथाङ्गीकृतस्य रसान्वितवाक्यस्वरूपस्य वा काव्यत्वस्य सर्वथा सामञ्जस्येन तद्व्याप्यं—

सर्गबन्धो महाकाव्यं तत्रैको नायकः सुरः ।
स वीरः क्षत्रियो वापि धीरोदात्तगुणान्वितः ॥

इत्यादिलक्षणलक्षितं महाकाव्यत्वमपि नितमां भासत इति विदन्त्येव श्रीमन्तः । एवममन्दानन्दसन्दोहसमुद्भावकं काव्यसमूहमध्ययनादिभिः सम्भावयतां सहृदयधुरीणानां सदसद्विवेचनचातुर्यचन्द्रचन्द्रिकाचमत्कृतचेतसाम् "उदिते नैषधे काव्ये क्व माघः क्व च भारवि"रिति सूक्तिनटी मादृशामिव समेषां काव्यप्रेयसां मनोरङ्गभूमौ नित्यं नरीनृत्यमानैव भवेदित्यलमेतत्प्रशंसनायानल्पजल्पनेन ।

## प्रकृतमहाकविसंक्षिप्तपरिचयः—

अथाधिगौडदेशं लक्ष्मणावतीराजधानीसन्निधाने निवसन् विलक्षणविचक्षणो दिगन्तविख्यातयशाः श्रीहीरो नाम विप्रः कान्यकुब्जाधिपतिश्रीविजयचन्द्रनामधेयकराजसभाप्रधानपण्डितपदमलङ्कुर्वन् श्रीमामल्लदेवीनामकनिजधर्मपत्न्यां द्वादशताब्द्याः मध्यभागे महातेजस्विनं श्रीहर्षं नाम सुतं जनयामासेति स्वयमेवानेन महाकविना प्रकृतग्रन्थे प्रतिसर्गान्ते—"श्रीहर्षं कविराजराजिमुकुटालङ्कारहीरः सुतं श्रीहीरः सुषुवे जितेन्द्रियचयं मामल्लदेवी च यम्" इत्यादिना प्रत्यपादि ।

तथा श्रीहीरः कदाचित् राजसभायां केनचिद्विदुषा शास्त्रविचारे पराजितोऽपमानमनुभूय "सताम्माने म्लाने मरणमथवा दूरगमन"मिति सिद्धान्तमनुस्मरन् विलक्षणधिषणं निजसुतं श्रीहर्षं "वत्स ! यदि शक्नोषि, वादिनमेनं जेष्यसी"ति सन्दिश्य योगेन परमात्मनि निजात्मानं सममेलयदिति लोकप्रसिद्धिः ।

अथ पित्राज्ञापालनायावहितचेतसा श्रीहर्षेण देशाद्देशान्तरं पर्यटता श्रीभगवदनुकम्पया कस्माच्चिन्महात्मनोऽवाप्त' चिन्तामणिमन्त्रं सनियमं निरन्तरमनुजपता गुरोः कृपया सर्वतन्त्रस्वतन्त्रतामासाद्य तात्कालिककान्यकुब्जेश्वरश्रीजयचन्द्रराजसभायां निजपितृप्रधानपदमलमकारीति स्वयमेवानेन महाकविना—"ताम्बूलद्वयमासनं च लभते यः कान्यकुब्जेश्वरा"दिति खण्डनखण्डखाद्यान्तिमग्रन्थांशेन समसूचि ।

प्रकृतस्य महाकवेः गौडदेशीयता "श्रीहर्षो गौडदेशीय" इति राजशेखररचितप्रबन्धकोषेण तस्य गौडराजवंशप्रशस्तिरचयितृतया च निश्चीयते । एवमस्य द्वादशशताब्दीमध्यभागीयता च "विदितमस्तु भवतां यथोपरिलिखितग्रामः'''त्रिचत्वारिंशदधिकद्वादशशतसंवत्सरे आषाढे मासि शुक्लपक्षे सप्तम्यां तिथौ रविदिने'''भारद्वाजगोत्राय'''श्रीअनङ्गाय प्रदत्तः" इति शिलालिपितः कञ्चिद्ग्राममनङ्गनाम्ने विप्राय ददतः कान्यकुब्जेश्वरश्रीजयचन्द्रस्य सामयिकतया निर्णीयते ।

## प्रकृतमहाकविविरचितग्रन्थाः ।

१ नैषधचरितम्, २ खण्डनखण्डखाद्यम्, ३ ईश्वराभिसन्धिः, ४ अर्णववर्णनम्, ५ शिवशक्तिसिद्धिः, ६ विजयप्रशस्तिः, ७ छन्दःप्रशस्तिः, ८ गौडराजवंशप्रशस्तिः, ९ साहसाङ्कचम्पूः, १० स्थैर्यविचारणञ्चेति ।

एवमस्य महाकवेः "यः साक्षात्कुरुते समाधिषु परं ब्रह्म प्रमोदार्णव"मिति प्रकृतकाव्यसमाप्तिपद्यांशेन महायोगिता, तथा निम्नलिखितपद्येन कविताकामिनीहर्षता च सूचिता भवतीति कृतं पल्लवितेन ।

**यस्याश्चोरश्चिकुरनिकरः कर्णपूरो मयूरः**
**भासो हासः कविकुलगुरुः कालिदासो विलासः ।**
**हर्षो हर्षो हृदयवसतिः पञ्चबाणस्तु बाणः ।**
**केषां नैषा कथय कविताकामिनी कौतुकाय ॥**

## नलहंसयोः संवादः—

अथैकदा कर्णाकर्णिकया श्रवणगोचरीकृतदमयन्तीशीलसौन्दर्यादिसकलगुणो नैषधेश्वरो नलो राजा तदीयविरहानलसन्तप्तस्वान्तशान्तिसमासादनाय स्वसहायैरनुसृतः शान्तिसाधनवातावरणादिसकलसामग्रीसंयुतं निजोद्यानमासाद्य तत्र सरस्समीपसुसज्जिततटे विहरतां हंसानाम् स्वर्णमयपक्षं हंसं निजविचेष्टितामन्दानन्दजनकमेकमालोक्य तदीयसौन्दर्यादिगुणाहृतचेताः प्रचुरप्रकारेणायस्य सहसा सुरतश्रमसुप्तं तं निजकरग्रहगृहीतं विधाय मुदितमनाः सन्तस्थौ ।

ततो नलगृहीतेन तेन हंसेन तदीयकरतो विमोकाय सम्पादितसकलपरप्रयत्नवैफल्यमालोच्य "धिगस्तु तृष्णातरलं भवन्मनः समीक्ष्य पक्षान्मम हेमजन्मनः" इत्यारभ्य "सुताः कमाहूय चिराय चुङ्कृतैर्विधाय कम्प्राणि मुखानि कम्प्रति" इत्यन्तैः वचनैः बहुशो निन्दितो निजविलापश्रावणोद्भावितदयाभावश्च स नलः "रूपमदर्शि धृतोऽसि यदर्थं गच्छ यथेच्छमित्यभिधाय" तं हंसं मुमोच ।

तदनन्तरं हंसो नितमां नलकरविमुक्तिजां शान्तिमवाप्य स्वमित्रैः सम्मिल्य पुनः नलकरकमले मधुपायमानः "मृगया न विधीयते नृपैरि"त्यादिमधुरवचनेन परप्रसादमासादयन् तं नलमुवाच "हे नृप ! जगतीतलमान्यमहाशयो धर्मात्माग्रगण्यः श्रीमान् सर्वथा कटुवचनश्रावणैः क्लेशितो मयेति तदपराधापनोदाय श्रीमतः कञ्चिदुपकारविशेषं विधित्सोः विनोदमयं भवत्प्रियं कथयितुकामस्य "तृणेन कार्यं भवतीश्वराणामिति नीतिमनुस्मरता पक्षिणोऽपि मम वचनमवहितचित्ततया श्रूयताम् ।

विराजते कुण्डिनपुरनगरे भीमराजतनूजा दमयन्तीनाम्नी अगणितगुणगुणयुता निरुपमाना त्रिभुवनसुन्दरी शेषादिवाङ्मनोऽगोचरसौन्दर्यशीला विहरणशीलेन मयाऽनेकशोऽवलोकिता कथञ्चित्तद्रूपसादृश्यमादधता भवदीयरूपेणालोकितेन एकसन्बन्धिज्ञानमपरसम्बन्धिनं स्मारयतीनियमात् मदीयस्मृतिपथपथिकायमाना श्रीमद्रमणीभवितुंयोग्या श्रीमदेव तद्योग्याय यथा प्राप्ता भवेदित्याकलयामि । विषयेऽत्र श्रीमत्सम्मतिमात्रमवगन्तुमनिवेदयमिति स्यादनुमतिः श्रीमतो यदि तर्हि तथा तां प्रबोधयिष्यामि, यथा सा स्वयम्वरे सुरेन्द्रमसुरेन्द्रञ्च विहाय नरेन्द्रं श्रीमन्तमेव वरिष्यते इति

ततो हंसोक्तं विरहानलदाहदमनदक्षतामापन्नं सुधोपममाकर्ण्य महामहिमा महीपतिः मुदमावहन् समूचे, हंस ! त्वत्सूक्तिसुधौषधेन मे विरहव्याधिः,शान्त इवालक्ष्यते विगतेव मानसवेदनाभाति । विरहापारपारावारे निमज्जतो मम पोत इवाऽवलम्बो विधात्रा विहितोऽसीति जायतेऽनुमा । किन्तु स्मरेणैकेन तदीयस्मृतिसञ्जातस्मरेणाप्युप दह्यते मे हृदयम् । अतोऽतिजवेन विधेयमिदं विधायानन्तपुण्यं नीयतान् नीयता श्चायंचिरकालाय प्रियम्वदताम् । किं बहुना—पन्थानः सन्तु ते शिवाः ।

---

## दमयन्तीहंसयोः संवादः ।

अथ नलकरकमलमुक्तेन हंसराजेनावाप्य कुण्डिनपुरीम् तत्रोद्याने सह सखीभिः खेलन्तीं श्रीमतीमूदमयन्तीमालोक्य तत्समीप एवाकाशादवतृतेन आकस्मिकतत्पक्षिपक्षरवश्रवणजामुत्कण्ठामावहन्ती दमयन्ती समक्षस्थितं सुवर्णमयकलेवरं हंसमवलोक्य तद्ग्रहणाय तमनुगच्छन्ती रोषनिवारितागच्छत्सखीवृन्दा निजात्मानं गोपायत तथा मन्दमागामि. यथा सा तेन प्रदिपदं तं गृहीतमिव मन्यमाना सखीतो दूरं लताकुञ्जं गुञ्जन्मधुपपुञ्जाकलितमेकान्तस्थानं नीताभूत् ।

ततो हंसः समुवाच भैमीम् चपले ! महीस्थितया गगनगामिनं मां ग्रहीतुमशक्तया श्रीमत्या किमिति मदनुसरणेन वृथाऽयास्यते स्वात्मा । जाने नेदानीमपि निर्गचपलोवालभावोऽपनीतस्ते यौवनेन । सुन्दरि ! विधिवराद्बहुविहारेणापि श्रममवहत् पाशादिनापि पीड़यितुमशक्यस्य विधातुरादेशेन नलक्रीड़ासरोवरं देवितुमागते हेममयहंसेष्वन्यतमस्य स्वर्गवासिनो मम स्पर्शादिकमवाप्तुं को नाम मानवो नलादन्यः समर्थो भवेत् ।

नलस्तु सङ्ग्रामप्रतिहतपराक्रमशीलो स्मरादिमोहकरूपवान् स्मरणीयस्मारकसन्निधेयः सकलसद्गुणगणनिलयः प्रचुरपुण्यप्रभावादेव देवेन्द्रदुर्लभमपि सुखमत्रैव

* रसो वै ब्रह्म *

# नैषधमहाकाव्यम्

जीवातु–प्रबोधिनी–संस्कृतहिन्दीटीकाद्वयोपेतम् ।

## प्रथमः सर्गः

निपीय यस्य क्षितिरक्षिणः कथां तथाद्रियन्ते न बुधास्सुधामपि ।
नलस्सितच्छत्रितकीर्तिमण्डलस्स राशिरासीन्महसां महोज्ज्वलः ॥ १ ॥

अथ तत्रभवान् श्रीहर्षकविः 'काव्यं यशसेऽर्थकृते व्यवहारविदे शिवेतरक्षतये। सद्यः परनिर्वृतये कान्तासम्मिततयोपदेशयुजे ॥' इत्यालङ्कारिकवचनप्रामाण्यात् काव्यस्यानेकश्रेयःसाधनत्वाच्च काव्यालापांश्च वर्जयेदिति तन्निषेधस्यासत्काव्यविषयतां पश्यन् नैषधाख्यं महाकाव्यं चिकीर्षुश्चिकीर्षितार्थाविघ्नपरिसमाप्तिहेतोराशीर्नमस्क्रिया वस्तुनिर्देशो वापि तन्मुखमित्याशीराद्यन्यतमस्य प्रबन्धमुखलक्षणात् कथानायकस्य राज्ञो नलस्य इतिवृत्तरूपं मङ्गलं वस्तु निर्दिशति निपीयेति । यस्य क्षितिरक्षिणः क्ष्मापालस्य नलस्य कथाम् उपाख्यानं निपीय नितरामास्वाद्य पीङ् स्वादे क्त्वो ल्यबादेशः न तु पिबतेः न ल्यपीति प्रतिषेधादीत्वासम्भवात् । बुधास्तज्ज्ञाः सुराश्च, ज्ञातृचान्द्रिसुरा बुधा इति क्षीरस्वामी । सुधामपि तथा यथेयं कथा तद्वदित्यर्थः नाद्रियन्ते, सुधापेक्षय बहु मन्यन्ते इति यावत् । सितच्छत्रितं सितच्छत्रं कृतं सितातपत्रीकृतमित्यर्थः तत्करोतीति ण्यन्तात् कर्मणि क्तः । कीर्तिमण्डलं येन सः महसां तेजसां राशिः रविरिवेति भावः । महैः उत्सवैः उज्ज्वलः दीप्यमानः नित्यमहोत्सवशालीत्यर्थः । मह उद्धव उत्सव इत्यमरः । स नलः आसीत् । अत्र नले महसां राशिरिति कीर्तिमण्डले च सितच्छत्रत्वरूपस्यारोपात् रूपकं कथायाश्च सुधापेक्षया उत्कर्षात् व्यतिरेकश्चेत्यनयोः संसृष्टिः । तदुक्तं दर्पणे । रूपकं रूपितारोपाद् विषये निरपह्नवे इति आधिक्यमुपमेयस्योपमानान्न्यूनताथवा । व्यतिरेक इति मिथोऽपेक्षायै तेषां स्थितिः संसृष्टिरुच्यते इति च । अस्मिन् सर्गे वंशस्थं वृत्तं, जतौ तु वंशस्थमुदीरितं जराविति तल्लक्षणात् ॥ १ ॥

कीर्तिमण्डलको शुभ्र छत्र बनानेवाले, सूर्यके समान तेजस्वी, नित्यके महोत्सवोंसे प्रकाशमान महाराज नल नामके राजा थे। जिनकी पुनीत कथाओंके रसास्वादनके समक्ष

देवगण तथा विद्वज्जन अमृतको भी हीन समझते थे—अमृतका उतना आदर नहीं करते जितना महाराज नलकी कथाओंका करते थे ॥ १ ॥

**रसैः कथा यस्य सुधावधीरिणी नलस्स भूजानिरभूद्गुणाद्भुतः ।**
**सुवर्णदण्डैकसितातपत्रितज्वलत्प्रतापावलिकीर्तिमण्डलः ॥ २ ॥**

इममेवार्थमन्यथा आह रसैरिति । यस्य नलस्य कथा रसैः स्वादैः रसो गन्धः स्वाद इति विश्वः । सुधाम् अवधीरयति तिरस्करोति तथोक्ता अमृतादतिरिच्यमानस्वादेति यावत् ताच्छील्ये णिनिः । भूर्जाया यस्य स भूजानिः भूपतिरित्यर्थः जायानिङिति बहुव्रीहौ जायाशब्दस्य निङादेशः । स नलः गुणैः शौर्य्यदाक्षिण्यादिभिः अद्भुतः लोकातिशयमहिमेत्यर्थः अभूत् । कथम्भूतः सुवर्णदण्डश्च एकं सितातपत्रञ्च ते द्वन्द्वात् तत्कृताविति ण्यन्तात् कर्म्मणि क्तः । ज्वलत्प्रतापावलिः कीर्त्तिमण्डलञ्च यस्य तथाभूतः । इह कीर्तेः । सितातपत्रत्वरूपणं पूर्वोक्तमपि सुवर्णदण्डवैशिष्ट्यात् राज्ञो गुणाद्भुतत्वेन वैचित्र्यात् न पुनरुक्तिदोषः । अत्रापि पूर्ववद् व्यतिरेकरूपकयोः संसृष्टिः ।

वे महाराज नल गुणोंसे अद्भुत तथा प्रतापकी देदीप्यमाना पंक्तिको स्वर्ण दण्ड बनाकर कीर्तिमण्डलको एक स्वच्छ छत्र बनाने वाले थे। उनकी कथाओंके रसास्वाद अमृतको भी तिरस्कृत करनेवाले थे । अर्थात्—जिनकी कथाओंके श्रवणसे अमृत भी तुच्छ प्रतीत होता था ॥ २ ॥

**पवित्रमत्रातनुते जगद्युगे स्मृता रसक्षालनयेव तत्कथा ।**
**कथं न सा मद्गिरमाविलामपि स्वसेविनीमेव पवित्रयिष्यति ॥ ३ ॥**

सम्प्रति कविः स्वविनयमाविष्करोतिपवित्रमिति । अत्र युगे कलौ इति यावत् नलस्य कथा स्मृता स्मृतिपथं नीतेत्यर्थः। सती जगत् लोकं रसक्षालनयेव जलक्षालनयेत्युत्प्रेक्षा देहधात्वम्बुपारदा इति रसपर्य्याये विश्वः। पवित्रं विशुद्धम् आतनुते करोति, कथा आविलां कलुषामपि सदोषामपीति यावत् स्वसेविनीमेव केवलं स्वकीर्त्तनपरामेवेति भावः मद्गिरं मम वाचं कथं न पवित्रयिष्यति अपि तु पवित्रां करिष्यत्येवेत्यर्थः तथाचोक्तं कर्कोटकस्य नागस्य दमयन्त्या नलस्य च । ऋतुपर्णस्य राजर्षेः कीर्त्तनं कलिनाशनमिति । या स्मृतिमात्रेण शोधनी सा कीर्त्तनात् किमुतेति कैमुत्यन्यायेनार्थान्तरापत्त्या अर्थापत्तिरलङ्कारः। तदुक्तम् एकस्य वस्तुनो भावात् यत्र वस्त्वन्तरं भवेत् । कैमुत्यन्यायतः सा स्यादर्थापत्तिरलङ्क्रियेति ॥ ३ ॥

इस कलियुगमें महाराज नलकी कथाका स्मरण "जलसे प्रक्षालनकी भांति लोकको पवित्र करने वाला है"। अतः वह कथा, मेरी कलुषित वाणीको क्यों न पवित्र करेगी, जो वाणी निरन्तर ही उसकी सेवामें लगी हुई है—अर्थात्—अवश्य ही पवित्र करेगी ॥ ३ ॥

**अधीतिबोधाचरणप्रचारणैर्दशाश्चतस्रः प्रणयन्नुपाधिभिः ।**



**चतुर्दशत्वं कृतवान् कुतस्स्वयं न वेद्मि विद्यासु चतुर्दशस्वयम् ॥ ४ ॥**

अस्य सर्वविद्यापारदर्शित्वमाह अधीतीति। अयं नलः चतुर्दशसु विद्यासु अङ्गानि वेदाश्चत्वारो मीमांसा न्यायविस्तरः। धर्मशास्त्रं पुराणञ्च विद्या ह्येताश्चतुर्दशेत्युक्तासु अधीतिरध्ययनं गुरुमुखात् श्रवणमित्यर्थः बोधः अर्थावगतिः आचरणं तदर्थानुष्ठानं प्रचारणम् अध्यापनं शिष्येभ्यः प्रतिपादनमित्यर्थः तैश्चतुर्भिः उपाधिभिः विशेषणैः आचरणविशेषैरित्यर्थः। उपाधिर्धर्मचिन्तायां कैतवे च विशेषणे इति विश्वः। चतस्रो दशाः अवस्थाः प्रणयन् कुर्वन्नित्यर्थः स्वयं चतस्रो दशा यासां तासां भावः चतुर्दशत्वं त्वतलोर्गुणवचनस्येति पुंवद्भावो वक्तव्य इति स्त्रियाः पुंवद्भावः। संज्ञाजातिव्यतिरिक्ताश्च गुणवचना इति सम्प्रदायः। चतुर्दशसंख्याकरणं कुतः कस्मात् कृतवान् न वेद्मि न जाने इति स्वतःसिद्धस्य स्वयङ्करणं कथं पिष्टपेषणवदिति चतुर्दशानां चतुरावृत्तौ षट्पञ्चाशत्त्वात् कथं चतुर्दशत्वमिति च विरोधाभासद्वयम्। चतुरवस्थत्वमिति तत्परिहारश्च। तदुक्तम् आभासत्वे विरोधस्य विरोधाभास उच्यते इति ॥ ४ ॥

उन महाराज नलने चौदह विद्याओंको अध्ययन, अर्थज्ञान आचरण और प्रचारण इन चार उपाधियोंसे विभूषित करके चतुर्दशत्व कैसे रहने दिया—यह मैं नहीं जानता। अर्थात् चौदह विद्याओंको यदि चारसे गुणित करें तो छप्पन होते हैं। परन्तु, वे विद्याएं चौदह की चौदह ही रहीं ॥ ४ ॥

अमुष्य विद्या रसनाग्रनर्तकी त्रयीव नीताङ्गगुणेन विस्तरम् ।
अगाहताष्टादशतां जिगीषया नवद्वयद्वीपपृथग्जयश्रियाम् ॥ ५ ॥

अथास्यापरा अपि चतस्रो विद्याः सन्तीत्याह अमुष्येति। अमुष्य नलस्य रसनाग्रनर्तकी जिह्वाग्रसञ्चारिणीत्यर्थः। विद्या पूर्वोक्ता सूदविद्या चेति गम्यते रसनाग्रनर्तित्वधर्मादिति भावः। त्रयीव त्रिवेदीव इति वेदास्त्रयस्त्रयीत्यमरः। अङ्गानां शिक्षा कल्पो व्याकरणं निरुक्तं छन्दसां चितिः। ज्यौतिषञ्चेति विज्ञेयं षडङ्गं बुधसत्तमैरित्युक्तानां षण्णां मधुराम्लकषायलवणकटुतिक्तानाञ्च रसानां षण्णां गुणेन आवृत्त्या वैशिष्ट्येन च अथ च अङ्गगुणेन शरीरसामर्थ्येन स्वकीयव्युत्पत्तिविशेषेणेति यावत् विस्तरं वृद्धिं नीता प्रापिता सती नवानां द्वयं नवद्वयं लक्षणया अष्टादशेत्यर्थः तेषां द्वीपानां पृथग्भूता जयश्रियः तासां जिगीषया व्यञ्जकाप्रयोगात् गम्योत्प्रेक्षा। जेतुमिच्छयेवेत्यर्थः अष्टादशताम् अगाहत अभजत। पूर्वोक्तासु चतुर्दशसु विद्यासु विशिष्टव्युत्पत्त्या आयुर्वेदादीनामनुशीलनसौकर्य्यात् तत्पारदर्शित्वेन, सूदविद्यापक्षे च षण्णां रसानाम् उल्वणानुल्वणसमतारूपत्रैविध्येन त्रयीपक्षे च एकैकवेदस्य प्रत्येकशः अङ्गानां शिक्षादीनां षाड्विध्यवैशिष्ट्येन चाष्टादशत्वसिद्धिः। प्रागुक्ताश्चतुर्दश विद्याः। आयुर्वेदो धनुर्वेदो गान्धर्वश्चेति त्रयः। अर्थशास्त्रं चतुर्थन्तु विद्या ह्यष्टादश स्मृता इति। अङ्गविद्यागुणनेन त्रय्या अष्टादशत्वमित्युपाध्याय-विश्वेश्वरभट्टारकव्याख्याने तु अङ्गानि वेदाश्चत्वार इत्याथर्वस्य पृथग्वेदत्वे त्रयीत्वहानिः। त्रय्यन्तर्भावे तु नाष्टादशत्वसिद्धिरिति चिन्त्यम् उपमोत्प्रेक्षयोः संसृष्टिः ॥ ५ ॥

महाराज नलकी जिह्वाके आगे सञ्चरणशीला १८ विद्याएं थीं, अर्थात्—तीन वेद वेदाङ्गोंसे प्रगुणित होकर १८ संख्यान्विता विद्याएं थीं। उन्हें देखकर ऐसा प्रतीत था कि, वे विद्याएं अनिच्छासे ही १८ द्वीपोंकी "विजयश्री" को प्राप्त करने पृथक् चल रही हों ॥ ५ ॥

**दिगीशवृन्दांशविभूतिरीशिता दिशां स कामप्रसभावरोधिनीम् ।**
**बभार शास्त्राणि दृशं द्वयाधिकां निजत्रिनेत्रावतरत्वबोधिकाम् ॥ ६**

अथास्य देवांशत्वमाह दिगीशेति । दिशामीशा दिगीशाः दिक्पाला इन्द्रादयः वृन्दं समूहः तस्य मात्राभिः अंशैः विभूतिरुद्भवः यस्य तथाभूतः । तथाच इन्द्रा यमार्काणामग्नेश्च वरुणस्य च । चन्द्रवित्तेशयोश्चैव मात्रा निर्हृत्य शाश्वतीरिति । भिर्लोकपालानां मात्राभिर्निर्मितो नृप इति च स्मृतिः । दिशाम् ईशिता ईश्वर नलः शास्त्राणि दिशामिति च बहुवचननिर्देशात् इन्द्रादीनामेकैकदिगीशत्वम् अस्य सर्वदिगीशितृत्वमिति व्यतिरेको व्यज्यते । कामम् इच्छां मदनञ्च मदनस्य प्रस बलात् अवरुणद्धीति तथोक्तां स्वेच्छाप्रवृत्तिनिवारिणीं कन्दर्पदहनकारिणीञ्चेत्यर्थः प्रसरावरोधिनीमिति पाठे कामस्य प्रसरः विस्तारः वृद्धिरिति यावत् तमवरुणद्ध तथैवार्थः । निजम् आत्मीयं यत् त्रिनेत्रावतरत्वं दिगीशेश्वरांशप्रभवत्वं तस्य धिकां ज्ञापिकाम् अत्र तृजकाभ्यां कर्त्तरीति कृद्योगसमासस्यैव निषेधात् शेषप मासः तत्प्रयोजक इत्यादि सूत्रकार प्रयोगदर्शनादिति बोध्यम् । द्वयाधिकां तृत मित्यर्थः दृशं नेत्रं बभार दध्रे । एतेन अस्य शास्त्रेणैव कार्य्यदर्शित्वं व्यज्य शास्त्राणि दृशमिति उद्देश्यविधेयरूपकर्म्मद्वयम् । अवतरेत्यलप्प्रत्ययान्तेन तरश सुप्सुपेति समासः न तृपसृष्टात् प्रत्ययोत्पत्तिः । अत्र शास्त्राणि दृशमिति व्यस पकम् ॥ ६ ॥

इन्द्रादि लोकपालोंके अंशोंको धारण करनेवाले महाराज नल शास्त्रोंमें तृतीय रखते थे जो दृष्टि कामेच्छाको दबाती हुई उन्हें त्रिनेत्र शङ्कर भगवान्का अंश बताती [ भगवान् शिवने कामदेवको तृतीय नेत्रसे जलाया था ] ॥ ६ ॥

**पदैश्चतुर्भिस्सुकृते स्थिरीकृते कृतेऽमुना के न तपः प्रपेदिरे ।**
**भुवं यदेकाङ्घ्रिकनिष्ठया स्पृशन् दधावधर्मोऽपि कृशस्तपस्विताम् ॥ ७**

अथास्य प्रभावं दर्शयति—पदैरिति । अमुना नलेन कृते सत्ययुगे सुकृते धर्मे रूपत्वात् चतुर्भिः पदैः चरणैः । (तपः परं कृतयुगे त्रेतायां ज्ञानमुच्यते । द्वापरे मेवाहुर्दानमेकं कलौ युगे इत्युक्तचतुर्विधैरिति भावः स्थिरीकृते निश्चलीकृते यावत् के जनाः तपः चान्द्रायणादिरूपं कठिनं व्रतं का कथा ज्ञानादीनामिति न प्रपेदिरे ? अपि तु सर्व एव तपश्चेरुरित्यर्थः । यत् यतः अधर्मोऽपि का कथा अन मित्यपिशब्दार्थः कृशः दुर्बलः सन् एकया अङ्घ्रेश्चरणस्य कनिष्ठया कनिष्ठया अ

र्थः सुवं स्पृशन् कृतेऽपि अधर्मस्य लेशतः सम्भवादंशेनेति भावः तपस्वितां तापसत्वं दीनत्वञ्च मुनिदीनौ तपस्विनाविति विश्वः । दधौ धारयामास । अस्य शासनादधर्मोऽपि धर्मेषु आसक्तोऽभूत् । किमुत अन्य इति कैमुत्यन्यायादर्थान्तरापत्त्या अर्थापत्तिरलङ्कारः अधर्मोऽपि धार्मिक इति विरोधश्चेत्यनयोः संसृष्टिः ॥ ७ ॥

उन महाराज नलने सत्ययुगमें धर्मको चार भागों में—तप, ज्ञान, यज्ञ और दान में—स्थिर किया था । फिर भला कौन ऐसा व्यक्ति था जो तप न करता ? यहां तक कि, अधर्म भी कृशकाय होकर, एक पैरकी छोटी अंगुलिपर पृथ्वीपर खड़ा होकर तपस्यामें रत हो गया ॥७॥

यदस्य यात्रासु बलोद्धतं रजः स्फुरत्प्रतापानलधूममञ्जिम ।
तदेव गत्वा पतितं सुधाम्बुधौ दधाति पङ्कीभवदङ्कतां विधौ ॥ ८ ॥

अथास्य सप्तभिः प्रतापं वर्णयति यदित्यादिभिः । अस्य नलस्य यात्रासु जैत्रयानेषु बलोद्धतं सैन्योत्क्षिप्तं स्फुरतः ज्वलतः प्रतापानलस्य यो धूमः तस्येव मञ्जिमा मनोहारित्वं यस्य तथोक्तं सप्तम्युपमानेत्यादिना बहुव्रीहिः । मञ्जुशब्दादिमनिच्प्रत्ययः । यत् रजः धूलिः, तदेव गत्वा उत्क्षेपवेगादिति भावः सुधाम्बुधौ क्षीरनिधौ पतितम् अतएव पङ्कीभवत् सत् विधौ चन्द्रे तद्वासिनीति भावः अङ्कतां कलङ्कत्वं दधाति, अत्रापि व्यञ्जकाप्रयोगात् गम्योत्प्रेक्षा तथाच कलङ्कत्वं दधातीवेत्यर्थः ॥ ८ ॥

यात्राके समय महाराज नलकी सेना द्वारा उड़ाई हुई धूलि जो प्रतापरूपी अग्निके धूम्रके सदृश थी अमृतके समुद्रमें जा गिरी इसी कारण चन्द्रमें कालिमा आ गयी है क्योंकि, चन्द्रकी उत्पत्ति सुधाके सागरसे ही है ॥ ८ ॥

स्फुरद्धनुर्निस्वनतद्घनाशुगप्रगल्भवृष्टिव्ययितस्य सङ्गरे ।
निजस्य तेजश्शिखिनः परश्शता वितेनुरङ्गारमिवायशः परे ॥ ९ ॥

स्फुरदिति । सङ्गरे युद्धे शतात् परे परःशताः शताधिका इत्यर्थः बहव इति यावत् पञ्चमीति योगविभागात् समासः राजदन्तादित्वादुपसर्जनस्य परनिपातः पारस्करादित्वात् सुडागमश्च । परे शत्रवः स्फुरन्तौ प्रसरन्तौ धनुर्निस्वनौ चापघोषौ इन्द्रचापगर्जिते च यस्य यत्र वा तथोक्तः सः नल एव घनः मेघः तस्य आशुगानां शराणाम् अन्यत्र आशुगा वेगगामिनी यद्वा आशुगेन वेगगामिना वायुना या प्रगल्भा महती वृष्टिः आशुगौ वायुविशिखावित्यमरः । तया व्ययितस्य निर्वापितस्य विपूर्वादयतेः कर्म्मणि क्तः । निजस्य तेजःशिखिनः प्रतापाग्नेः अङ्गारमिव अयशः अपकीर्त्तिं वितेनुः विस्तारितवन्तः । पराजिता इति भावः । अत्र रूपकोत्प्रेक्षयोरङ्गाङ्गिभावः सङ्करः ॥ ९ ॥

युद्धमें, चमकते इन्द्र धनुष तथा गरजते बादलोंकी वृष्टिके समान बाणवर्षण करनेवाले उन महाराज नलके सम्मुख उनके शत्रुओंने बुझे हुए अङ्गारोंके समान अपने साहसरूपी आगकी अकीर्ति फैलायी ॥ ९ ॥

अनल्पदग्धारिपुरानलोज्ज्वलैर्निजप्रतापैर्वलयं ज्वलद् भुवः ।
प्रदक्षिणीकृत्य जयाय सृष्टया रराज नीराजनया स राजघः ॥ १० ॥

अनल्पेति । राज्ञः प्रतिपक्षानिति भावः हन्तीति राजघः शत्रुघातीत्यर्थः रा
उपसंख्यानमिति निपातः । स नलः अनल्पं दग्धानि अरिपुराणि शत्रुराष्ट्राणि
तथोक्ताः अनलवत् उज्ज्वलाः तैः निजप्रतापैः कोपदण्डसमुत्थतेजोभिः स प्रतापः प्रभ
वश्च यत्तेजः कोषदण्डजमित्यमरः । ज्वलत् दीप्यमानं भुवः वलयं भूमण्डलं प्रदक्षिणीकृत्य
णीकृत्य प्रदक्षिणं परिभ्रम्य क्रमेण सर्वदिग्विजेतृत्वादिति भावः । जयाय सृष्टया
भूजयनिमित्तं कृतयेत्यर्थः पुरोहितैरिति शेषः नीराजनया आरात्रिकया रराज शुशुभे
दिशो विजित्य प्रत्यावृत्तं विजिगीषुं स्वपुरोहिताः मङ्गलसंविधानाय नीराजयन्तीति
प्रसिद्धिः । केचित्तु निजप्रतापैरिव जयाय सृष्टया जयार्थयेवेत्यर्थः नीराजनया आरा
त्रिकया ज्वलत् दीप्यमानं भुवो वलयं भूचक्रं प्रदक्षिणीकृत्य प्रदक्षिणं परिभ्राम्य रराज
अत्र ज्वलत्प्रतापानलो नानादिग्जैत्रयात्रायां प्राच्यादिप्रादक्षिण्येन भूमण्डलं परिभ्र
निजप्रतापनीराजनया भूदेवतां नीराजयन्निव रराजेत्युत्प्रेक्षा व्यञ्जकाप्रयोगाद्गम्या
इति व्याचक्षते तन्न समीचीनं निजप्रतापैरित्यस्य नीराजनयेत्यनेन सामानाधिकरण्या
सङ्गतेरिति ॥ १० ॥

उन शत्रुघाती महाराज नलने जयकी इच्छासे सम्पूर्ण अरिपुरोंको अपने प्रताप
अग्निसे जलाते हुए पृथ्वीकी प्रदक्षिणा की और प्रदीप्त आरतीसे प्रकाशित शोभा प्राप्त की ॥

निवारितास्तेन महीतलेऽखिले निरीतिभावं गमितेऽतिवृष्टयः ।
न तत्यजुर्नूनमनन्यसंश्रयाः प्रतीपभूपालमृगीदृशां दृशः ॥ ११ ॥

निवारिता इति । तेन नलेन अखिले समग्रे महीतले न सन्ति ईतयः अति
वृष्ट्यादयः यत्र तत् निरीतिः तस्य भावः तम् ईतिराहित्यमित्यर्थः ईतयश्चोक्ता
अतिवृष्टिरनावृष्टिः शलभा मूषिकाः खगाः । प्रत्यासन्नाश्च राजानः षडेता ईतयः स्मृ
इति गमिते प्रापिते सति निवारिताः स्वराष्ट्रात् निराकृता इत्यर्थः अतिवृष्टयः ना
अन्यः संश्रयः आश्रयः यासां तथाभूताः सत्यः प्रतीपभूपालानां प्रतिपक्षनृपतीनां
मृगीदृशः मृगनयनाः कान्ताः तासां दृशः नयनानि न तत्यजुः । नूनं मन्ये इत्य
उत्प्रेक्षावाचकमिदं तदुक्तं दर्पणे । मन्ये शङ्के ध्रुवं प्रायो नूनमित्येवमादयः । उत्प्रे
व्यञ्जकाः शब्दा इवशब्दोऽपि तादृश इति । नलनिहतभर्तृका राजपत्न्यः सततं रु
रिति भावः ॥ ११ ॥

उन महाराज नलके द्वारा "अतिवृष्टि" समस्त पृथ्वीतल पर निरीति भावको प्र
हुई । अर्थात्—जब पृथ्वीतलपर कहीं भी अतिवृष्टिको रहनेका आश्रय न था । तब नि
सित एवं आश्रयहीना अतिवृष्टि महाराज नलके शत्रुओंकी अङ्गनाओंके आँखोंमें जाकर र
लगी । [अपने पतियोंकी मृत्युसे शत्रुओंकी स्त्रियां सतत रोती थीं जिससे ऐसा
होता था कि वे आंसू नहीं हैं अपितु "अतिवृष्टि" है । ] ॥ ११ ॥

सितांशुवर्णैर्वयति स्म तद्गुणैर्महासिवेम्नस्सहकृत्वरी बहुम् ।
दिगङ्गनाङ्गाभरणं रणाङ्गणे यशःपटं तद्भटचातुरी तुरी ॥ १२ ॥

सितांश्विति । महान् असिरेव वेमा वायदण्डः पुंसि वेमा वायदण्ड इत्यमरः । तस्य सहकृत्वरी सहकारिणी सहे चेति करोतेः क्वनिप्प्रत्ययः । वनोरचेति ङीप् प्रश्च । तस्य नलस्य भटानां सैनिकानां यद्वा स नल एव भटः वीरः तस्य चातुरी चतुरता नैपुण्यमिति यावत् एव तुरी वयनसाधनं वस्तुविशेष इत्यर्थः माकु इति प्रसिद्धा रण एव अङ्गनं चत्वरं तस्मिन् सितांशुवर्णैः शुभ्रैरित्यर्थः तस्य नलस्य गुणैः शौर्यादिभिः तन्तुभिश्च दिश एव अङ्गनाः तासाम् अङ्गाभरणम् अङ्गभूषणम् अङ्गावरणमिति पाठे अङ्गाच्छादनं बहुं यश एव पटः वसनं तं वयति स्म ततान । साङ्गरूपकमलङ्कारः । सङ्ग्रामे तथा नैपुण्यमनेन प्रकटितं यथा तेन सर्वा दिशो यशसा पूरिता इति भावः ॥ १२ ॥

महाराज नलके सैनिकोंकी चतुरतारूपी ढरकी उनके तेज तलवार रूपी करघेके साथ, रणक्षेत्रमें चन्द्र सदृश सफेद गुणों ( तागों ) से दिशारूपी नारियोंके अङ्गोंको ढकनेके लिए यशरूपी वस्त्र बुनती थी ॥ १२ ॥

प्रतीपभूपैरिव किं ततो भिया विरुद्धधर्मैरपि भेत्तृतोज्झिता ।
अमित्रजिन्मित्रजिदोजसा स यद्विचारदृक्चारदृगप्यवर्तत ॥ १३ ॥

प्रतीपेति । प्रतीपाः प्रतिकूलाः भूपा राजानः तैः विरुद्धधर्मैः असमानाधिकरणधर्मैः विपरीतवृत्तिभिरित्यर्थः अपि ततः नलात् भिया भयेनेव हेतुना भेत्तृता स्वाश्रयभेदकत्वं परोपजाप इत्यर्थः उज्झिता त्यक्ता किम् ? यत् यस्मात् स नलः ओजसा तेजसा अमित्रान् शत्रून् जयतीति तथोक्तः मित्रं सूर्य्यं जयतीति तथाभूतः अत्र यः खलु अमित्रजित् स कथं मित्रजिदिति विरोधाभासः परिहारस्तु पूर्वमुक्तः । तथा विचारेण पश्यतीति विचारदृक् चारैः गूढपुरुषैः पश्यतीति चारदृक् राजानश्चारचक्षुष इति चारैः पश्यन्ति राजान इति च नीतिशास्त्रम् । अत्रापि यो विचारदृक् स कथं चारदृग् भवतीति विरोधाभासः परिहारस्तु पूर्वमुक्तः । अवर्त्तत आसीत् अपिर्विरोधे । सूर्य्यतेजसं चारदृशञ्च नलं ज्ञात्वा शत्रवः भयात् परस्परोपजापादिवैरभावं तत्यजुरिति भावः । अत्र विरोधोत्प्रेक्षयोरङ्गाङ्गिभावः ॥ १३ ॥

महाराज नलके प्रभावसे परस्पर विरोधी गुणोंने भी, विरोधी राजाओंके समान, अपने अपने स्वभावको उन महाराज नलके भयसे त्याग दिया । यद्यपि महाराज नल प्रभावसे सूर्यको जीतनेवाले परन्तु, 'मित्रजित्" न थे । अर्थात् शत्रु और मित्रको जीतनेवाले होकर भी वे "मित्रजित्" न थे । इसी प्रकार वे गुप्तचरोंके द्वारा देखनेवाले ( चार चक्षु ) होनेपर भी विचार शक्तिसे देखते थे—विचारपूर्वक कार्य करते थे ॥ १३ ॥



तदोजसस्तद्यशसः स्थिताविमौ वृथेति चित्ते कुरुते यदा यदा ।

तनोति भानोः परिवेषकैतवात्तदा विधिः कुण्डलनां विधोरपि ॥१४॥

तदिति । तस्य नलस्य ओजः तेजः प्रताप इत्यर्थः तस्य तथा तस्य नलस्य य तस्य स्थितौ सत्तायाम् इमौ भानुविधू वृथा निरर्थकौ इति चित्ते यदा यदा कु विवेचयतीत्यर्थः विधिः तदा तदा परिवेषः परिधिः परिवेषस्तु परिधिरुपसूर्यकमण्ड इत्यमरः । एव कैतवं छद्मं तस्मात् भानोः सूर्यस्य विधोरपि चन्द्रस्य च कुण्डल अतिरिक्ततासूचकवेष्टनमित्यर्थः करोति अधिकाक्षरवर्जनार्थं लेखकादिवदिति भाव विजितचन्द्रार्कौ अस्य कीर्त्तिप्रतापौ इति तात्पर्य्यम् । अत्र प्रकृतस्य परिवे प्रतिषेधेन अप्रकृतस्य कुण्डलनस्य स्थापनात् अपह्नुतिरलङ्कारः तदुक्तं दर्पणे । प्रकृ प्रति षिध्यान्यस्थापनं स्यादपह्नुतिरिति । प्राचीनास्तु परि परिवेषमिषेण सूर चन्द्रमसोः कुण्डलनोत्प्रेक्षणात् सापह्नवोत्प्रेक्षा सा च गम्या व्यञ्जकाप्रयो दित्याहुः ॥ १४ ॥

उन महाराज नलके प्रताप और यशके समक्ष ये सूर्य और चन्द्र वृथा हैं । जब-जब बातको ब्रह्माजी सोचते हैं तब तब वे सूर्य और चन्द्रके चारों ओर मण्डल बनानेके बह से शून्य बना देते हैं । [जैसे-लोकमें लोग किसी वृथा लेखके चारों ओर शून्य बना देते हैं]।

अयं दरिद्रो भवितेति वैधसीं लिपिं ललाटेऽर्थिजनस्य जाग्रतीम् ।
मृषा न चक्रेऽल्पितकल्पपादपः प्रणीय दारिद्र्यदरिद्रतां नृपः ॥ १५ ॥

अस्य वदान्यतां द्वाभ्यां वर्णयति अयमिति । विभज्येति च । अल्पितः अल्पीकृ निर्जित इति यावत् दानशौण्डत्वादिति भावः कल्पपादपः कल्पतरुः वाञ्छितफलप्र वृक्ष इति यावत्, येन तथाभूतः स नृपः दारिद्र्यस्य अभावस्य निर्धनत्वस्य इ यावत् दरिद्रताम् अभावमिति यावत् प्रणीय कृत्वा दरिद्रेभ्यः प्रभूतधनदा तेषां दारिद्र्यम् अपनीयेति भावः अयं दरिद्रः अभाववानिति यावत् भविता इ अर्थिजनस्य याचकजनस्य ललाटे जाग्रतीं दीप्यमानामिति यावत् वेधस इयं वैध तां लिपिं मृषा मिथ्या न चक्रे न कृतवान् । विधातुर्लिपौ सामान्यतः दरिद्रशब्द स्थितौ दरिद्रशब्दस्य यथायथं धनदरिद्रः पापदरिद्रः ज्ञानदरिद्र इत्यादिप्रयोगदर्शना अभावमात्रबोधकत्वमङ्गीकृत्य राजा दरिद्राणां धनाभावरूपं दारिद्र्यमपाचकार इ निष्कर्षः ॥ १५ ॥

उन महाराज नलने अपने त्याग और शीलसे कल्पवृक्षको अल्पीभूत करते हुए प्रा जनोंके ललाटोंमें अङ्कित ब्रह्माजीके वाक्योंको वृथा न किया । अर्थात्—ब्रह्माजीने जिन ललाटोंमें लिखा था "ये जन दरिद्र होंगे" उन वाक्योंको ज्योंका त्यों रहने दिया अ उनमें थोड़ा सा सुधार कर दिया कि, "ये जन दारिद्र्यके दरिद्र होंगे" ॥ १५ ॥

विभज्य मेरुर्न यदर्थिसात्कृतो न सिन्धुरुत्सर्गजलव्ययैर्मरुः ।

अमानि तत्तेन निजायशोयुगं द्विफालबद्धाश्चिकुराः शिरस्स्थितम् ॥१६

विभज्येति । मेरुः हेमाद्रिः विभज्य विभक्तीकृत्य अर्थिसात् अर्थिभ्यो देयः न कृतः अर्थिने देयमिति देयेत्राचेति सातिप्रत्ययः । सिन्धुः समुद्रः उत्सर्गजलानां व्ययैः दानाम्बुप्रक्षेपैः मरुः निर्जलदेशः न कृतः इति यत् तत् तस्मात् तेन नलेन द्विफालबद्धाः द्वयोः फालयोः शिरःपार्श्वयोः बद्धा रचिता इति यावत् फलतेर्विशरणार्थे अप्प्रत्ययः । विलासिनां पुंसां सीमन्तितशिरोरुहत्वात् चिकुराणां द्विफालबद्धत्वमिति भावः द्विधा विभक्ता इति यावत् चिकुराः केशाः चिकुरः कुन्तलो वालः कचः केशः शिरोरुह इत्यमरः । शिरःस्थितं मस्तकधृतमिति भावः निजं स्वीयम् अयशोयुगम् अपकीर्त्तिद्वयं पूर्वोक्तमेरुविभागासिन्धुजलव्ययाकरणजनितमिति भावः अमानि केशरूपेण द्विधास्थितं स्वशिरसि अयशोयुगमेव तिष्ठति इति अमन्यत इत्यर्थः । अयशसः पापरूपत्वात् कृष्णवर्णत्वेन वर्णनं कविसमयसिद्धं तथाच मालिन्यं व्योम्नि पापे इत्यादि । उद्देश्यविधेयरूपं कर्म्मद्वयम् । केशेषु कार्ष्ण्यसाम्यात् अयशोरूपणमिति व्यस्तरूपकम् ॥ १६ ॥

उन महाराज नलने मेरु पर्वतको प्रार्थियोंके अधीन न किया तथा समुद्रके जलको दान विनियोगसे मरुस्थल न बनाया । उक्त दोनों वस्तुओंको उन्होंने अपना अयश समझकर अपने शिरके ऊपर मांग काढ़े हुए बालोंकी भांति समझा ॥ १६ ॥

अजस्रमभ्यासमुपेयुषा समं मुदैव देवः कविना बुधेन च ।
दधौ पटीयान् समयं नयन्नयं दिनेश्वरश्रीरुदयं दिने दिने ॥ १७ ॥

अस्य विद्वज्जनसम्माननामाह अजस्रमिति । दिनेश्वरस्येव श्रीर्यस्य अन्यत्र दिने ईश्वरस्येव श्रीः यस्य तथाभूतः पटीयान् समर्थतरः अयं देवो राजा सूर्यश्च देवः सूर्ये यमे राज्ञीति विश्वः । अजस्रं सततम् अभ्यासं सान्निध्यम् उपेयुषा प्राप्तवता सहचारिणा इति यावत् उपेयिवाननाश्वाननूचानश्चेति निपातः । कविना काव्यशास्त्रविदा पण्डितेन शुक्रेण च बुधेन विदुषा धर्म्मशास्त्रादिदर्शिनेति भावः सौम्येन च समं सह मुदैव आनन्देनैव न तु दुःखेनेत्येवकारार्थः । समयं नयन् अतिवाहयन् दिने दिने प्रतिदिनम् उदयम् अभ्युन्नतिम् आविर्भावञ्च दधौ धारयामास । अत्र श्लेषालङ्कारः ॥ १७ ॥

सूर्यकी प्रभाके समान विभाको धारण करनेवाले वे महाराज नल कवियों तथा पण्डितों के साथ अपने समयको प्रसन्नताके साथ व्यतीत करते हुए इस प्रकारसे उदीयमान मालूम होते थे जिस प्रकार सूर्य, शुक्र और बुधके साथ हर्षसे नित्य उदीयमान होते हैं ॥ १७ ॥

अधोविधानात् कमलप्रवालयोश्शिरस्सु दानादखिलक्षमाभुजाम् ।
पुरेदमूर्ध्वं भवतीति वेधसा पदं किमस्याङ्कितमूर्ध्वरेखया ॥ १८ ॥

अध इति । कमलप्रवालयोः पद्मपल्लवयोः कर्म्मभूतयोः अधोविधानात् अधःकरणात् न्यक्करणादिति यावत् । तथा अखिलानां सर्वेषां क्षमाभुजां प्रतिकूलवर्त्तिनां राज्ञां शिरःसु दानात् विधानात् इदम् अस्य नलस्य पदम् ऊर्ध्वम् उत्कृष्टम् ऊर्ध्वस्थितञ्च पुरा भवति भविष्यतीत्यर्थः यावत् पुरा निपातयोर्लट् इति पुराशब्दयोगात् भविष्यदर्थे

लट्। इति इदं मत्वा इति शेषः गम्यमानार्थत्वादप्रयोगः। वेधसा विधात्रा कर्त्रा ऊर्ध्वरेखया अङ्कितं चिह्नितं किम् ? ऊद्ध्वरेखाङ्कितपदः सर्वोत्कर्षं भजेत् पुमानिति सा मुद्रिकाः। सौन्दर्य्यसुलक्षणाभ्यां युक्तमस्य पदमिति भावः ॥ १८ ॥

क्या ब्रह्माजीने उन महाराज नलके चरणमें ऊर्ध्वरेखा इसी लिए अङ्कित की है कि भविष्यत्में वे सबसे सुन्दर एवं प्रभावशाली होंगे ? क्योंकि, उनका चरण, पल्लव और कमलको तिरस्कृत करने वाला है और समस्त राजाओंके शिरोंपर रहने वाला है ॥ १८ ॥

**जगज्जयं तेन च कोशमक्षयं प्रणीतवान् शैशवशेषवानयम् ।**
**सखा रतीशस्य ऋतुर्यथा वनं वपुस्तथालिङ्गदथास्य यौवनम् ॥ १९ ॥**

अथ अस्य यौवनागमं क्रमेण वर्णयति जगदित्यादिभिः। अयं नलः शैशवशेषवान् ईषदवशिष्टशैशव एवेत्यर्थः जगतां जयं तेन च जयेनेत्यर्थः कोषं धनजातम् अक्षयं प्रणीतवान् कृतवान्। अथानन्तरं रतीशस्य कामस्य सखा ऋतुः वसन्त इत्यर्थः वनं यथा यौवनम् अस्य नलस्य वपुः शरीरं तथा आलिङ्गत् संश्लिष्टवत्। उपमालङ्कारः ॥१९

उन महाराज नलने बाल्यावस्था समाप्त की तथा संसारपर विजय भी प्राप्त की और उस विजयसे अपना अक्षय कोश भरा। किं बहुना, जैसे रतिके पति (कामदेव) का मित्र वसन्त वनका आलिङ्गन करता है वैसे ही यौवनने भी उनके शरीरका आलिङ्गन किया [उनकी युवावस्था प्रारम्भ हो गयी। ] ॥ १९ ॥

**अधारि पद्मेषु तदङ्घ्रिणा घृणा क तच्छयच्छायलवोऽपि पल्लवे ।**
**तदास्यदास्येऽपि गतोऽधिकारितां न शारदः पार्विकशर्वरीश्वरः ॥२०॥**

अधारीति। तस्य नलस्य अङ्घ्रिणा चरणेन पद्मेषु घृणा अवज्ञा घृणा जुगुप्सा कृपयोरिति विश्वः। अधारि धृता। पल्लवे नवकिसलये तस्य नलस्य शयः पाणिः पञ्चशाखः शयः पाणिरित्यमरः। तस्य छाया तच्छयच्छायं विभाषेत्यादिना समासे छायाया नपुंसकत्वम्। तस्य लवो लेशोऽपि क ? नैव लेशोऽस्तीत्यर्थः। शरदि भवः शारदः शरत्कालीन इत्यर्थः। सन्धिवेलादृतुनक्षत्रेभ्योऽण्प्रत्ययः। पर्वणि पौर्णमास्यां भवः पार्विकः पार्वणेति पाठान्तरं कालाट्ठञस्तद्धित इति टिलोपः। स च असौ शर्वरीश्वरश्चेति तथोक्तः पूर्णचन्द्र इत्यर्थः तस्य नलस्य यत् आस्यं मुखं तस्य दास्ये कैङ्कर्य्येऽपि अधिकारितां योग्यतां न गतः न प्राप्तः। एतेनास्य पाणिपादवदनानामनौपम्यं व्यज्यते। अत्र अङ्घ्र्यादीनां पद्मादिषु घृणाद्यसम्भवेऽपि सम्बन्धोक्तेः अतिशयोक्तिः अलङ्कारः ॥ २० ॥

उन महाराज नलके चरणने कमलोंपर घृणा की। उनके चरणके सामने कमल तुच्छ प्रभावाले थे। उनके हाथोंकी शोभाके सामने अणुमात्र भी शोभा वाले पल्लव न थे। शरत्कालिक चन्द्र उनके मुखकी दासता भी नहीं कर सकता था ॥ २० ॥

**किमस्य रोम्णां कपटेन कोटिभिर्विधिर्न रेखाभिरजीगणद्गुणान् ।**
**न रोमकूपौघमिषाज्जगत्कृता कृताश्च किं दूषणशून्यविन्दवः ॥ २१ ॥**

किमिति । विधिर्विधाता अस्य नलस्य गुणान् रोम्णां कपटेन व्याजेन कोटिभिः कोटिसंख्याभिः लेखाभिः न अजीगणत् न गणितवान् किम् ? अपितु गणितवानेवेत्यर्थः । तथा जगत्कृता स्रष्ट्रा विधिनेत्यर्थः रोम्णां कूपाः विवराणि तेषाम् ओघः समूह एव मिषं व्याजः तस्मात् दूषणानां दोषाणां शून्यस्य अभावस्य विन्दवः ज्ञापकचिह्नभूता वर्त्तुलरेखाः न कृताः किम् ? अपि तु कृता एवेत्यर्थः । अस्मिन् गुणा एव सन्ति न कदाचित् दोषा इति भावः । अत्र रोम्णां रोमकूपाणाञ्च कपटमिषशब्दाभ्याम् अपह्नवे गुणगणनालेखत्व-दूषणशून्यविन्दुत्वयोरुत्प्रेक्षणात् सापह्नवोत्प्रेक्षयोः संसृष्टिः ॥ २१ ॥

क्या ब्रह्मदेवने उन महाराज नलके गुणोंको करोड़ों रोमावलीके व्याज ( कपट ) से न गिना ? और क्या ब्रह्मदेवने उनके शरीरमें रोमकूपके मिससे दूषणाभावज्ञापक वर्तुल रेखा तक न रची ? [ उन महाराज नलमें गुण ही गुण थे दोष थे ही नहीं । ] ॥ २१ ॥

अमुष्य दोर्भ्यामरिदुर्गलुण्ठने ध्रुवं गृहीतार्गलदीर्घपीनता ।
उरश्श्रिया तत्र च गोपुरस्फुरत्कपाटदुर्धर्षतिरःप्रसारिता ॥ २२ ॥

अमुष्येति । अमुष्य नलस्य दोर्भ्यां भुजाभ्यां कर्त्तृभ्याम् अरिदुर्गलुण्ठने शत्रुदुर्गभञ्जने अर्गलस्य कपाटविष्कम्भदारुविशेषस्य तद्विष्कम्भोऽर्गलं न ना इत्यमरः । दीर्घञ्च पीनञ्च तयोर्भावः दीर्घपीनता आयतपीवरत्वमित्यर्थः किञ्चेति चार्थः उरसः वक्षसः श्रिया लक्ष्म्या कर्त्र्या तत्र अरिदुर्गलुण्ठने गोपुरेषु पुरद्वारेषु पुरद्वारन्तु गोपुरमित्यमरः । स्फुरतां राजतां कवाटानां दुर्द्धर्षाणि च तानि तिरःप्रसारीणि च तेषां भावः तत्ता अप्रधृष्यत्वं तिर्य्यक्प्रसारित्वञ्चेत्यर्थः गृहीता ध्रुवम् अवलम्बिता किम् ? ध्रुवमित्युत्प्रेक्षाव्यञ्जकं । तदुक्तं दर्पणे । मन्ये शङ्के ध्रुवं प्रायो नूनमित्येवमादयः । उत्प्रेक्षाव्यञ्जकाः शब्दा इव शब्दोऽपि तादृश इति । दीर्घबाहुः कवाटवक्षाश्चायमिति भावः ॥ २२ ॥

उन महाराज नलके बाहुदण्ड शत्रुरूपी किलोंको तोड़ने-फोड़नेमें बेवड़ेके ( जो दरवाजे को बन्द करके लगाया जाता था ) समान बड़े और मोटे तथा मजबूत थे एवं उनका वक्षःस्थल दृढ़ नगर द्वारके किवाड़के सदृश मजबूत था ॥ २२ ॥

स्वकेलिलेशस्मितनिर्जितेन्दुनो निजांशदृक्तर्जितपद्मसम्पदः ।
अतद्द्वयीजित्वरसुन्दरान्तरे न तन्मुखस्य प्रतिमा चराचरे ॥ २३ ॥

स्वकेलीति । स्वस्य केलिलेशः विलासविन्दुर्यत् स्मितं मन्दहसितं तेन निन्दितः तिरस्कृतः इन्दुश्चन्द्रः येन तथोक्तस्य स्मितरूपकिरणेन निर्जितशीतांशुमयूखस्येति भावः निजांशः स्वावयवः या दृक् नेत्रं तया तर्जिता निर्भर्त्सिता पद्मानां सम्पद् सौभाग्यं येन तथाभूतस्य तन्मुखस्य नलमुखस्य तयोश्चन्द्रपद्मयोः द्वयी तस्या जित्वरं जयशीलं ततोऽधिकमिति यावत् सुन्दरान्तरं नास्ति यस्मिन् तथाविधे चराचरे जगति चराचरं स्याजगदिति विश्वः प्रतिमा उपमानं न आसीदिति शेषः । अत्र चन्द्रारविन्दजयविशेषण-

तया मुखस्य निरौपम्यप्रतिपादनात् पदार्थहेतुकं काव्यलिङ्गमलङ्कारः । तदुक्तं दर्पणे हेतोर्वाक्यपदार्थत्वे काव्यलिङ्गं निगद्यते इति ॥ २३ ॥

उन महाराज नलने खेल-खेलमें अपनी मृदु मुस्कानसे चन्द्रको जीत लिया । अर्थात् उनके स्मितके सामने चन्द्रप्रभा हीन लगती थी । अपने शरीरके एक अंशसे—आंखसे कमल श्री को भी जीत लिया । इन दोनों वस्तुओंके जीतनेकी क्षमता किसीमें न थी। भला, विश्वमें उनके मुखकी उपमा कहां ? ॥ २३ ॥

**सरोरुहं तस्य दृशैव तर्जितं जिताः स्मितेनैव विधोरपि श्रियः ।**
**कुतः परं भव्यमहो महीयसी तदाननस्योपमितौ दरिद्रता ॥ २४ ॥**

उक्तार्थं भङ्ग्यन्तरेणाह सरोरुहमिति । तस्य नलस्य दृशैव नयनेनैव सरोरुहं पद्मं तर्जितं न्यक्कृतम् । स्मितेनैव विधोश्चन्द्रस्य श्रियः कान्तयः अपि जिताः तिरस्कृताः परम् अन्यत् आभ्यामिति शेषः भव्यं रम्यं वस्तु कुतः ? न कुत्राप्यस्तीत्यर्थः । अहो आश्चर्यं तस्य नलस्य यत् आननं मुखं तस्य उपमितौ तोलने महीयसी अतिमहती दरिद्रता अभावः अत्यन्ताभाव इत्यर्थः सर्वथा निरुपममस्य मुखमित्याश्चर्यम् । अत्र वाक्यार्थहेतुकं काव्यलिङ्गमलङ्कारः ॥ २४ ॥

उन महाराज नलकी आंखोंने कमलोंको और मृदु मुस्कानने चन्द्रको जीत लिया। ये ही दोनों वस्तुएं अति रम्य मानी जाती हैं । अतः पृथ्वीपर उनके मुखकी उपमा योग्य वस्तुकी दरिद्रता प्रकट होने लगी । [ संसारमें कोई वस्तु ऐसी न थी जिससे उनके मुखकी उपमा दी जा सकती ] ॥ २४ ॥

**स्वबालभारस्य तदुत्तमाङ्गजैस्समं चमर्यैव तुलाभिलाषिणः ।**
**अनागसे शंसति बालचापलं पुनः पुनः पुच्छविलोलनच्छलात् ॥२५॥**

स्वबालेति । चमरी मृगीविशेषः तस्य नलस्य उत्तमाङ्गजैः शिरोरुहैः समं सह तुलाभिलाषिणः सादृश्यकाङ्क्षिणः स्वबालभारस्य निजलोमनिचयस्य अनागसे अनपराधाय नीचस्य उत्तमैः सह साम्याभिगमोऽपि महान् अपराध इति भावः । क्वचित्तु भावे नञ्समासो दृश्यते । पुनः पुनः पुच्छस्य लाङ्गूलस्य विलोलनं विचालनम् एव छलं तस्मात् बालचापलं रोमचाञ्चल्यम् अथच शिशुचापल्यं शंसति कथयति बालचापलं सोढव्यमिति धियेति भावः । अत्र पुच्छविलोलनप्रतिषेधेन अन्यस्य बालचापलस्य स्थापनादपह्नुतिरलङ्कारः तदुक्तं दर्पणे । प्रकृतं प्रतिषिध्यान्यस्थापनं स्यादपह्नुतिरिति ।

चमरी मृगी के पूंछके बालों में एवं उन महाराज नलके बालोंमें सादृश्य दिखलाई पड़ता था । अतः बाल चांचल्यसे चमरी मृगी अपनी पूंछको हिला-हिलाकर, मानो, उन महाराजको यह सूचित करती थी कि ',हे भगवन् ! यह सादृश्य मेरा अपराध नहीं है " ॥ २५ ॥

**महीभृतस्तस्य च मन्मथश्रिया निजस्य चित्तस्य च तं प्रतीच्छया ।**
**द्विधा नृपे तत्र जगत्त्रयीभुवां नतभ्रुवां मन्मथविभ्रमोऽभवत् ॥२६॥**

महीभृत इति । तस्य महीभृतो नलस्य मन्मथस्येव श्रीः कान्तिः तया च निजस्य चित्तस्य तं नलं प्रति इच्छया रागेण च तत्र नृपे नले जगत्त्रयीभुवां त्रिभुवनवर्त्तिनीनां नतभ्रुवां कामिनीनां द्विधा द्विप्रकारेण मन्मथविभ्रमः अयं मन्मथ इति विशिष्टा भ्रान्तिः कामावेशश्च अभवत् अत्र श्लेषसङ्कीर्णो यथासंख्यालङ्कारः ॥ २६ ॥

तीनों लोकोंकी महिलाओं के चित्तों को उन महाराज नल की मूर्तिमें दो प्रकारके भ्रम होते थे । एक प्रकार यह था कि, उन लोगोंके अन्तःकरण उन महाराज की ओर रागसे आकर्षित होते थे । दूसरा प्रकार यह था कि, उन महाराज नलकी मूर्त्ति कामदेव के समान ज्ञात होती थी ॥ २६ ॥

निमीलनभ्रंशजुषा दृशा भृशं निपीय तं यस्त्रिदशीभिरर्जितः ।
अमूस्तमभ्यासभरं विवृण्वते निमेषनिःस्वैरधुनापि लोचनैः ॥ २७ ॥

निमीलनेति । त्रिदशीभिः सुराङ्गनाभिः निमीलनभ्रंशजुषा निर्निमेषयेत्यर्थः दृशा नयनेन तं नलं भृशम् अतिमात्रं निपीय सतृष्णं दृष्ट्वेत्यर्थः यः अभ्यासभरः अभ्यासातिशयः कृतः, अमूस्त्रिदश्यः देव्यः अधुनापि निमेषनिःस्वैः निमेषशून्यैः लोचनैः तम् अभ्यासभरं विवृण्वते प्रकटयन्ति । तासां स्वाभाविकस्य निमेषाभावस्य तादृशनिरीक्षणाभ्यासवासनाय तत्वमुत्प्रेक्ष्यते ॥ २७ ॥

सुरांगनाएं उन महाराज नलको एकटक देखा करती थीं । मानो, इसी अभ्याससे वे अब भी पलकें नहीं गिराती हैं । [ यह प्रसिद्धि है कि, सुरांगनाएं कभी पलकें नहीं गिराती हैं । ] ॥ २७ ॥

अदस्तदाकर्णि फलाढ्यजीवितं दृशोर्द्वयं नस्तदवीक्षि चाफलम् ।
इति स्म चक्षुःश्रवसां प्रिया नले स्तुवन्ति निन्दन्ति हृदा तदात्मनः ॥ २८ ॥

अद इति । चक्षुःश्रवसां नागानां प्रियाः पन्नग्य इत्यर्थः अदः इदं नोऽस्माकं दृशोश्चक्षुषोर्द्वयं तं नलम् आकर्णयतीति तदाकर्णि तद्गुणश्रावीत्यर्थः तासां चक्षुःश्रवस्त्वादिति भावः अतएव फलाढ्यजीवितं सफलजीवितम् । न वीक्षते इत्यवीक्षि अत्रोभयोस्ताच्छील्ये णिनिः । तस्य नलस्य अवीक्षि तदवीक्षि तददर्शीत्यर्थः अतएव अफलञ्च इति हेतोः तदा तस्मिन् काले आत्मना स्वेन हृदा मनसा नले नलविषये स्तुवन्ति प्रशंसन्ति निन्दन्ति कुत्सयन्ति च अतिशयोक्तिरलङ्कारः ॥ २८ ॥

नेत्रसे सुनने वालोंकी पत्नी सर्पिणियां उन महाराज नलके गुणोंको श्रवण कर अपने २ जीवनों को सफल मानती थीं और हृदयसे उनकी स्तुति करती थीं । किन्तु पातालमें रहनेके कारण उन महाराजको देखनेमें असमर्थ होनेके कारण वे अपने जीवनोंको निष्फल समझ कर अपने उन जीवनोंकी निन्दा भी करती थीं ॥ २८ ॥

विलोकयन्तीभिरजस्रभावनाबलादमुं नेत्रनिमीलनेष्वपि ।
अलम्भि मर्त्याभिरमुष्य दर्शने न विघ्नलेशोऽपि निमेषनिर्मितः ॥२९॥

विलोकयन्तीभिरिति । अजस्रभावनाबलात् निरन्तरध्यानप्रभावात् अमुं नलं त भावनायामिति भावः निमीलनेषु अपि निमेषावस्थासु अपि विलोकयन्तीभिः उन्मे वस्थायामिव साक्षात् कुर्वतीभिः मर्त्याभिः मानवीभिः अमुष्य नलस्य दर्शने निमेष मितः नेत्रनिमीलनजनितः विघ्नलेशोऽपि अन्तरायलवोऽपि न अलम्भि न प्राप्तः विभाषा चिण्णमुलो इति सुमागमः । मानव्यः दृष्टिगोचरं दृष्ट्या अदृष्टिगोचरञ्च तं मन सततं पश्यन्ति स्मेति भावः, अतिशयोक्तिरलङ्कारः ॥ २९ ॥

निरन्तर ध्यानके प्रभावसे स्त्रियां नेत्रोंको बन्द करने पर भी उन महाराज नल देखती रहती थीं । उन स्त्रियोंको उन महाराज नलके दर्शनका कभी लेशमात्र भी नहीं होता था ॥ २९ ॥

न का निशि स्वप्नगतं ददर्श तं जगाद गोत्रस्खलिते च का न तम् ।
तदात्मताध्यातधवा रते च का चकार वा न स्वमनोभवोद्भवम् ॥ ३० ॥

नेति । का नारी निशि रात्रौ तं नलं स्वप्नगतं न ददर्श ? सर्वैव ददर्शेत्यर्थः । च गोत्रस्खलितेषु नामस्खलनेषु तं न जगाद स्वभर्तृनाम्नि उच्चरितव्ये तन्नाम न उ रितवती अपि तु सर्वैव तथा कृतवती इत्यर्थः । का च रते सुरतव्यापारे तदात्मत नलात्मतया ध्यातः चिन्तितः धवः भर्त्ता यया तथाभूता धवः प्रियः पतिर्भर्त्तेत्यमर स्वस्य आत्मनः मनोभवः कामः तस्य उद्भवः तं वा न चकार ? अपि तु सर्वैव त चकारेत्यर्थः । अतिशयोक्तिरलङ्कारः ॥ ३० ॥

पृथ्वीपर ऐसी कोई भी रमणी नहीं थी जिसने उन महाराज नलको किसी न कि प्रकारसे न देखा हो । अर्थात्—कोई उन्हें साक्षात् देखती थी तो कोई उन्हें स्वप्नमें देख थी अथवा कोई-कोई उनका भ्रमसे नाम ही ले लेती थी और कोई कोई तो अपने पति साथ सम्भोग करती हुई विभ्रमसे उन्हींको पति समझ कर उनका नाम ले लेती थी ॥ ३० ॥

श्रियास्य योग्याहमिति स्वमीक्षितुं करे तमालोक्य सुरूपया धृतः ।
विहाय भैमीमपदर्पया कया न दर्पणः श्वासमलीमसः कृतः ॥ ३१ ॥

श्रियेति । तं नलम् आलोक्य दृष्ट्वा श्रिया सौन्दर्य्येण अहमस्य नलस्य योग्या अ रूपा इति धियेति शेषः स्वम् आत्मानं स्वावयवमित्यर्थः ईक्षितुं द्रष्टुं करे धृतः गृही दर्पणः भैमीं भीमनन्दिनीं दमयन्तीमित्यर्थः विहाय विनेत्यर्थः कया सुरूपया शोभ रूपवती अहमित्यभिमानवत्या नार्य्या अपदर्पया दर्पशून्यया सत्या श्वासेन दुःख श्वासेन मलीमसः मलदूषितः मलीमसन्तु मलिनं कच्चरं मलदूषितमित्यमरः । न कृत अपि तु सर्व्वयैव कृत इत्यर्थः । सौन्दर्य्यगर्विताः सर्वा एव भैमीव्यतिरिक्ताः कामि तमवलोक्य अहमेवास्य सदृशीत्यभिमानात् करधृतदर्पणे आत्मानं निर्वर्ण्य नाहमस्य योग्येति निश्चयेन विषण्णाः कदुष्णनिश्वासेन तं दर्पणं मलिनयन्ति स्मेति निष्कर्षः ॥ ३१ ॥

केवल दमयन्तीको छोड़कर उस समय कोई भी ऐसी महिला न थी जिसने उन महारा

नलकी प्रतिकृतिको देखकर अथवा साक्षात् उनका दर्शन करके अपने हाथोंमें—अपने मुखको देखने के वास्ते लिए हुए दर्पणको अपनी श्वासोंसे मलिन न किया हो । वे स्त्रियां दर्पण देखने के पूर्व अपनेको यह समझती थीं कि "मैं उन महाराज नलके योग्य हूँ"। परन्तु, दर्पणमें मुख देखनेके पश्चात् वे हतोत्साह होकर दीर्घ श्वासें छोड़कर दर्पणको मलिन कर देती थीं ॥३०॥

**यथोह्यमानः खलु भोगभोजिना प्रसह्य वैरोचनिजस्य पत्तनम् ।**
**विदर्भजाया मदनस्तथा मनोऽनलावरुद्धं वयसैव वेशितः ॥ ३२ ॥**

एवमस्यालौकिकसौन्दर्यद्योतनाय स्त्रीमात्रस्य तदनुरागमुक्त्वा सम्प्रति दमयन्त्यास्तत्रानुरागं प्रस्तौति यथेति । मदनः कामः प्रद्युम्न इति यावत् भोगभोजिना सर्पशरीराशिना वयसा पक्षिणा गरुडेनेत्यर्थः उह्यमानः नीयमानः वहेः कर्मणि यकि सम्प्रसारणे पूर्वरूपम् । अनलावरुद्धम् अग्निपरिवेष्टितं विरोचनस्य अपत्यं पुमान् वैरोचनिः बलिः तज्जस्य तत्पुत्रस्य बाणासुरस्येत्यर्थः पत्तनं नगरं शोणितपुरमिति यावत् प्रसह्य सहसा यथा वेशितः खलु प्रवेशित एव ततो गरुडमारुह्य स्मृतमात्रगतं हरिः । उपाहरणे विष्णुपुराणात् । तथा नलावरुद्धं नलासक्तं विदर्भजायाः दमयन्त्या मनः भोगभोजिना सुखभोगासक्तेनेत्यर्थः वयसा यौवनेन उह्यमानः परैस्तर्क्यमाणः ऊहेर्वितर्कार्थात् कर्मणि यक् । वेशितः प्रवेशितः । भोगः सुखे स्त्र्यादिभृता वहेश्च फणकाययोरित्यमरः । पुरा उषा नाम्नी बाणदुहिता स्वप्ने प्रद्युम्नपुत्रमनिरुद्धं दृष्ट्वा सुप्तप्रतिबुद्धा सहचरीं चित्रलेखामवदत् । सा च योगिनी योगबलेन तस्यामेव रात्रौ द्वारकायां प्रसुप्तमनिरुद्धं विहायसा समानीय तया समगमयत् । कालेन नारदमुखात् तदाकर्ण्य कृष्णः प्रद्युम्नबलरामाभ्यां बहुभिर्बलैश्च गत्वा बाणनगरमरौत्सीदिति कथा अत्रानुसन्धेया । अत्र यथोह्यमानो नलावरुद्धमिति शब्दश्लेषः । तदनुप्राणिता उपमा च सा च वयसेति वयसोरभेदाध्यवसायमूलातिशयोक्ति मूला चेत्येषां सङ्करः ॥ ३२ ॥

जैसे—प्रद्युम्नावतारमें कामदेव सर्पभक्षी गरुड़पर आरूढ़ होकर विरोचनके पौत्र तथा बलीके पुत्र बाणासुरके अग्निपरिवेष्टित नगरमें प्रविष्ट हुआ था । वैसे ही अधुना, उन महाराज नलसे परिवेष्टित दमयन्तीकी सुखभोगिनी युवावस्था पर आरूढ़ होकर कामदेवने विदर्भ की पुत्री दमयन्तीके अन्तःकरणमें प्रवेश किया ॥ ३२ ॥

**नृपेऽनुरूपे निजरूपसम्पदां दिदेश तस्मिन् बहुशः श्रुतिं गते ।**
**विशिष्य सा भीमनरेन्द्रनन्दना मनोभवाज्ञैकवशंवदं मनः ॥ ३३ ॥**

इह विरहिणां चक्षुःप्रीत्यादयो दशावस्थाः सन्ति तत्र चक्षुःप्रीतिः श्रवणानुरागस्याप्युपलक्षणमतस्तत्पूर्विकां मनःसङ्गाख्यां द्वितीयामवस्थामाह नृप इत्यादि । सा भीमनरेन्द्रनन्दना दमयन्ती नन्द्यादित्वाल्ल्युप्रत्ययः । निजरूपसम्पदां स्वलावण्यसम्पत्तीनामनुरूपे बहुशः बह्वल्पार्थाच्छस्कारकादन्यतरस्यामिति ... शस्प्रत्ययः । श्रुतिं श्रवणं गते एतेन श्रवणानुराग उक्तः, तस्मिन् नृपे नले मनोभवाज्ञाया एकं वशं-

वदम् एकस्यैव विधेये शिवभागवतवतत् समासः । प्रियवशे वदः खच् अरुर्द्विषदित्यादिना तस्य मुम् । मनो विशिष्य दिदेश अस्येदमिति निश्चित्यातिससर्जेत्यर्थः तद्गुण श्रवणात्तदासक्तचित्तासीदित्यर्थः ॥ ३३ ॥

राजा भीम की कन्या दमयन्तीने कामदेव के वशीभूत होकर अपनी लावण्यमय सम्पत्ति ( मनोरम सुन्दरता ) के अनुरूप महाराज नलको ज्ञातकर ( जिनके विषय उन्होंने बहुत बार सुना था ) अपना चित्त उनकी ओर लगाया ॥ ३३ ॥

उपासनामेत्य पितुस्स्म रज्यते दिने दिने सावसरेषु वन्दिनाम् ।
पठत्सु तेषु प्रति भूपतीनलं विनिद्ररोमाजनि शृण्वती नलम् ॥ ३४ ॥

अथास्याः श्रवणानुरागमेव चतुर्भिर्वर्णयति—उपासनामित्यादि । सा भैमी दिने दिने प्रतिदिनं नित्यवीप्सयोरिति वीप्सायां द्विर्भावः । वन्दिनां स्तुतिपाठकानामवसरेषु पितुरुपासनां सेवामेत्य प्राप्य तेषु वन्दिषु भूपतीन् प्रति भूपतीनुद्दिश्य पठत्सु सत्स्विति शेषः । नलं शृण्वती अलं रज्यते स्म रक्ताभूदित्यर्थः । रञ्जेर्देवादिकाल्लट् अतएव विनिद्ररोमा रोमाञ्चिता अजनीति सात्त्विकोक्तिः । जनेः कर्त्तरि लुङ् दीपजनेत्यादिना च्लेश्चिणादेशः । नलगुणश्रवणजन्यो रागस्तस्य रोमाञ्चेन व्यक्तोऽभूदिति भावः ॥ ३४ ॥

वे भैमी नित्य पिताकी सेवामें आती थीं तथा उस अवसरपर अत्यन्त पुलकित होती थीं जिस समय वन्दीजन ( भाट गण ) अन्य राजाओंके यशोंको सुनाते हुए महाराज नलके यश का गान करते थे ॥ ३४ ॥

कथाप्रसङ्गेषु मिथस्सखीमुखात्तृणेऽपि तन्व्या नलनामनि श्रुते ।
द्रुतं विधूयान्यदभूयतानया मुदा तदाकर्णनसज्जकर्णया ॥ ३५ ॥

कथेति । मिथोऽन्योन्यं रहसि कथाप्रसङ्गेषु विस्रम्भगोष्ठीप्रसङ्गेषु सखीमुखान्नलनामनि नलाख्ये तृणे श्रुते सति "नलः पोटगले राज्ञीति" विश्वः । अनया तन्व्या दमयन्त्या द्रुतमन्यत् कार्य्यान्तरं विधूय निराकृत्य मुदा हर्षेण तदाकर्णने नलशब्दाकर्णने सज्जकर्णया दत्तकर्णया अभूयत अभावि । भुवो भावे लङ् । अर्थान्तरप्रयुक्तोऽपि नलशब्दो नृपस्मारकतया तदाकर्षकोऽभूदिति रागातिशयोक्तिः ॥ ३५ ॥

सखियोंके साथ एकान्तमें वार्तालाप करती हुई भी वे कृशांगी यदि वनस्पति वाचक "नल" शब्दको सुन पाती तो सभी बातोंकोओर से ध्यान खींचकर उसी ओर कान लगाकर बातें सुनने लगती थी ॥ ३५ ॥

स्मरात्परासोरनिमेषलोचनाद्बिभेमि तद्भिन्नमुदाहरेति सा ।
जनेन यूनः स्तुवता तदास्पदे निदर्शनं नैषधमभ्यषेचयत् ॥ ३६ ॥

स्मरादिति । परासोर्मृतात् अनिमेषलोचनाद्देवाच्चेति च गम्यं उभयथापि भयहेतूक्तिः । तस्माद्बिभेमीति तद्भिन्नं ततोऽन्यमुदाहरेति तत्सदृशं निदर्श

दित्याहेत्याह सा दमयन्ती यूनः स्तुवता जनेन प्रयोगकर्त्रा तदास्पदे स्मरस्थाने निदर्शनं दृष्टान्तं नैषधं निषधानां राजानं नलं जनपदशब्दात्क्षत्रियादञ् । अभ्यषेचयत् स्मरस्य स्थाने तत्सदृश एवाभिषेक्तुं युक्तः । स च नलादन्यो नास्तीति तस्मिन् नल उदाहृतेऽनुतपं शृणोतीति रागातिरेकोक्तिः, उपसर्गात् सुनोतीत्यादिना अड्व्यवायेऽपि षत्वम् ॥ ३६ ॥

जब युवक गायक कामदेवके समान महाराज नलकी प्रशंसा गाता तब दमयन्ती उस युवक गायक से कहती—हे गायक ! मैं निश्चल आंखोंवाले मृत कामदेवसे डरती हूं अत आप उसके समान स्वरूप वाले महाराज नलका गीत न गायें किसी अन्य राजाका गीत गायें।" [ उस कालमें महाराज नल ही कामदेवके समान सुन्दर थे अतः वन्दीगण उन्हींका गीत गाया करते थे ॥ ३६ ॥

नलस्य पृष्टा निषधागता गुणान् मिषेण दूतद्विजवन्दिचारणाः।
निपीय तत्कीर्तिकथामथानया चिराय तस्थे विमनायमानया ॥ ३७ ॥

नलस्येति। निषधेभ्य आगता दूता सन्देशहरा द्विजा ब्राह्मणा वन्दिनः स्तावकाः चारणा देशभ्रमणजीविनः ते सर्वे मिषेण व्याजेन नलस्य गुणान् पृष्टाः पृच्छतेर्दुहादित्वात् प्रधाने कर्मणि क्तः। अथ प्रश्नानन्तरमनया भैम्या तत्कीर्तिकथां नलस्य यशः कथामृतं निपीय नितरां श्रुत्वेत्यर्थः। चिराय विमनायमानया विमनीभवन्त्या भृशादित्वात्क्यङि सलोपश्च अकृत्सार्वधातुकयोर्दीर्घः ततो लटः शानजादेशः। तदा तस्थे स्थितं तिष्ठतेर्भावे लिट्। अयञ्च दूतादिव्यवधानेन गुणकीर्तनलक्षणः प्रलापाख्यो ऽनुभवः ॥ ३७ ॥

वे दमयन्ती निषध देशसे आने वाले दूत, ब्राह्मण, भाट और स्तुति पाठकोंसे किसी बहानेसे महाराज नलके गुणोंके विषयमें पूछतीं और उनके गुणोंको श्रवण कर अतिकाल तक हर्षित रहतीं ॥ ३७ ॥

प्रियं प्रियां च त्रिजगज्जयिश्रियौ लिखाधिलीलागृहभित्ति कावपि।
इति स्म सा कारुतरेण लेखितं नलस्य च स्वस्य च सख्यमीक्षते ॥३८॥

प्रतिकृतिस्वप्नदर्शनादयो विरहिणां विनोदोपाया अथ तत्कथनमुखेन दर्शनाभ्यासं दर्शयन् प्रतिकृतिदर्शनं तावदाह प्रियमिति। सा भैमी त्रीणि जगन्ति समाहृतानि त्रिजगत्। समाहारो द्विगुरेकवचनम्। तस्य जयिनी लोकत्रयजित्वरी श्रीः शोभा ययोस्तादृशौ कावपि प्रियं प्रियाञ्च तौ अधिलीलागृहभित्ति विलासवेश्मभित्तौ इत्यर्थे विभक्त्यर्थेऽव्ययीभावः। लिखेत्युक्तौ कारुतरेण शिल्पिकाण्डेन प्रयोज्येन लेखितं नलस्य च स्वस्य च सख्यं रूपसाम्यापादनम् ईक्षते स्म ॥ ३८ ॥

वे दमयन्ती चित्रकारसे कहतीं "तीनों लोकोंकी शोभाको जिस दम्पतीने जीत लिया उसकी प्रतिकृति दीवालपर बनाइये।" आज्ञा पाकर वह चित्रकार नलदमयन्तीकी प्रति-

कृतियां दीवालपर खींच देना। दमयन्ती उन प्रतिकृतियोंमें महाराज नलके समान स्वरूपकी समानता देखने लगतीं ॥ ३८ ॥

**मनोरथेन स्वपतीकृतं नलं निशि क्व सा न स्वपती स्म पश्यति ।**
**अदृष्टमप्यर्थमदृष्टवैभवात्करोति सुप्तिर्जनदर्शनातिथिम् ॥ ३९ ॥**

मनोरथेनेति । मनोरथेन सङ्कल्पेन स्वपतीकृतं स्वभर्तृकृतं नलम् अभूततद्भावे च्वौ दीर्घः । स्वपती निद्राती सा दमयन्ती क्व निशि कुत्र रात्रौ न पश्यति स्म सर्वस्यामपि रात्रौ दृष्टवती । तथा हि सुप्तिः स्वप्नः अदृष्टम् अत्यन्ताननुभूतमप्यर्थं किमुत दृष्टमिति भावः । अदृष्टवैभवात् प्राक्तनभाग्यबलात् जनदर्शनातिथिं लोकदृष्टिगोचरं करोति तदत्रापि निमित्तादृष्टात्तादृक् स्वप्नज्ञानमुत्पन्नमित्यर्थः । सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासः ॥ ३९ ॥

कोई भी रात्रि ऐसी न बीतती थी, जिसमें दमयन्तीने अपने मनमें वरण किये हुए पुरुष महाराज नलको स्वप्नमें न देखा हो। भाग्यके प्रभावसे संसारमें बिना देखी हुई वस्तुएं भी स्वप्नमें दृष्टिगत हो जाती हैं ॥ ३९ ॥

**निमीलितादक्षियुगाच्च निद्रया हृदोऽपि बाह्येन्द्रियमौनमुद्रितात् ।**
**अदर्शि संगोप्य कदाप्यवीक्षितो रहस्यमस्यास्स महन्महीपतिः ॥ ४० ॥**

निमीलितादिति । निद्रया प्रयोजिकया निमीलितान्मुकुलितादुपरतव्यापारादित्यर्थः, अक्षियुगाच्च तथा बाह्येन्द्रियाणां चक्षुरादीनां मौनेन व्यापाररहित्येन मुद्रितात्प्रतिष्टब्धात्, मनसो बहिरस्वातन्त्र्यादिति भावः । हृदो हृदयादपि सङ्गोप्य गोपयित्वेत्यर्थः, अन्तर्द्धौ येनादर्शनमिच्छतीत्यक्षियुगमनसोरपादानत्वम् । अदर्शनं च मनसो बाह्येन्द्रियमौनमुद्रितादिति विशेषणसामर्थ्यादिन्द्रियार्थसंप्रयोगजन्यज्ञानविषय एवेति ज्ञायते, स्वप्नज्ञानं तु मनोजन्यमेव । तदजन्यज्ञानमत्रेत्याह—कदाप्यवीक्षित इति । अत्यन्तादृष्टचर इत्यर्थः, महद्रहस्यमतिगोप्यं वस्तु स महीपतिर्नलः अस्यै भैम्या अदर्शि दर्शयाञ्चक्रे दृशेर्ण्यन्तात् कर्मणि लुङ् । यथा काचिच्चेटी कस्यैचित्कामिन्यै कञ्चन कान्तं संगोप्य दर्शयति तद्वदिति ध्वनिः ॥ ४० ॥

दमयन्तीने महाराज नलको कभी नहीं देखा था, अतः निद्राने उन्हें गुप्त रीतिसे दिखा दिया। जब दमयन्ती सो गयीं तो उनकी दोनों आंखें बन्द हो गयीं और हृदय भी बाह्य इन्द्रियोंसे शून्य होकर मौन हो गया। उस समय मनने उन्हें महाराज नलको दिखा दिया—क्योंकि स्वप्न मनसे उत्पन्न ज्ञान ही है। [जैसे—कोई दासी किसी नायिकाको छिपाकर किसी पुरुषको दिखा देती है तद्वत् निद्रानामक दासीने दमयन्तीको महाराजको दिखा दिया]।

**अहो अहोभिर्महिमा हिमागमेऽप्यतिप्रपेदे प्रति तां स्मरार्दिताम् ।**
**तपर्तुपूर्तावपि मेदसां भरा विभावरीभिर्बिभरांबभूविरे ॥ ४१ ॥**



अथास्याश्चिन्ताजागरावाह—अहो इति । हिमागमे हेमन्तेऽपि स्मरार्दितां

दमयन्तीं प्रति अहोभिर्दिवसैः अतिमहिमा अतिवृद्धिः प्रपेदे तदा तपर्त्तुपूर्त्तावपि ग्रीष्मान्तेऽपि विभावरीभिर्निशाभिः मेदसां भरा मांसराशयोऽतिवृद्धिरिति यावत् । विभराम्बभूविरे बभ्रिरे भृञः कर्मणि लिट् आम्प्रत्ययः। अहो आश्चर्यं शास्त्रविरोधादनुभवविरोधाच्चेति भावः, विरहिणां तथा प्रतीयत इत्यविरोधः, एतेनास्या निरन्तरचिन्ता जागरश्च गम्यते । अहोशब्दस्य ओदिति प्रगृह्यत्वात् प्रकृतिभावः ॥ ४१ ॥

आश्चर्य है ! उन कामपीडिता दमयन्तीके लिए हेमन्तके छोटे दिन बहुत बड़े-बड़े और ग्रीष्मकी छोटी रात्रियां बहुत बड़ी-बड़ी प्रतीत हुई ॥ ४१ ॥

स्वकान्तिकीर्तिव्रजमौक्तिकस्रजः श्रयन्तमन्तर्घटनागुणश्रियम् ।
कदाचिदस्या युवधैर्यलोपिनं नलोऽपि लोकादश्रृणोद्गुणोत्करम् ॥४२॥

स्वेत्यादि । अथ नलोऽपि स्वस्य कान्त्या सौन्दर्येण याः कीर्त्तयः तासां व्रजः पुञ्ज एव मौक्तिकस्रक् मुक्ताहारः तस्या अन्तः अभ्यन्तरे घटनागुणश्रियं गुम्फनसूत्रलक्ष्मीं श्रयन्तं भजन्तं युवधैर्यलोपिनं तरुणचित्तस्थैर्य्यपरिहारिणम् अस्या दमयन्त्या गुणोत्करं सौन्दर्यसन्दोहं लोकादागन्तुकजनात् अश्रृणोत् । अत्र - कीर्त्तिव्रजगुणोत्करयोर्मुक्ताहारगुम्फनसूत्रत्वरूपणाद्रूपकालङ्कारः ॥ ४२ ॥

अपनी कान्ति-कीर्तिरूपी मालाको अपने गुणरूपी सूत्रसे गूंथनेवाली तथा युवकोंके चित्तोंकी धीरताको हरनेवाली उन दमयन्तीकी प्रशंसा आगन्तुकोंके मुखोंसे उन महाराज नलने भी श्रवण की ॥ ४२ ॥

तमेव लब्ध्वावसरं ततः स्मरश्शरीरशोभाजयजातमत्सरः ।
अमोघशक्त्या निजयेव मूर्तया तया विनिर्जेतुमियेष नैषधम् ॥ ४३ ॥

अथास्य तस्यां रागोदयं वर्णयति—तमेवेति । ततो गुणश्रवणानन्तरं शरीरशोभाया सौन्दर्य्यस्य जयेन जातमत्सरः उत्पन्नवैरः स्मरः तमेवावसरमवकाशं लब्ध्वा मूर्त्तया मूर्त्तिमत्या निजया अमोघशक्त्येव अकुण्ठितसामर्थ्येनेवेत्युत्प्रेक्षा । तया दमयन्त्या नैषधं नलं विनिर्जेतुमियेष इच्छति स्म, रन्ध्रान्वेषिणो हि विद्वेषिण इति भावः, तेन रागोदय उक्तः ॥ ४३ ॥

महाराज नलने कामदेवको अपनी सुन्दरतासे पराजित कर दिया था, अतः उस पराजित कामने उनसे बदला लेनेका यह सुन्दर अवसर समझा । किं बहुना, उसने मूर्त्तिमती अमोघ शक्ति दमयन्तीसे ही उनपर विजय करनेकी इच्छा की ॥ ४३ ॥

अकारि तेन श्रवणातिथिर्गुणः क्षमाभुजा भीमनृपात्मजाश्रियः ।
तदुच्चधैर्यव्ययसंहितेषुणा स्मरेण च स्वात्मशरासनाश्रयः ॥ ४४ ॥

अकारीति । तेन क्षमाभुजा नलेन भीमनृपात्मजायाः दमयन्त्याः श्रियः गुणः सौन्दर्यादिः श्रवणातिथिः श्रोत्रविषयः अकारि कृतः श्रुत इत्यर्थः । करोतेः कर्मणि लुङ् । स तस्य नलस्य उच्चधैर्य्यव्ययाय उन्नतधैर्य्यनाशाय संहितेषुणा स्मरेण

च स्वात्मनः शरासनाश्रयः चापनिष्ठो गुणो मौर्वी श्रवणातिथिरकारि आकर्णं कृ इत्यर्थः । दमयन्तीगुणश्रवणान्नलमनसि महान् मदनविकारः प्रादुर्भूत इत्यर्थः अलोकवाक्यार्थस्य पूर्ववाक्यार्थहेतुकं काव्यलिङ्गमलङ्कारः ॥ ४४ ॥

महाराज नलने भीमराजाकी पुत्रीके गुणोंको अपने कानोंका अतिथि बनाया— दमयन्तीके गुणोंको अच्छी तरहसे सुना । महाराज नलके धैर्यके नाशार्थ कन्दर्पने भी अ धनुषकी डोरीको कानोंतक खींचा ॥ ४४ ॥

**अमुष्य धीरस्य जयाय साहसी तदा खलु ज्यां विशिखैस्सनाथयन् ।**
**निमज्जयामास यशांसि संशये स्मरस्त्रिलोकीविजयाजितान्यपि ॥४५॥**

अमुष्येति । स स्मरः साहसी साहसकरः "न साहसमनारुह्य नरो भद्राणि पश्यतीति" न्यायादविलम्बी सन्नित्यर्थः । अमुष्य धीरस्य अविचलितस्य नलस्य जय शरासनज्यां निजधनुर्मौर्वीं विशिखैः शरैः सनाथयन् सनाथं कुर्वन् संयोजयन्नित्य त्रयाणां लोकानां समाहारस्त्रिलोकी तद्धितार्थेत्यादिना समासः, अकारान्तोत्तरप द्विगुः स्त्रियामिष्यत इति स्त्रीलिङ्गत्वाद्द्विगोरिति ङीप् । तस्य विजयेनार्जिता सम्पादितान्यपि यशांसि संशये निमज्जयामास किं पुनः सम्प्रति सम्पाद्यमित्यपि ब्दार्थः, वृद्ध्यपेक्षया अनुचितकर्मारम्भे मूलमपि नश्येदिति संशयितवानित्यर्थः ।‌ स्मरस्योक्तसंशयाऽसम्बन्धेऽपि तत्सम्बन्धोक्तेरतिशयोक्तिः ॥ ४५ ॥

धैर्यशाली महाराज नलपर विजयप्राप्तिके लिए कामदेवने साहससे अपने धनुषकी पर बाणोंको चढ़ाया और तीनों लोकोंकी विजयसे अर्जित की हुई कीर्तिकी बाजी लगा अर्थात्—अपनी सारी शक्ति महाराज नलके जीतनेमें उसने लगा दी ॥ ४५ ॥

**अनेन भैमीं घटयिष्यतस्तथा विधेरबन्ध्येच्छतया व्यलासि तत् ।**
**अभेदि तत्तादृगनङ्गमार्गणैर्यदस्य पौष्पैरपि धैर्यकञ्चुकम् ॥ ४६ ॥**

दैवसहायात् पुष्पेषोरेव पुरुषकारः फलित इत्याह—अनेनेति । अनेन नलेन भैमीं घटयिष्यतः योजयिष्यतो विधेर्विधातुरबन्ध्येच्छतया अमोघसङ्कल्पत्वेन स्मात्तथा तेन प्रकारेण योऽग्रे वक्ष्यत इति भावः । व्यलासि विलसितं लसते लुङ् । यत् पौष्पैरपि न तु कठिनैरनङ्गस्य न तु देहवतः मार्गणैर्धैर्यमेव कञ्चुकं नलस्य अभेदि भिन्नं, कर्मणि लुङ् । दमयन्तीनलयोर्दाम्पत्यघटनाय अनङ्गमार्ग लधैर्यकञ्चुकभेदनाद्विधेरबन्ध्येच्छत्वं विज्ञायत इत्यर्थः, दैवानुकूल्ये किं दुष्करं भावः । तत्रानङ्गपौष्पयोः कञ्चुकं भिन्नमिति विरोधः तस्य विलासेनाभासीकरणा धाभासः स च धैर्यकञ्चुकमिति रूपकोत्थापित इति तयोरङ्गाङ्गिभावेन सङ्करः ॥४६॥

ब्रह्मदेवका यह दृढ संकल्प था कि उन महाराज नलका विवाह राजा भीमकी दमयन्तीके साथ होगा । वह स्वयमेव प्रकट भी हो गया । पुष्पनिर्मित काम बाणोंने उन महाराज नलके धैर्यरूपी कवचको छेद डाला ॥ ४६ ॥

किमन्यदद्यापि यदस्त्रतापितः पितामहो वारिजमाश्रयत्यहो ।
स्मरं तनुच्छायतया तमात्मनः शशाक शङ्के स न लङ्घितुं नलः ॥४७॥

अथ विधिमपि जितवतः किं विध्यपेक्षयेत्याशयेनाह–किमिति । किमन्यत् अन्यत् किमुच्यते पितामहो विधिरपि तस्य स्मरस्यास्त्रैस्तापितः सन्तापितः अद्यापि वारिजमाश्रयति तस्य पद्मासनत्वादिति भावः । सर्वनीतेरपचारश्च गम्यते, अहो विधेरपि स्मरविधेयत्वमाश्चर्यम् पितामहतापिनं स्मरं स नलः आत्मनस्तनोः छायेव छाया कान्तिर्यस्य तस्य भावस्तत्ता तया तनुच्छायतया तनोश्छाया आनतपस्तनुच्छाया तत्तयेति च गम्यते "छाया त्वनातपे कान्ताविति" वैजयन्ती । लङ्घितुं न शशाक इत्यहं शङ्के न हि स्वच्छाया लङ्घितुं शक्या इति भावः । अत्र स्मरलङ्घने पितामहोऽप्यशक्तः किमुत नल इत्यर्थापत्तिस्तावदेकोऽलङ्कारः । "एकस्य वस्तुनो भावाद्यत्र वस्त्वन्यथा भवेत् । कैमुत्यन्यायतः सा स्यादर्थापत्तिरलङ्क्रियेति" लक्षणात् । तनोश्छायेवच्छायेत्युपमा छाययोरभेदाध्यवसायादतिशयोक्तिः । एतत्त्रितयोपजीवनेनालङ्कृत्त्वे तनुच्छायताया हेतुत्वोत्प्रेक्षणादुत्प्रेक्षा सङ्कीर्णा सा च शङ्क इति व्यञ्जकप्रयोगाद्वाच्येति ॥ ४७ ॥

हे भ्रातः ! दूसरोंकी तो बात ही क्या है ? ब्रह्माजीने भी कामबाणोंसे पीडित होकर शीतलताप्राप्तिके लिए कमलपर आश्रय लिया है । अतः उस प्रबल कामदेवको महाराज नल भी स्वदेहकी छायाके समान अतिक्रमण न कर सके ॥ ४७ ॥

उरोभुवा कुम्भयुगेन जृम्भितं नवोपहारेण वयस्कृतेन किम् ।
त्रपासरिद्दुर्गमपि प्रतीर्य सा नलस्य तन्वी हृदयं विवेश यत् ॥४८॥

उरोभुवेति । सा तन्वी भैमी त्रपैव सरित् सैव दुर्गं नलसम्बन्धि तदपि प्रतीर्य्य नलस्य हृदयं विवेशेति यत् तत्प्रवेशनं यत्तदोर्नित्यसम्बन्धात् वयस्कृतेन नवोपहारेण नूतननिर्म्माणेन उरोभुवा तज्जन्येन कुम्भयुगेन कुचयुगाख्येनेति भावः इत्यतिशयोक्तिः । न लोकेत्यादिना कृद्योगषष्ठीप्रतिषेधात्कर्त्तरि तृतीया, नपुंसके भाव उपसंख्यानमिति षष्ठी तु शेषविवक्षायाम् । जृम्भितं जृम्भणं किमुत्प्रेक्षा सा चोक्तातिशयोक्तिमूलेति सङ्करः । दमयन्तीकुचकुम्भविश्रम्भश्रवणान्नलस्त्रपां विहाय तस्यामासक्तचित्तोऽभूदित्यर्थः, तेन मनःसङ्ग उक्तः ॥ ४८ ॥

यौवनावस्था द्वारा दमयन्तीने दो कुचकलशोंका नवीन उपहार प्राप्त किया तथा शायद उन्हीं कुचकलशोंकी सहायतासे उन कृशांगी दमयन्तीने लज्जारूपी अगाध नदीको पार कर नलके हृदयमें प्रवेश किया ॥ ४८ ॥

अपह्नवानस्य जनाय यन्निजामधीरतामस्य कृतं मनोभुवा ।
अबोधि तज्जागरदुःखसाक्षिणी निशा च शय्या शशाङ्ककोमला ॥४९॥

अथास्य जागरावस्थामाह–अपह्नवानस्येति । निजामधीरतां चपलत्वं जनायापह्नुवानस्यापलपतः श्लाघह्नुङ्स्थेत्यादिना सम्प्रदानत्वाच्चतुर्थी । अस्य नलस्य

मनोभुवा कामेन यज्जागरप्रलापादिकं कृतन्तत्सर्वं जागरदुःखस्य साक्षिणी । साक्षाद् द्रष्टरि संज्ञायामिति साक्षाच्छब्दादिनिप्रत्यये ङीप् । शशाङ्केन कोमला रम्या निशा चाबोधि । दीपजनेत्यादिना कर्त्तरि च्लेश्चिणादेशः । तथा शशाङ्कवत्कोमला मृदुला शय्या अबोधि, निशायां शय्यायां जागरणयोस्तत्साक्षित्वमिति भावः ॥ ४९ ॥

महाराज नल कामदेवजनित व्यथाको तथा अपनी अधीरताको दूसरोंसे छिपाते थे, किन्तु उनकी उन व्यथाओं को जाननेवाली दो साक्षिणियां भी थीं—एक चन्द्रसे मनोहर रात्रि तथा दूसरी चन्द्र के समान सुन्दर एवं कोमल शय्या ॥ ४९ ॥

**स्मरोपतप्तोऽपि भृशं न स प्रभुर्विदर्भराजं तनयामयाचत ।**
**त्यजन्त्यसूञ्शर्म च मानिनो वरं त्यजन्ति न त्वेकमयाचितव्रतम् ॥५०॥**

ननु किमनेन निबन्धनेन, याच्यतामस्मीमभूपतिर्दमयन्तीम्, नेत्याह—स्मरेत्यादि। भृशं गाढं स्मरोपतप्तः कामसन्तप्तोऽपि प्रभुः समर्थः स नलः विदर्भराजं भीमनृपतिं तनयां दमयन्तीं न अयाचत न याचितवान् दुहियाचीत्यादिना याचेर्द्विकर्मकता। तथाहि मानिनो मनस्विनोऽत्युच्चमनस्काः प्राणान् शर्म च सुखञ्च त्यजन्ति एतस्या गोऽपि वरं मनाक् वरमिति मनागुत्कर्ष इति महोपाध्यायवर्द्धमानः । किन्तु, एकम् द्वितीयमयाचितव्रतम् अयाच्ञानियमन्तु न त्यजन्ति, मानिनां प्राणत्यागदुःखादुसः याच्ञाया दुःखमित्यर्थः । सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासः ॥ ५० ॥

समर्थ महाराज नलने कामपीडित होने पर भी विदर्भपतिसे उनकी पुत्री दमयन्ती को न मांगा । ठीक ही है—मानीलोग प्राणों तथा सुखको त्यागना अच्छा समझते हैं, परन्तु, "भिक्षा न मांगना" इस व्रतको तोड़ना उचित नहीं समझते हैं ॥ ५० ॥

**मृषाविषादाभिनयादयं क्वचिज्जुगोप निःश्वासततिं वियोगजाम् ।**
**विलेपनस्याधिकचन्द्रभागताविभावनाच्चापललाप पाण्डुताम् ॥५१॥**

मृषेति । अयं नलो वियोगजां दमयन्तीवियोगजन्यां निःश्वासततिं निःश्वासपरम्परां क्वचित् कुत्रचिद्वस्त्वन्तरे विषये मृषाविषादस्य मिथ्यादुःखस्याभिनयात् छलेन जुगोप संववार । तथा पाण्डुतां विशदतां शरीरपाण्डिमानं च विलेपनस्य चन्दनादधिकः चन्द्रभागः कर्पूरांशो यस्मिन् विलेपने "घनसारश्चन्द्रसंज्ञः सिताभ्रो हिमवालुका" इत्यमरः । तस्य भावस्तत्ता तस्या विभावनात् कर्पूरभागाधिकतोत्प्रेक्षणादपललाप निह्नुते स्म ॥ ५१ ॥

महाराज नल दमयन्तीके वियोगसे निकलनेवाली श्वासोंकी श्रेणियोंको कभी कभी कुछ लोगोंसे छिपाते भी थे और लोगों के द्वारा यह पूछने पर कि "पाण्डुता क्यों आ गयी है ?" वे उत्तर देते थे कि विलेपन किये जानेवाले चन्दनमें कर्पूर की मात्रा अधिक हो गयी है। अतः रक्त [illegible] है और पाण्डुता आ गयी है ॥ ५१ ॥



**शशाक निह्नोतुमनेन तत्प्रियामयं बभाषे यदलीकवीक्षिताम् ।**

समाज एवालपितासु वैणिकैर्मुमूर्च्छ यत्पञ्चममूर्च्छनासु च ॥ ५२ ॥

शशाकेति । अयन्नलोऽलीकवीचित्तां मिथ्यादृष्टां प्रियां दमयन्तीं समाजे सभायामेव यत् बभापे बभाण वीणा शिल्पमेषां तैर्वैणिकैः वीणावादैः शिल्पमिति ठञ् । आलपितासु सूच्चरितासु व्यक्तिं गतास्वित्यर्थः । "रागव्यञ्जक आलाप" इति लक्षणात् । पञ्चमस्य पञ्चमाख्यस्य स्वरस्य मूर्च्छनासु आरोहावरोहणेषु "क्रमात् स्वराणां सप्तानाम् आरोहादवरोहणम् मूर्च्छनेत्युच्यत" इति लक्षणात् । पञ्चमग्रहणन्तस्य कोकिलालापकोमलत्वेन उद्दीपकत्वातिशयविवक्षयेत्यनुसन्धेयम् । मुमूर्च्छेत्यपि यत्तदुभयम् अनेन प्रकारेण निह्नोतुमाच्छादयितुं शशाक । अये इति पाठे विषादे इत्यर्थः । "अये क्रोधे विषादे चेति" विश्वः । एतेन हीत्यागोन्मादमूर्च्छावस्थाः सूचिताः ॥ ५२ ॥

एकदा राजसभामें वीणावादक पंचम रागसे वीणा बजा रहे थे । उस समय महाराज नल मूर्च्छित होकर भ्रान्तिवश अपनी प्रिया दमयन्तीसे वार्तालाप करने लगे । इस बातको छिपानेमें वे सर्वथा असमर्थ भी रहे ॥ ५२ ॥

अवाप सापत्रपतां सभूपतिर्जितेन्द्रियाणां धुरि कीर्तितस्थितिः ।
असंवरे शम्बरवैरिविक्रमे क्रमेण तत्र स्फुटतामुपेयुषि ॥ ५३ ॥

अवापेति । जितेन्द्रियाणां धुर्यग्रे कीर्त्तितस्थितिः स्तुतमर्यादः स महीपतिः नलः तत्र समाजे असंवरे संवरितुमशक्ये संवरणं संवरः शमश्चेत्यपि, न विद्यते संवरो यस्य तस्मिन् शम्बरवैरिविक्रमे मनसिजविकारे क्रमेण स्फुटतामुपेयुषि सति सापत्रपतां सलज्जताम् अवाप धैर्यशालिनां तद्भङ्गस्त्रपाकर इति भावः ॥ ५३ ॥

जितेन्द्रियोंमें श्रेष्ठ कीर्तिवाले महाराज नल अपनी कामव्यथा की वार्ताको समाजमें फैली हुई ज्ञातकर अतिलज्जित हुए ॥ ५३ ॥

अलं नलं रोद्धुममी किलाभवन् गुणा विवेकप्रभवा न चापलम् ।
स्मरः स रत्यामनिरुद्धमेव यत्सृजत्ययं सर्गनिसर्ग ईदृशः ॥ ५४ ॥

ननु विवेकिनः कुत इदं चापल्यम् इत्यत आह--अलमिति । युक्तायुक्तविचारो विवेकः तत्प्रभवा अमी गुणा धैर्यादयः, नलमिदं स्त्रीलाभरूपं चापलं निरोद्धुम् दुहियाचीत्यादिना रुन्धेर्द्विकर्मकत्वम् । अलं समर्था नाभवन् किल खलु, तथाहि स्मरः कामः जनमिति शेषः जनं रत्यां रागे अनिरुद्धं सृजति अनीश्वरमवशं करोति रत्यां रतिदेव्यां अनिरुद्धाख्यं कुमारं सृजतीति ध्वनिः । इति यत् अयं सर्गनिसर्गः सृष्टिस्वभाव ईदृशः । "रतिः स्मरप्रियायां च रागेऽपि सुरतेऽपि च", "अनिरुद्धः कामपुत्रेऽरुद्धे कुब्जानीश्वरेऽपि चेति" विश्वः । अत्र स्मररागदुर्वारतायाः सर्वसृष्टिसाधारण्येन चापलदुर्वारतासमर्थनात् सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासः ॥ ५४ ॥

महाराज नलके विवेक आदि गुण अपने प्रभावसे कामचाञ्चल्यको न रोक सके । क्योंकि सृष्टिका यही धर्म है कि जहाँपर प्रेम होता है वहाँपर कामदेव ऐसी ही चञ्चलता उत्पन्न कर देता है ॥ ५४ ॥

अनङ्गचिह्नं स विना शशाक नो यदासितुं संसदि यत्नवानपि ।
क्षणं तदारामविहारकैतवान्निषेवितुं देशमियेष निर्जनम् ॥ ५५ ॥

अथास्य मनोरथसिद्धौपयिकदिव्यहंससंवादनिदानभूतं वनविहारं प्रस्तौति- अनङ्गेति । स नैषधो नलो यत्नवानप्यनङ्गचिह्नं मूर्छाप्रलापादिस्मरविकारं विना संसदि क्षणमप्यासितुं यदा नो शशाक तदा आरामविहारकैतवादुपवनविहरणव्याजान्निर्जनं देशं निषेवितुम् इयेष देशान्तरं गन्तुमैच्छदित्यर्थः । एतेन चापलाख्ये सञ्चारिणि असगलक्षणोऽनुभाव उक्तः ॥ ५५ ॥

यत्न करने पर भी राजसभामें महाराज नल कामदेवके चिह्नोंके विना एक क्षण नहीं बैठ सकते थे । इसलिए वे वाटिकाविहार आदिके बहानेसे निर्जन स्थानपर जानेके उद्यत हो गये ॥ ५५ ॥

अथ श्रिया भर्त्सितमत्स्यकेतनस्समं वयस्यैस्स्वरहस्यवेदिभिः ।
पुरोपकण्ठोपवनं किलेक्षिता दिदेश यानाय निदेशकारिणः ॥ ५६ ॥

अथेति । अथानन्तरं श्रिया सौन्दर्येण भर्त्सितमत्स्यकेतनस्तिरस्कृतस्मरः नलः स्वरहस्यवेदिभिः निजभैमीरागमर्मज्ञैर्वयसा तुल्या वयस्याः स्निग्धाः "स्निग्धो वयस्यः सवयाः" इत्यमरः । तैः सह समं पुरोपकण्ठोपवनं पुरसमीपाराममीक्षिता द्रष्टा तृन्नन्तमेवैतत् अतएव न लोकेत्यादिना षष्ठीप्रतिषेधः । किलेत्यलीके निदेशकारिणः आज्ञाकरान् यानाय यानमानेतुमित्यर्थः, क्रियार्थोपेत्यादिना चतुर्थी । दिदेश आज्ञापयामास ॥ ५६ ॥

जिन महाराज नलने अपने सौन्दर्यसे कामदेवको पराजित कर दिया था, उन महाराज नलने अपने कामरागके मर्मज्ञ स्नेहियों के साथ नगरके समीप उपवनमें चलनेके लिए और सेवकोंको सवारी लानेकी आज्ञा दी ॥ ५६ ॥

अमी ततस्तस्य विभूषितं सितं जवेऽपि मानेऽपि च पौरुषाधिकम् ।
उपाहरन्नश्वमजस्रचञ्चलैः खुराञ्चलैः क्षोभितमन्दुरोदरम् ॥ ५७ ॥

अमी इति । तत आज्ञापनान्तरं अमी निदेशकारिणः तस्य विभूषितमलङ्कृतं जवेऽपि वेगेऽपि माने प्रमाणेऽपि पौरुषात् पुरुषगतिवेगात् पुरुषप्रमाणात् चाधिकं "ऊर्ध्व-विस्तृतदोःपाणिनृमाने पौरुषं त्रिपु" इत्यमरः । पुरुषहस्तिभ्यामण् चेत्यण्प्रत्ययः । अजस्रचञ्चलैश्चटुलस्वभावैः खुराञ्चलैः शफाग्रैः क्षोदितं मन्दुरोदरं चूर्णीकृताश्वशालाभ्यन्तरम् वाजिशाला तु मन्दुरेत्यमरः । एतेनोत्तमाश्वलक्षणयुक्तं सितं श्वेतमश्वमुपाहरन् आनिन्युरित्यर्थः ॥ ५७ ॥

ततः आज्ञाकारी सेवक सजे हुए उन्नत तथा वलिष्ठ घोड़ेको ले आये । वह घोड़ा ऐसे लक्षणोंसे युक्त था कि अपनी टापोंसे सदा अश्वशालाकी भूमि खोदता रहता था ॥ ५७ ॥



अथान्तरेणावटुगामिनाध्वना निशीथिनीनाथमहस्सहोदरैः ।

निगालगाद्देवमणेरिवोत्थितैर्विराजितं केसरकेशरश्मिभिः ॥ ५८ ॥

अथ सप्तभिः कुलकमाह—अथेत्यादि । अथानयनानन्तरं स नलः हयमारुरोहेत्युत्तरेणान्वयः । कथंभूतमान्तरेणाभ्यन्तरेण अवटुगामिना ककाटिकाख्यमस्तकपृष्ठभाजा, अवटुर्घाटाककाटिकेत्यमरः, अध्वना मार्गेण निगालमाद्गलोद्देशात्, निगालस्तु गलोद्देश इत्यमरः । देवमणिः आवर्त्तविशेषः, निगालजो देवमणिरिति लक्षणात् । दिव्यमणिक्यं च गम्यते तस्मादुत्थितैरिव स्थितैरित्युत्प्रेक्षा । निशीथिनीनाथमहःसहोदरैश्चन्द्रांशुसदृशैरित्युपमा । केसरकेश एव रश्मय इति रूपकं तैर्विराजितम् ॥ ५८ ॥

उस घोड़ेकी गर्दनपरके बाल ( अयाल ) चन्द्ररश्मिके समान चमकीले थे और देवमणिके समान उसकी गर्दनसे घुमावदार निकले हुए प्रतीत होते थे । अर्थात्—ऐसा ज्ञात होता था, जैसे देवमणि उसकी गर्दनसे प्रकट हो रहा हो ॥ ५८ ॥

अजस्रभूमीतटकुट्टनोद्गतैरुपास्यमानं चरणेषु रेणुभिः ।
रयप्रकर्षाध्ययनार्थमागतैर्जनस्य चेतोभिरिवाणिमाङ्कितैः ॥ ५९ ॥

अजस्रेति । अजस्रेण भूमितटकुट्टनेन उद्गतैरुत्थितै रेणुभिः रयप्रकर्षस्य वेगातिशयस्याध्ययनार्थमभ्यासायागतैरणिमाङ्कितैरणुत्वपरिमाणविशिष्टैर्जनस्य लोकस्य चेतोभिरिवेत्युत्प्रेक्षा । चरणेषु पादेषु उपास्यमानं सेव्यमानम्, अणुपरिमाणं मन इति तार्किकाः ॥ ५९ ॥

वह घोड़ा निरन्तर पृथ्वीपर टापें पटकता था जिससे धूलिकण उड़ते थे । वे धूलिकण मानो उसके पैरोंकी सेवा करनेवाले मनुष्योंके चित्त थे, जो उनकी सेवा करके उनसे द्रुतगति सीखना चाहते थे ॥ ५९ ॥

चलाचलप्रोथतया महीभृते स्ववेगदर्पानिव वक्तुमुत्सुकम् ।
अलं गिरा वेद किलायमाशयं स्वयं हयस्येति च मौनमास्थितम् ॥६०॥

चलाचलेति । पुनः, चलाचलप्रोथतया स्वभावतः स्फुरमाणघोणतया चरिचलिपदीनामुपसंख्यानाच्चलेर्द्विर्वचनं दीर्घश्च । घोणा तु प्रोथमस्त्रियामित्यमरः । महीभृते नलाय स्ववेगदर्पान् वेगातिरेकान् वक्तुमुत्सुकमुद्युक्तमिवेत्युत्प्रेक्षा, अथावचने हेतुमुत्प्रेक्षते अलमिति । गिरा उक्त्या अलं कुतः, अयं नलः स्वयं हयस्याश्वस्य आशयमभिप्रायं वेद वेत्ति किल । विदो लटो वेति न लादेशः इति हेतोरिवेत्यनुषङ्गः मौनं तुष्णीम्भावञ्च चास्थितं प्राप्तम्, अश्वहृदयवेदी नल इति प्रसिद्धिः ॥ ६० ॥

चलनेके समय वह घोड़ा अपने नथुनेको उठाता हुआ ऐसा मालूम पड़ता था, मानो वह अपने वेगके दर्पको कहनेको उत्सुक है, अथवा वाणीसे क्या कहे ? । वे महाराज उसके अभिप्राय को जानते हैं, इसीसे उसने मौन धारण कर लिया ॥ ६० ॥

महारथस्याध्वनि चक्रवर्तिनः परानपेक्षोद्वहनाद्यशस्सितम् ।
रदावदातांशुमिषादनीदृशां हसन्तमन्तर्बलमर्वतां रवेः ॥ ६१ ॥

महारथस्येति । महान् रथो यस्य तस्य महारथस्य । आत्मानं सारथिञ्च रक्षन् युद्धयेत यो नरः । स महारथसंज्ञः स्यादित्याहुर्नीतिकोविदाः इत्युक्तलक्षण रथिकविशेषस्येत्यर्थः । अन्यत्र महारथो नलः तस्य महारथस्य चक्रं राष्ट्रं वर्त्तयती चक्रवर्त्ती सार्वभौमः तस्य नलस्य, "हरिश्चन्द्रो नलो राजा पुरुः कुत्सः पुरूरवाः । स कार्त्तवीर्य्यश्च षडेते चक्रवर्त्तिन" इत्यागमात् । अन्यत्र चक्रेणैकेन वर्त्तनशीलस्येत्यर्थः अध्वनि मार्गे नापेक्षत इत्यनपेक्षं पचाद्यच् परेषामनपेक्षं तस्मादुद्वहनादसहायो नाद्धेतोर्यशःसितं कीर्त्तिविशदं अतएवानीदृशासीदृशयशोरहितानाम् । सप्त युञ्जन्ति रथमेकचक्रमिति सप्तानां सम्भूयोद्वहनश्रवणादिति भावः । रवेरर्वतामश्वानामन्तर मन्तःसारं रदानां दन्तानां ये अवदाताः सिताः अंशवः तेषां मिषाद्धसन्तं हसन् मिव स्थितमित्यर्थः । अत्र मिषशब्देनांशूनामसत्यत्वमापाद्य हासत्वोत्प्रेक्षणात् पह्नवोत्प्रेक्षेयं गम्या च व्यञ्जकाप्रयोगात्, रदना दशना दन्ता रदा इत्यमरः ॥ ६१ ॥

महारथी महाराज नलको वहन करनेवाला वह घोड़ा था । अन्य घोड़ा उन्हें वह करनेमें असमर्थ था । उसकी कीर्ति अतिधवल थी । वह घोड़ा अपने दांतोंसे मानो, अर्की शाली सूर्यके घोड़ोंपर हंसता था ॥ ६१ ॥

सितत्विषश्चञ्चलतामुपेयुषो मिषेण पुच्छस्य च केसरस्य च ।
स्फुटाञ्चलच्चामरयुग्मचिह्नकैरनिह्नुवानं निजवाजिराजताम् ॥ ६२ ॥

सितेति । पुनः कथम्भूतं, सितत्विषः विशदप्रभस्य चञ्चलतामुपेयुषः चञ्चलस्ये त्यर्थः । पुच्छस्य लाङ्गूलस्य केशरस्य ग्रीवास्थवालस्य च मिषेण छलेन चलतश्चामर युग्मस्य चिह्नकैः लक्षणैः स्फुटां प्रसिद्धां निजां वाजिराजतां अश्वेश्वरत्वमनिह्नुवा प्रकाशयन्तमिव अराज्ञः कथञ्चामरयुग्ममिति भावः । पूर्ववदलङ्कारः ॥ ६२ ॥

सफेद चञ्चल पूंछ तथा गर्दनपरके सफेद चञ्चल बालोंको राजचिह्नरूपी दो चामरों समान धारण किया हुआ वह घोड़ा अश्वेश्वर-सा प्रतीत होता था ॥ ६२ ॥

अपि द्विजिह्वाभ्यवहारपौरुषे मुखानुषक्तायतवल्गुवल्गया ।
उपेयिवांसं प्रतिमल्लतां रयस्मये जितस्य प्रसभं गरुत्मतः ॥ ६३ ॥

अपीति । पुनः कथम्भूतं स्थितं, रयस्मये वेगप्रयुक्ताहङ्कारे प्रसभं प्रसह्य जितस्य प्रागेव निर्जितस्य गरुत्मतः मुखानुषक्ता वक्त्रलग्ना आयता दीर्घा वल्गूरम्या च वल्गा मुखरज्जुः तया तन्मिषेणेत्यर्थः द्विजिह्वानामहीनामभ्यवहारे आहारे यत् पौरुषं सर्पभक्षणपुरुषकारेऽपि प्रतिमल्लतां प्रतिद्वन्द्वितामुपेयिवांसं प्राप्तं तथा च गम्योत्प्रेक्षा उपेयिवाननाश्वाननूचानश्चेति क्वसुप्रत्ययान्तो निपातः ॥ ६३ ॥

अपने वेगसे गरुड़को प्रथम ही जीतनेवाले उस घोड़ेने अपने मुखमें लगी हुई बागडोर लगामसे सर्पभक्षी गरुड़की समता प्राप्त कर ली । [ यहां बागडोरकी कल्पना सर्प की गयी है । ] ॥ ६३ ॥

स सिन्धुजं शीतमहस्सहोदरं हरन्तमुच्चैःश्रवसः श्रियं हयम् ।
जिताखिलक्ष्माभृदनल्पलोचनस्तमारुरोह क्षितिपाकशासनः ॥ ६४ ॥

स इति । जिता अखिलाः क्ष्माभृतो भूपा भूधराश्च येन सः अनल्पलोचनो विशा-लाक्षः अन्यत्र बहुनेत्रः सहस्राक्ष इति यावत् क्षितिपाकशासनः क्षितीन्द्रो नलः देवे-न्द्रश्च सिन्धुजं सिन्धुदेशोद्भवं समुद्रोद्भवञ्च देशे नदविशेषेऽब्धौ सिन्धुर्ना सरिति स्त्रियामित्यमरः । शीतमहःसहोदरं चन्द्रसवर्णमित्यर्थः, अन्यत्र चन्द्रभ्रातरमेकयोनि-त्वादिति भावः । उच्चैःश्रवस इन्द्राश्वस्य श्रियं हरन्तं तत्स्वरूपमित्यर्थः, तं हयमारुरोह, उच्चैःश्रवसः श्रियं हरन्तमिवेत्युपमा । सा च श्लिष्टविशेषणात् सङ्कीर्णेयं क्षितिपाक-शासन इत्यतिशयोक्तिः ॥ ६४ ॥

सिन्धु देशमें अथवा समुद्रमें उत्पन्न होनेवाले तथा चन्द्रके समान स्वच्छ एवं इन्द्रके उच्चैःश्रवा नामक घोड़ेके समान सुन्दर घोड़े पर वे महाराज नल चढ़कर सवार हुए जो पृथ्वीके समस्त नृपतियों को जीतने वाले थे एवं पृथ्वीके इन्द्रके समान तेजः पुञ्जवाले थे तथा बड़ी-बड़ी आंखवाले थे । [ उच्चैःश्रवा चन्द्रका सहोदर है और समुद्र से उत्पन्न हुआ है]॥६४॥

निजा मयूखा इव तिग्मदीधितिं स्फुटारविन्दाङ्कितपाणिपङ्कजम् ।
तमश्ववारा जवनाश्वयायिनं प्रकाशरूपा मनुजेशमन्वयुः ॥ ६५ ॥

निजा इति । निजा आत्मीयाः प्रकाशरूपा उज्ज्वलाकारा भास्वररूपाश्च अश्वान्वार-यन्तीत्यश्ववाराः अश्वारोहाः स्फुटारविन्दाङ्कितपाणिपङ्कजं पद्मरेखाङ्कितहस्तम्, अन्यत्र पद्महस्तं जवनो जवशीलः जुचङ्क्रमेत्यादिना युच् । तेनाश्वेन अन्यत्र तैरश्वैर्यातीति यायी तं मनुजा मनोर्जाता मनुजा नरास्तेषामीशं राजानञ्च तं नलं तीग्मदीधितिं सूर्यं मयूखा इव अन्वयुः । अन्वगच्छन् यातेर्लिट् झेर्जुसादेशः ॥ ६५ ॥

जैसे—सूर्यकी किरणें सूर्यका अनुगमन करतीं हैं वैसे ही दीप्तिधारी अश्वारोहियोंने कमलचिह्न विभूषित हाथवाले महाराज नलका अनुगमन किया ॥ ६५ ॥

चलन्नलंकृत्य महारयं हयं स वाहवाहोचितवेषपेशलः ।
प्रमोदनिष्पन्दतराक्षिपक्ष्मभिर्व्यलोकि लोकैर्नगरालयैर्नलः ॥ ६६ ॥

चलन्निति । वाहवाहोचितवेषपेशलः अश्ववाहोचितनेपथ्यचारुः "चारौ दक्षे च पेशलः" इत्यमरः । स नलो महारयमतिजवं हयमलङ्कृत्य चलन् स्वयं हयस्य भूषणीभूय चलन्नित्यर्थः । प्रमोदेन निष्पन्दतराणि अत्यन्तनिश्चलानि अक्षिपक्ष्माणि येषान्तैः अनिमेषदृष्टिभिरित्यर्थः । नगरालयैर्नगरनिवासिभिरित्यर्थः । लोकैर्जनैर्व्यलोकि विस्मय-पूर्वकाभ्यां विलोकित इत्यर्थः । वृत्त्यनुप्रासोऽलङ्कारः ॥६६॥

यात्राके योग्य वस्त्रोंको धारण किये हुए एवं अति वेगवाले घोड़ेपर सवार होकर जाते हुए उन महाराज नलको पुरवासी गण निर्निमेष दृष्टिसे देख रहे थे ॥ ६६ ॥



क्षणादथैष क्षणदापतिप्रभः प्रभञ्जनाध्येयजवेन वाजिना ।

सहैव ताभिर्जनदृष्टिवृष्टिभिर्बहिः पुरोऽभूत् पुरुहूतपौरुषः ॥ ६७ ॥

क्षणादिति । अथानन्तरं क्षणदापतिप्रभश्चन्द्रतुल्यस्तथा पुरुहूतपौरुषः इन्द्र पौरुषं कर्म तेजो वा यस्य तादृश एष नलः । प्रभञ्जनेन वायुना अध्येयः शिक्ष जवो वेगो यस्य तथाविधेन वाजिना अश्वेन क्षणादिति क्षणात्ताभिः पूर्वोक्ताभिः ज दृष्टिवृष्टिभिः दृक्पातैः सह जनैर्दृश्यमान इवेत्यर्थः । बहिःपुरः पुराद्बहिः बहिःस्थितो दिति बहिर्योगे पञ्चमी । पूर्वं पुरे दृष्टः क्षणादेव पुराद्बहिर्दृष्ट इति वेगातिशयोक्तिः ।

जिसकी तीव्र गतिसे पवन भी तीव्र गतिकी शिक्षा ले सकता था । अर्थात्—पवनः तेज गतिवाले उस घोड़ेपर सवार होकर चन्द्रके समान छविधारी एवं इन्द्रके समान पर वे महाराज नल पुरवासियोंके नेत्रसमूहोंके मध्यसे एक ही क्षणमें नगरके बाहर चले [ वे उस समय पवनसे भी तेज चले जा रहे थे उन्हें देखकर मनुष्य कहते थे "दे वे गये" ॥ ६७ ॥

ततः प्रतीच्छ प्रहरेति भाषिणी परस्परोल्लासितशल्यपल्लवे ।
मृषा मृधं सादिबले कुतूहलान्नलस्य नासीरगते वितेनतुः ॥ ६८ ॥

तत इति । ततः पुराद्बहिर्गमनानन्तरं प्रतीच्छ गृहाण प्रहर जहीति भाषिणि माणे इत्यर्थः । परस्परमन्योन्योपरि उल्लासितानि प्रसारितानि शल्यपल्लवानि तो ग्राणि याभ्यां ते तथोक्ते शल्यं तोमरमिति अमरः । नलस्य नासीरगते नासिक र्त्तिनि सेनामुखन्तु नासीरमित्यमरः । सादिबले तुरङ्गसैन्ये कुतूहलात् मृषामृधं युद्धं युद्धनाटकमित्यर्थः । वितेनतुश्चक्रतुः मृधमायोधनं संख्यमित्यमरः ॥ ६८ ॥

नगरके बाहर जाकर उनकी घुड़सवार सेना बर्छी आदि अस्त्र-शस्त्रोंकी नोकोंको उठाकर कहती थी "लो, मारो, बढ़े चलो ।" ऐसे वाक्य कहती हुई वह सेना मानो समय "युद्ध-नाटकसा" कर रही थी ॥ ६८ ॥

प्रयातुमस्माकमियं कियत्पदं धरा तदम्भोधिरपि स्थलायताम् ।
इतीव वाहैर्निजवेगदर्पितैः पयोधिरोधक्षममुत्थितं रजः ॥ ६९ ॥

प्रयातुमिति । इयं धरा भूः समुद्रातिरिक्तेति भावः । अस्माकं प्रयातुं प्रस्थातुं पदं गन्तव्यं स्थानं न किञ्चित्पर्याप्तमित्यर्थः । तस्मादम्भोधिरपि स्थलायतां स्थ दाचरतु भूरेव भवत्वित्यर्थः । कर्तुः क्यङ् सलोपश्चेति क्यङ् प्रत्ययः । इतीवेति । इति मत्वेत्यर्थः इतिनैव गम्यमानार्थत्वादप्रयोगः अन्यथा पौनरुक्त्यात् क्रियानि त्प्रेक्षा । निजवेगेन दर्पितैः सञ्जातदर्पैः वाहैर्नलाश्वैः पयोधिरोधक्षमं समुद्र पर्याप्तं रज उत्थितं उत्थापितं तथा सान्द्रमिति भावः ॥ ६९ ॥

यह पृथ्वी हमारे सञ्चरणके लिए कुछ चरणमात्र है अथवा कुछ चरणमात्र भी है । अर्थात्—पृथ्वी बहुत छोटी है । अतः समुद्र भी स्थल भागमें परिणत हो जाय तो कुछ पड़ें ही जायगी और हम लोग दौड़ सकेंगे । ऐसा विचारकर ही उन समुद्रको आच्छादित करने योग्य पर्याप्त रेणु अपनी—गतिके वेगके दर्पमें खूब उड़ायी

हरेर्यदक्रामि पदैककेन खं पदैश्चतुर्भिः क्रमणेऽपि तस्य नः ।
त्रपा हरीणामिति नम्रिताननैर्न्यवर्ति तैरर्धनभःकृतक्रमैः ॥ ७० ॥

हरेरिति । यत् खमाकाशं हरेर्विष्णोरेककेन एकाकिना एकादाकिनिच्चासहाये इति
कारात् कन्प्रत्ययः । पदा पादेन पादः पदङ्घ्रिश्चरणोऽस्त्रियामित्यमरः । पद्दन्नित्यादिना
दादेशः । अक्रामि अलङ्घि, तस्य खस्य चतुर्भिः पदैः क्रमणे लङ्घने कृते सत्यपीति
पः । हरीणां वाजिनां विष्णूनां चेति गम्यते, यमानिलेन्द्रचन्द्रार्कविष्णुसिंहांशुवा-
षु । शुकाहिकपिभेकषु हरिर्ना कपिले त्रिष्वित्यमरः । उभयत्रापि नोऽस्माकं त्रपेति
त्यर्थः । गम्यार्थत्वादिवशब्दस्याप्रयोगः अतएव गम्योत्प्रेक्षा, नम्रितानि निम्नीकृतानि
ाननानि यैस्तैः हरिभिः अर्द्धे नभसि कृतक्रमैः कृतलङ्घनैः सद्भिर्न्यवर्त्ति निवर्त्तितम्
ावे लुङ् । यदन्येन पुंसा लघूपायेन साधितं तस्य गुरूपायेन करणं समानस्य
ाघवाय भवेदिति भावः । एतेन प्लुतगतिरुक्ता तत्र गगनलङ्घनस्य सम्भवादिति
ावः ॥ ७० ॥

भगवान् विष्णुने जिस आकाशमण्डलको अपने पैरसे अतिक्रमित किया उसी आकाश-
ण्डलको हम लोग अपने चार पैरोंसे अतिक्रमित करें—धिक् हमारी चालोंको—ऐसा सोच
र उन घोड़ोंने, जो आकाशको अतिक्रमित करने जा रहे थे, अपने मुखोंको नीचे झुका
लिया ॥ ७० ॥

चमूचरास्तस्य नृपस्य सादिनो जिनोक्तिषु श्राद्धतयेव सैन्धवाः ।
विहारदेशं तमवाप्य मण्डलीमकारयन् भूरि तुरङ्गमानपि ॥ ७१ ॥

चमूचरा इति । तस्य नृपस्य चमूचराः सेनाचराः चरेष्टच्, सिन्धुदेशभवाः सैन्धवाः
श्वाः, हयसैन्धवसप्तय इत्यमरः । तत्र भव इत्यणप्रत्ययः तत्सम्बन्धिनोऽपि सैन्धवाः
स्येदमित्यण् ते सादिनः अश्वसादिन इत्यर्थः, जिनोक्तिषु श्राद्धतयेव जैनदर्शनश्रद्धा-
तयैवेत्युत्प्रेक्षा श्रद्धार्चावृत्तिभ्योऽणिति मत्वर्थीयोऽणप्रत्ययः, तं विहारदेशं सञ्चारभूमिं
गतालयश्च विहारो भ्रमणे स्कन्धे लीलायां सुगतालय इति विश्वः । अवाप्य तुरङ्गमान्
रि बहुलं मण्डलीमपि मण्डलाकारं च अकारयन् अपिशब्दोऽवाप्तिसमुच्चयार्थः ।
न्यत्र मण्डलीं मण्डलासनमित्यर्थः बौद्धाः स्वकर्मानुष्ठाने प्रायेण मण्डलानि कुर्वन्ति
ति प्रसिद्धिः ॥ ७१ ॥

यथा—बौद्ध गण अपने विहारों ( मन्दिरों ) में मण्डलाकार होकर भगवान्की प्रार्थना
रते हैं । वैसे ही घोड़े भी सञ्चारस्थलको प्राप्तकर मण्डलाकार होकर खड़े हो गये ॥७१॥

द्विषद्भिरेवास्य विलङ्घिता दिशो यशोभिरेवाब्धिरकारि गोष्पदम् ।
इतीव धारामवधीर्य्य मण्डलीक्रियाश्रियामण्डि तुरङ्गमैः स्थली ॥७२॥

द्विषद्भिरिति । अस्य नलस्य द्विषद्भिरेव पलायमानैरिति भावः । दिशो लङ्घिताः,
स्य यशोभिरेवाब्धिः गोः पदं गोष्पदमकारि गोष्पदमात्रः कृतः गोष्पदं सेविता-

सेवितप्रमाणार्थे इति सुडागमषत्वयोर्निपातः। इतीव इति मत्वेवेत्युत्प्रेक्षा, अन्यसाधा
कर्म नोत्कर्षाय भवेदिति भावः। तुरङ्गैर्धाराङ्कतिं जातावेकवचनं पञ्चापि धारा इत्यर्थ
"आस्कन्दितं धौरितकं रेचितं वल्गितं प्लुतम्। गतयोऽमूः पञ्च धारा" इत्यमरः। अ
धीर्य्यं अनादृत्य मण्डलीक्रियाश्रिया मण्डलीकरणलक्ष्म्या मण्डलगत्यैवेत्यर्थः। स्थ
कृत्रिमा भूः जानपदेत्यादिना कृत्रिमार्थे ङीप्, असण्डि अभूपि मडि भूषणायामि
धातोर्ण्यन्तात् कर्मणि लुङ् इदित्वान्नुमागमः॥ ७२॥

महाराज नलके शत्रुओंने भागकर चारों दिशाओंका उल्लङ्घन किया है तथा उनके य
समुद्रको गोपद (गोखुर) के सदृश बना दिया है। ऐसा सोच कर उन घोड़ोंने भी
स्थानको मण्डलाकार होकर सजा दिया और चलना छोड़ दिया॥ ७२॥

**अचीकरच्चारुहयेन या भ्रमीर्निजातपत्रस्य तलस्थले नलः।**
**मरुत् किमद्यापि न तासु शिक्षते वितत्य वात्यामयचक्रचंक्रमान्॥७**

अचीकरदिति। नलश्चारु यथा भवति तथा हयेन प्रयोज्येन कर्त्रा निजातपत्र
तलस्थले अधःप्रदेशे अधः स्वरूपयोरस्त्री तलमित्यमरः। या भ्रमीर्मण्डलगतीरच
करत् कारितवान्, करोतेर्णौ चङ्। तासु भ्रमीषु विषये मरुत् अद्यापि वातानां समू
वात्या, वातादिभ्यो यः। अत्र तद्भ्रमयो लक्ष्यन्तो तन्मयान् तद्रूपान् चक्रचंक्रमा
मण्डलगतीर्वितत्य विस्तीर्य्य न शिक्षते किन्नाभ्यस्यते किमित्युत्प्रेक्षा शिक्षितश्चे
तथा सोऽपि गतिं कुर्यादित्यर्थः, वायोरप्यसम्भाविता गतीरचीकरदिति भावः॥७३॥

महाराज नल छत्र लगाये हुए घोड़े पर बैठे थे। अतः उनके छत्रसे मण्डलीभूत होक
पवन नीचे आता था। उसे देखकर ऐसा ज्ञात होता था कि, मानो, पवन उनके सुन्द
घोड़ेसे मण्डल होनेकी गतिविधि सीख रहा है और उस मण्डल गतिको महाराज नल अप
घोड़ेसे करवा रहे हैं॥ ७३॥

**विवेश गत्वा स विलासकाननं ततः क्षणात् क्षौणिपतिर्धृतीच्छया।**
**प्रबालरागच्छुरितं सुषुप्सया हरिर्घनच्छायमिवाम्भसां निधिम्॥७४॥**

विवेशेति। ततः स क्षौणीपतिः क्षणाद्गत्वा धृतीच्छया सन्तोषकाङ्क्षया प्रवाल
पल्लवाः अत्यत्र प्रवालाः विद्रुमाः, प्रवालो वल्लकीदण्डे विद्रुमे नवपल्लव इत्यमरः
तेषां रागेणारुण्येन छुरितं रूषितं घनच्छायं सान्द्रानातपमन्यत्र मेघकान्ति छायात्
नातपे कान्ताविति विश्वः। विलासकाननं क्रीडावनम् अन्यत्र वयोरभेदात् विलास
कानां विलेशयानां सर्पाणाम् आननं प्राणणं सुषुप्सया स्वप्तुमिच्छया हरिर्विष्णुरम्भ
सान्निधिमब्धिमिव विवेश॥ ७४॥

वे महाराज नल आनन्दोल्लासके लिए अपने विलास उपवनमें गये। उस उपवन
लाल-लाल पल्लवोंकी कोरोंसे सुसज्जित घने पेड़ लगे थे। अतः उस उपवनमें जाते हुए
ऐसे शोभित हुए, जैसे—मूँगोंकी कोरोंसे सुसज्जित समुद्रमें सयनार्थ जाते हुए विष्णु भगवा
शोभित होते हैं॥ ७४॥

वनान्तपर्य्यन्तमुपेत्य सस्पृहं क्रमेण तस्मिन्नवतीर्णदृक्पथे।
न्यवर्त्ति दृष्टिप्रकरैः पुरौकसामनुव्रजद्बन्धुसमाजबन्धुभिः॥ ७५॥

वनान्तेति। अनुव्रजद्बन्धुसमाजबन्धुभिः स्नेहादनुगच्छद्बन्धुससङ्घदृशैरित्यर्थः। अतएवोपमालङ्कारः। पुरौकसां दृष्टिप्रकरैर्दृष्टिसमूहैः कर्तृभिर्वनान्तपर्य्यन्तं काननोपान्तसीमाम् उदकप्रान्तपर्य्यन्तञ्चेति गम्यते, वने सलिलकानने इत्यमरः। सस्पृहं साभिलाषं यथा तथा उपेत्य गत्वा अथ अनन्तरं क्रमेण तस्मिन् नले अवतीर्णदृक्पथे अतिक्रान्तदृष्टिविषये सति न्यवर्त्ति निवृत्तं भावे लुङ्। यथा बन्धुभिः उदकात् प्रियं पान्थमनुव्रजेदित्यागमात्प्रवसन्तमनुव्रज्य निवर्त्यते तद्वदित्यर्थः॥ ७५॥

जैसे—लोग अतिथियोंको पहुँचानेके समय प्रेमसे उनको तब तक देखा करते हैं जब तक वे उनकी आँखोंसे ओझल नहीं हो जाते हैं। ततः आँखोंको उस ओरसे दूर कर लेते हैं। ठीक इसी प्रकारसे पुरवासी गण भी उन महाराजको तब तक देखते रहे जब तक वे वनके उपान्त भागमें जाकर आँखोंके ओझल नहीं हो गये और फिर उन्होंने अपनी आँखें उस ओरसे हटा लीं॥ ७५॥

ततः प्रसूने च फले च मञ्जुले स सम्मुखस्थाङ्गुलिना जनाधिपः।
निवेद्यमानं वनपालपाणिना व्यलोकयत्काननरामणीयकम्॥ ७६॥

तत इति। ततः वनप्रवेशानन्तरं स जनाधिपो नलः मञ्जुले मनोज्ञे प्रसूने कुसुमे फले च विषये सम्मुखीना सन्दर्शिनी सम्मुखावस्थितवस्तुप्रकाशिकेति यावत्। यथामुखसम्मुखस्य दर्शनः ख इति खप्रत्ययान्तो निपातः। तादृशी अङ्गुली यस्य तेन वनपालपाणिना निवेद्यमानम् इदामदमित्यङ्गुल्या पुष्पफलादिनिर्देशेन प्रदर्श्यमानमित्यर्थः। काननरामणीयकं वनरामणीयकं योपधाद्गुरूपोत्तमाद्वुञ् इति वुञ्प्रत्ययः। व्यलोकयत् अपश्यदिति स्वभावोक्तिः॥ ७६॥

वनके उपवनमें प्रवेश करने पर—वहाँके मालीने, उन महाराज नलको, अपने हाथोंकी अंगुलियोंसे, सुन्दर फल–फूलोंसे सुसज्जित, वृक्षोंकी शोभासे हरे–भरे उपवनकी छटा दिखायी॥ ७६॥

फलानि पुष्पाणि च पल्लवे करे वयोऽतिपातोद्गतवातवेपिते।
स्थितैः समाधाय महर्षिवार्द्धकाद्वने तदातिथ्यमशिक्षि शाखिभिः॥७७॥

फलानीति। वयोऽतिपातेन पक्षिपातेन बाल्याद्यपगमेन चोद्गतेनोत्थितेन वातेन वायुना वातदोषेण च वेपिते कम्पिते, खगबाल्यादिनोर्वय इत्यमरः। पल्लव एव कर इति व्यस्तरूपकं फलानि पुष्पाणि च समाधाय निधाय स्थितैस्तिष्ठद्भिः वने शाखिभिर्वृक्षैः वेदशाखाध्यायिभिश्च शाखाभेदे द्रुमे शाखा वेदेऽपीति वैजयन्ती। तदातिथ्यं तस्य नलस्यातिथ्यम् अतिथ्यर्थं कर्म, अतिथेर्ञ्य इति ञ्यप्रत्ययः। महर्षीणां वार्धकाद्वृद्धसमूहात् तत्सम्बन्धिमहर्षिसङ्घादित्यर्थः। शिवभागवतवत्समासः। वृद्ध सङ्घे तु वा-

द्वकमित्यमरः । वृद्धाच्चेति वक्तव्यमिति समूहार्थे वुञ् प्रत्यः । अशिक्षि शिक्षितम स्तम्, अन्यथा कथमिदमाचरितमिति भावः । कर्मणि लुङ् उत्प्रेक्षेयं सा च व्यञ्जकाप्रयोगाद्गम्या पूर्वोक्तरूपकश्लेषाभ्यामुत्थापिता चेति सङ्करः ॥ ७७ ॥

पक्षियोंके उड़नेके द्वारा उत्पन्न हवासे अपने पल्लवरूपी हाथोंको हिलाते हुए तथा उन फल–फूल को रखे हुए वहाँके वृक्षगणोंने उन महाराज नलका स्वागत किया। जिसे देखकर ज्ञात होता था कि उन वृक्षोंने वह स्वागतक्रिया उन तपस्वियोंसे सीखी है, जो तपस्वी उपवनमें निरन्तर तप किया करते थे ॥ ७७ ॥

विनिद्रपत्त्रालिगतालिकैतवान्मृगाङ्कचूडामणिवर्जनार्जितम् ।
दधानमाशासु चरिष्णु दुर्यशः स कौतुकी तत्र ददर्श केतकम् ॥ ७८ ॥

विनिद्रेति । विनिद्रपत्त्रालिगतालिकैतवात् विकचदलावलिस्थितभृङ्गमिषात् मृगाङ्कचूडामणेरीश्वरस्य कर्तुर्वर्ज्जनेन परिहारेणार्जितं सम्पादितं न केतक्या सदाशिवमिति निषेधादिति भावः । आशासु चरिष्णु सञ्चरणशीलं अलङ्कृञित्यादिना चरेरिष्णुच् प्रत्ययः । दुर्यशोऽपकीर्त्तिं दधानं कैतकं केतकीकुसुमं तत्र वने स नलः कौतुकी सुयं ददर्श अर्हस्य महापुरुषस्य बहिष्कारो दुष्कीर्त्तिकर इति भावः । अत्रालिकैतवादित्ये लित्वादह्नवेन तेषु दुर्यशस्त्वारोपादपह्नुत्यलङ्कारः । निषेध्यविषये साम्यादन्यारोपे पह्नुतिरिति लक्षणात् ॥ ७८ ॥

विकसित पुष्पोंपर बैठी हुई भौंरोंकी पंक्तियाँ ही मानो, जिसकी अपकीर्ति स्वरूप तथा जिसके फूल मृगांकचूडामणि शिवजीके शिर पर चढ़ाना शास्त्रोंसे वर्जित है, जिसकी अपकीर्तिरूपी सुगन्ध चारों दिशाओंमें विस्तृत है, ऐसी केतकीको उन महाराज नलने देखा ॥ ७८ ॥

वियोगभाजां हृदि कण्टकैः कटुर्निधीयसे कर्णिशरः स्मरेण यत् ।
ततो दुराकर्षतया तदन्तकृद्विगीयसे मन्मथदेहदाहिना ॥ ७९ ॥

अथ त्रिभिः कैतकोपालम्भमाह—वियोगेत्यादि । हे कैतक ! यद्यस्मात्त्वं स्मरेण वियोगभाजां हृदि कण्टकैः निजतीक्ष्णावयवैः कटुस्तीक्ष्णः कैतकविशेषणस्यापि कर्णिशरत्वं विशेषणविवक्षया पुंल्लिङ्गनिर्देशः किन्तु उद्देश्यविशेषणस्य विधेयविशेषण क्लिष्टम् । कर्णवत् कर्णि प्रतिलोमशल्यं तद्वान् शरः कर्णिशरः सन्निधीयसे कण्टक कैतकस्य कर्णिशरत्वरूपणाद्रूपकालङ्कारः । ततः कर्णिशरत्वादिवद्दुराकर्षतया दुरुद्धतया तदन्तकृत्तेषां वियोगिनां मारकं मन्मथदेहदाहिना स्मरहरेण विगीयसे विगर्ह्यसे द्वेष्यवत् द्वेष्योपकरणमप्यसह्यमेव, तदपि हिंस्रं चेत् किमु वक्तव्यमिति भावः । अ श्वरकर्तृकस्य केतकीविगर्हणस्य तद्गतवियोगिहिंस्रताहेतुकत्वोत्प्रेक्षणाद्धेतूत्प्रेक्षा व्यञ्जकाप्रयोगाद्गम्या सा चोक्तरूपकोत्थापितेति सङ्करः ॥ ७९ ॥

निम्नांकित तीन श्लोकोंसे महाराज नलने केतकीका कोधपूर्वक तिरस्कार किया है:—



हे केतकी ! तुम कंटकाकीर्ण होनेके कारण शिवजीसे त्याग दी गयी हो। तुम का

देवकी बाणस्वरूपिणी हो। अतः वियोगियोंके हृदयोंको वेधनेवाली हो तथा उन वियोगियोंका नाश भी करनेवाली हो ॥ ७९ ॥

त्वदग्रसूची सचिवः स कामिनोर्मनोभवः सीव्यति दुर्यशः पटौ।
स्फुटञ्च पत्रैः करपत्रमूर्तिभिर्वियोगिहृद्दारुणि दारुणायते ॥ ८० ॥

त्वदिति। तवाग्रण्येव सूच्यः सचिवाः सहकारिणो यस्य स तथोक्तः स प्रसिद्धो मनोभवः कामिनी च कामी च कामिनौ तयोः, पुमान् स्त्रियेत्येकशेषः। दुर्यशांसि अपकीर्त्तयस्ताः पटाविति रूपकं तानि सीव्यति कण्टकस्यूतं करोतीत्यर्थः। किञ्चेति चार्थः। करपत्रमूर्त्तिभिः क्रकचाकारैः क्रकचोऽस्त्री करपत्रमित्यमरः। पत्रैस्तैर्वियोगिनां हृद्येव दारुणि दारयतीति दारुणो विदारको भेत्ता स इवाचरतीति दारुणायते, कर्त्तुः क्यङ् सलोपश्चेति क्यङन्तात् लट् दारुणायत इत्युपमा सा च हृद्दारुणीति रूपकानुप्राणितेति सङ्करः ॥ ८० ॥

हे केतकी ! तुम्हारे कांटोंकी सूइयोंके सहारेसे वह कामदेव कामी और कामिनीके सुयशरूपी दो वस्त्रोंको बुनता है और तुम्हारे आरेके समान कटीले पत्रोंसे वियोगियोंके दिलचित्तोंको छेदता है ॥ ८० ॥

धनुर्मधुस्विन्नकरोऽपि भीमजा परं परागैस्तव धूलिहस्तयन्।
प्रसूनधन्वा शरसात्करोति मामितिक्रुधाक्रुश्यत तेन कैतकम् ॥ ८१ ॥

धनुरिति। हे कैतक ! प्रसूनं धन्व धनुर्यस्येति प्रसूनधन्वा पुष्पचापः वा संज्ञायामित्यनङादेशः। अतएव धनुषो मधुना मकरन्देन स्विन्नकरः आर्द्रपाणिः सन् अतएव परागैः रजोभिः धूलिहस्तयन् पुनः पुनः धूल्युद्धावितहस्तमात्मानं कुर्वन् अन्यथा धनुःस्रंसनादिति भावः, तत्करोतेर्ण्यन्ताल्लटः शत्रादेशः। अतिभीमजा परमतिमात्रंमयन्त्या सक्तं मां शरसात् शराधीनङ्करोति तदधीने च इति सातिप्रत्ययः, अन्यथा ग्रस्तचापः स मां किंकुर्यादिति भावः। इतीत्थं श्लोकत्रयोक्तिरिति तेन राज्ञा क्रुधा कैतकमाक्रुश्यत अपराधोद्घाटनेन अघोष्यतेत्यर्थः ॥ ८१ ॥

हे कैतकी ! कामदेवका हाथ सदा फूलोंके रसोंसे भीगा रहता है क्योंकि उसका धनुष फूलोंका है। अतः वह वियोगियों पर भीगे हाथोंसे जब बाणोंको चलानेमें असमर्थ हो जाता तब तुम्हारे फूलोंके परागोंसे वह अपना हाथ सुखा लेता है—इसलिए तुम उसके सहायक हो ॥ ८१ ॥

विदर्भसुभ्रूस्तनतुङ्गताप्तये घटानिवापश्यदलं तपस्यतः।
फलानि धूमस्य धयानधोमुखान् स दाडिमे दोहदधूपिनिद्रुमे ॥ ८२ ॥

विदर्भेति। तरुगुल्मलतादीनां अकाले कुशलैः कृतम्। पुष्पाद्युत्पादितं द्रव्यं दोहदं स्यात्तु तत्क्रियेति शब्दार्णवे दोहदश्चासौ धूपश्च तदुक्तं मेषामिषाम्बु संसेकस्तत्केशामिषधूपनं श्रेयानयं प्रयोगः स्यात् दाडिमीफलवृद्धये। मत्स्याज्यतिफलालेपमासे राजाविकोद्भवैः

लेपित्ता धूपिता सूते फलान्तलीव दाडिमी। आवि क्काथेन संसिक्ता धूपिता तसरोमा फलानि दाडिमी सूते सुबहूनि पृथूनि चेति तद्वति दाडिमीद्रुमे फलानि विदर्भसु दमयन्त्याः स्तनयोर्या तुङ्गता तदाप्तये तादृग्गौन्नत्यलाभायेत्यर्थः। अलमत्यर्थन्तपस्तपश्चरतः, कर्मणो रोमन्थतपोभ्यां वर्त्तिचरोरिति क्यङ् प्रत्यये तपसः परस्मै वक्तव्यं, धूमस्य दोहदधूमस्य धयन्तीति धयान् पातॄन् धेटपाने अवातश्चोपसर्गे उपसर्गग्रहणन्नानुवर्त्ति पच्चत्वात् पाघ्रेत्यादिनानुपसृष्टादपि धेटः शप्रत्यय इति अतएव काशिकायां केचिदुपसर्ग इति नानुवर्त्तयन्तीति अधोमुखान् घटानिव अपश्य त्युत्प्रेक्षा महाफलार्थिन इत्थं उग्रं तपस्यन्तीति भावः ॥ ८२ ॥

उन महाराज नलने, धूम्र पीनेवाले तथा नीचेकी ओर मुख किये हुए तप करने कलशोंके समान अनारके वृक्षोंमें लगे फलोंको देखा—उस समय वे फल ऐसे दीख मानों, वे लोग विदर्भसुभ्रू (दमयन्ती) के कुचोंकी तुङ्गता प्राप्तिके लिए तप कर रहे हों।

**वियोगिनीमैक्षत दाडिमीमसौ प्रियस्मृतेः स्पष्टमुदीतकण्टकाम् ।**
**फलस्तनस्थानविदीर्णरागिहृद्विशच्छुकास्यस्मरकिंशुकाशुगाम् ॥ ८३**

वियोगिनीमिति । असौ नलः प्रियास्मृतेर्दमयन्तीस्मरणादिव स्पष्टं व्यक्तमुदी ईण्गताविति धातोः कर्त्तरि क्तः । उदिताः उद्गताः कण्टकाः स्वावयवसूचय एव कण्रोमाञ्चा यस्यास्तामिति श्लिष्टरूपकम् । वेणौ द्रुमाङ्गे रोमाञ्चे क्षुद्रशत्रौ च कण्टक वैजयन्ती । फलान्येव स्तनौ तावेव स्थानं तत्र विदीर्णो रागो यस्यास्तीति रागि वर्णमनुरक्तञ्च यत्तस्मिन् हृदि विशत् बीजभक्षणान्तःप्रविशच्छुकास्यरूपं शुकतुण्ड स्मरस्य किंशुकं फलाशकुड्मलमेवाशुगो बाणो यस्यास्तां दाडिमीमेव वियोगिनीं हिणीमैक्षत अपश्यत् रूपकालङ्कारः । विः पक्षी तद्योगिनीमिति च गम्यते ॥ ८३ ॥

उन महाराज नलने, प्रियके संस्मरणसे स्पष्ट उदित रोमाञ्चरूपी कांटोंको अपने ल लाल कुचस्थानपर चुभनेका अनुभव करनेवाली वियोगिनीके समान, अनारके वृक्षोंके पर बैठने वाले सुग्गोंकी चोंचोंसे वेधे जानेवाले कामदेवके पलाश बाणोंके समान, देखा ॥

**स्मरार्द्धचन्द्रेषुनिभे क्रशीयसां स्फुटं पलाशेऽध्वजुषाम्पलाशनात् ।**
**स वृन्तमालोकत खण्डमन्वितं वियोगिहृत्खण्डिनि कालखण्डजम् ॥**

स्मरार्द्धेति । नलः स्मरस्य योऽर्द्धचन्द्रः अर्द्धचन्द्राकार इषुस्तन्निभे तत्सदृशे समासत्वादस्वपदविग्रहः, अत आहामरः—स्युरुत्तरपदेत्यमी । निभसङ्काशनीकाश काशोपमादय" इति। वियोगिनां हृत्खण्डिनि हृदयवेधिनि क्रशीयसां कृशतराणा जुषां अध्वगामिनाम् पलाशनात् मांसभक्षणात् पलाशे पलमश्नन्तीति व्युत्पत्त्या शसंज्ञभाजि किंशुककलिकायामित्यर्थः। अन्वितं सम्बद्धं वृन्तं प्रसवबन्धनं कालखण्डजं खण्डं यकृत्खण्डमिति व्यस्तरूपकम् आलोकत आलोकितवान् काल यकृत्समे इत्यमरः। तच्च दक्षिणपार्श्वस्थः कृष्णवर्णो मांसपिण्डविशेषः ॥ ८४ ॥

उन महाराज नलने, कामदेवके बाणके तुल्य अर्द्धचन्द्राकार रूपमें पलाशके पुष्पके ऊपर एक 'डण्ठल' देखा जो विरही कृशांग यात्रियोंके यकृत भागके समान उसमें चिपका हुआ प्रतीत हुआ। उसे देखकर उन्होंने विचार किया—सम्भव है—इसीसे 'पलाश' का नाम "पलाश" ( मांसभक्षी ) है ॥ ८४ ॥

**नवा लता गन्धवहेन चुम्बिता करम्बिताङ्गी मकरन्दशीकरैः।**
**दृशा नृपेण स्मितशोभिकुड्मला दरादराभ्यां दरकम्पिनी पपे ॥ ८५ ॥**

नवेति। गन्धवहेन वायुना चुम्बिता स्पृष्टा अन्यत्रानुलिप्तेन पुंसा वीक्षिता मकरन्दसीकरैः पुष्परसकणैः करम्बिताङ्गी व्यामिश्रितरूपा अन्यत्र स्विन्नाङ्गीति च गम्यते। स्मितशोभिनः विकासरम्या कुड्मला मुकुला रदनाश्च यस्यास्तां मन्दहासमधुरदन्तमुकुला च गम्यते। दरकम्पिनी वायुः स्पर्शादीषत्कम्पिनी सात्त्विकवेपथुमती च नवा लता वल्ली तत्सदृशी कान्ता च गम्यते। नृपेण कर्त्रा दृशा करणेन दरादराभ्यां भयतृष्णाभ्यां उपलक्षितेन सतापवेपिता गाढं दृष्टा इत्यर्थः। उद्दीपकत्वात् दरः प्रियासादृश्यादादरश्च दरोऽस्त्री शङ्कभीगर्त्तेष्वल्पार्थे त्वव्ययं इति वैजयन्ती। अत्र प्रस्तुतविशेषणसाम्यादप्रस्तुतनायिकाप्रतीतेः समासोक्तिरलङ्कारः। विशेषणस्य तौल्येन यत्र प्रस्तुतवर्णनात्। अप्रस्तुतस्य गम्यत्वे सा समासोक्तिरिष्यत इति लक्षणात् ॥ ८५ ॥

उन महाराज नलने, पवन द्वारा परिचुम्बित कंपती हुई लताको उत्सुकता एवं भयके साथ देखा। वह लता पुष्परसके कणों तथा मन्दहास युक्त मनोहर दन्तमुकुलोंसे परिव्याप्त थी।

**विचिन्वतीः पान्थपतङ्गहिंसनैरपुण्यकर्माण्यलिकज्जलच्छलात्।**
**व्यलोकयच्चम्पककोरकावलीः स शम्बरारेर्बलिदीपिका इव ॥ ८६ ॥**

विचिन्वतीरिति। पन्थानं गच्छन्ति नित्यमिति पान्थाः नित्यपथिकाः पथोऽण् नित्यमित्यण्प्रत्ययः पन्थादेशश्च। त एव पतङ्गाः पक्षिणः पतङ्गः पक्षिसूर्ययोः इत्यमरः। तेषां हिंसनैः वधैः अपुण्यकर्माण्येव अलयः कज्जलानीवेत्युपमितसमासः। तेषां छलादित्यपह्नवालङ्कारः। विचिन्वतीः संगृह्णतीः हिंसापापकारिणीरित्यर्थः। चम्पककोरकावलीः शम्बरारेर्मनसिजस्य बलिदीपिकाः पूजादीपिका इवेत्युत्प्रेक्षा स नलो व्यलोकयत् ॥ ८६ ॥

उन महाराज नलने, चम्पककी कलियोंपर स्थित मधुपावलीको कामदेवकी पूजाकी दीपिकाके समान देखा मधुपावलीसे परिपूर्ण वे चम्पककी कलियाँ पथिकरूपी पतंगोंकी हत्याओंसे मानो, पापोंकी राशि एकत्र कर रही थी ॥ ८६ ॥

**अमन्यतासौ कुसुमेषुगर्भजं परागमन्धङ्करणं वियोगिनाम्।**
**स्मरेण मुक्तेषु पुरा पुरारये तदङ्गभस्मेव शरेषु सङ्गतम् ॥ ८७ ॥**

अमन्यतेति। असौ नलः कुसुमान्येव इषवः कामबाणास्तेषां गर्भात् गर्भजातं वियोगिनामिति कर्मणि षष्ठी। अन्धाः क्रियन्तेऽनेनेत्यन्धङ्करणं आढ्यसुभगेत्यादिना-

ण्ययें ल्युन् प्रत्ययः अरुर्द्विषदित्यादिना मुमागमः। तं परागं पुरा पूर्वं पुरारये पुरा-राय स्मरेण मुक्तेषु शरेषु सङ्गतं संसक्तं तस्य पुरारेरङ्गे यद्भस्म तदिवामन्यत। उद्प्रेक्षितवानित्यर्थः। पुरापुरारये ये मुक्ताः त एवैते पुरोवर्त्तिनः कुसुमेषव इत्य-मानः, अन्यथैषां तदङ्गभस्म सङ्गोत्प्रेक्षानुत्थानादिति ॥ ८७ ॥

उन महाराज नलने वियोगी हृदयदाहक काम बाणोंसे उत्पन्न परागको भगवान् शि-की भस्म समझा। वह भस्म प्राचीन कालमें कामदेवके द्वारा शिवजी पर प्रक्षिप्त बा-निकलकर शिवजीके शरीरमें आलिंगित होकर निकली थी ॥ ८७ ॥

पिकाद्वने शृण्वति भृङ्गहूङ्कृतैर्दशामुदञ्चत्करुणां वियोगिनाम्।
अनास्थया सूनकरप्रसारिणीं ददर्श दूनः स्थलपद्मिनीं नलः ॥ ८८ ॥

पिकादिति। वने उपवने श्रोतरि पिकाद्वक्तुः सकाशात् भृङ्गहूङ्कृतैर्वियोगि-दशामलिहूङ्कारकृतां दुःखावस्थामित्यर्थः उदञ्चत्करुणां विकसद्वृक्षविशेषमुद्यत्-पञ्च यथा तथा शृण्वति सति करुणस्तु रसे वृक्षे कृपायां करुणा मतेति विश्व-अनास्थया श्रोतुमनिच्छया सूनं प्रसूनमेव करं प्रसारयतीति प्रसारिणीं पुष्परूपह-विस्तारिणीं तथोक्तामनिष्टकथां करे वारयन्तीमिव स्थितामित्यर्थः। सूनकरेति प्र-रिणीमितिरूपकानुप्राणिता गम्योत्प्रेक्षेयम्। स्थलपद्मिनीं नलो दूनः परितप्तः दूङः कर्त्तरि क्तः ल्वादिभ्यश्चेति निष्ठानत्वं, ददर्श ॥ ८८ ॥

उन महाराज नलने स्थल कमलिनी देखी जो अपने पुष्परूपी हाथको हिलाकर उस व-को सुननेमें अश्रद्धा प्रकट कर रही थी और बार-बार उसे सुनानेके लिए निवारण भी-रही थी। जिस व्यथित कथाको वनमें वृक्षगण अपने पुष्पोंको विकसित करके कोयलों-मधुर वाणी तथा भौंरोंकी गुंजारोंसे परिपूरित होकर सुन रहे थे। [ वियोगी गण कोयल-वाणी और भौंरोंकी गुंजारोंपर व्यथित हो रहे थे और वृक्षगण आनन्द ले रहे थे। प-स्थल कमलिनी इसे पसन्द नहीं करती थी और इसीसे वह अपने पुष्परूपी हाथको हिल-मना कर रही थी। ] ॥ ८८ ॥

रसालसालः समदृश्यतामुना स्फुरद्द्विरेफारवरोषहूङ्कृतिः।
समीरलोलैर्मुकुलैर्वियोगिने जनाय दित्सन्निव तर्जनाभयम् ॥ ८९ ॥

रसालेति। अमुना नलेन स्फुरन्तो द्विरेफास्तेषामारवो भ्रमरझङ्कार एव रोषणे-हूङ्कृतिर्हूङ्कारो यस्य सः समीरलोलैर्वायुचलैर्मुकुलैरङ्गुलिभिरिति भावः। वियो-जनाय तर्जनाभियं दित्सन् दातुमिच्छन्निव स्थितः ददातेः सन् प्रत्ययः सनि म-त्यादिना इसादेशः अत्र लोपोऽभ्यासस्येत्यभ्यासलोपः सस्यार्द्धधातुक इति सका-तकारः। रसालसालश्चूतवृक्षः समदृश्यत सम्यग्दृष्टः। द्विरेफेत्यादिरूपकोत्थापिते-र्जनाभयजननीत्प्रेक्षेति सङ्करः॥ ८९ ॥



उन महाराज नलने भ्रमरोंकी गुंजारोंसे अत्यन्त गुंजारित आमका वृक्ष देखा। जि-

मञ्जरियाँ मानो, वियोगियोंकी घृणाको बताकर दूसरोंको भय दायी कर रही थीं ॥ ८९ ॥

दिने दिने त्वं तनुरेधि रेऽधिकं पुनः पुनर्मूर्च्छ च मृत्युमृच्छ च ।
इतीव पान्थं शपतः पिकान् द्विजान्सखेदमैक्षिष्ट स लोहितेक्षणान् ॥ ९० ॥

दिनेदिने इति । रे इति हीनसम्बोधने । त्वं दिने दिने अधिकं तनुः एधि अधिकं कृशो भव आस्तेर्लोट् सिप् हुझल्भ्योर्हेर्धिरिति धित्वम् घ्वसोरेद्धावभ्यासलोपश्च इति एत्वं, पुनः पुनः मूर्च्छ च मृत्युं मरणमृच्छ च इति पान्थं नित्यपथिकं शपतः शपमानानिव स्थितानित्युत्प्रेक्षा, लोहितेक्षणान् रक्तदृष्टीन् एकत्र स्वभावतोऽन्यत्र रोषाच्चेति द्रष्टव्यं, पिकान् कोकिलान् द्विजान् पक्षिणो ब्राह्मणांश्च स नलः सखेदमैक्षिष्ट स्वस्यापि उक्त-शङ्कयेति भावः ॥ ९० ॥

उन महाराजने रक्तनेत्री कोयलोंको देखा जो पथिकोंको शाप दे रही थीं—"ऐ, दिनपर दिन दुर्बल होते जाओ" "बार-बार मूर्च्छित हो" "मरण प्राप्त करो" इत्यादि ॥ ९० ॥

अलिस्रजा कुड्मलमुच्चशेखरं निपीय चाम्पेयमधीरया दृशा ।
स धूमकेतुं विपदे वियोगिनामुदीतमातङ्कितवानशङ्कत ॥ ९१ ॥

अलिस्रजेति । अलिस्रजा भ्रमरपङ्क्त्या उच्चशेखरमुन्नतशिरोभूषणं अलिमलिना-मित्यर्थः । शिखास्वापीडशेखरावित्यमरः। चाम्पेयं चम्पकविकारं कुड्मलं अथ चाम्पेयः चम्पको हेमपुष्पक इत्यमरः । नन्वयुक्तमिदं न षट्पदो गन्धफलीमजिघ्रदित्यादा-वलीनां चम्पकस्पर्शाभावप्रसिद्धेरिति चेत् नैवं किन्तु स्पृष्टेयन्तावतैवास्पर्शोक्तिः क्वचित् केषाञ्चित् उक्तिपरिहारः अथवा चाम्पेयं नागकेसरं चाम्पेयः केसरो नागकेसरः काञ्चनाह्वय इत्यमरः । अधीरया दृशा निपीय विक्लवदृष्ट्या गाढं दृष्ट्वा आशङ्कित-वान् किञ्चिदनिष्टमुत्प्रेक्षितवान् स नलः अनिष्टाभ्यागमोत्प्रेक्षां शङ्कामाचक्षते बुधा इति लक्षणात् । वियोगिनां विपदे उदीतमुत्थितं धूमकेतुमशङ्कत अतर्कयदित्युत्-प्रेक्षालङ्कारः ॥ ९१ ॥

उन महाराज नलने भ्रमरावलीको और मुकुटधारी नागकेसरके फूलको अधीर दृष्टिसे प्रचुररूपेण देखा—और वियोगियोंकी विपत्तिमें ये उदित धूम्रकेतुके समान अनिष्ट फलदायक होनेवाले हैं—ऐसी आशंका की [ जैसे—धूम्रकेतु तारेके दिखायी देनेसे अनिष्ट होता है। तद्वत् इनके दिखायी देनेसे वियोगियोंको अनिष्ट होगा । ] ॥ ९१ ॥

गलत्परागं भ्रमिभङ्गिभिः पतत् प्रसक्तभृङ्गावलि नागकेशरम् ।
स मारनाराचनिघर्षणस्खलज्ज्वलत्कणं शाणमिव व्यलोकयत् ॥ ९२ ॥

गलदिति । स नलो गलत्परागं निर्यद्रजस्कं भ्रमिभङ्गिभिः भ्रमणप्रकारैरुपलक्षितं पतद् भ्रंश्यत् प्रसक्तभृङ्गावलि सक्तालिकुलं नागकेसरं कुसुमविशेषं मारनाराचनिघर्षणैः स्मरशरकर्षणैः स्खलन्तः लुठन्तः ज्वलन्तश्च कणाः स्फुलिङ्गा यस्य तं शाणं निकषोपल-मिवेत्युत्प्रेक्षा व्यलोकयत् शाणस्तु निकषः कष इत्यमरः ॥ ९२ ॥

उन महाराजने पराग निकलते हुए नागकेसरको देखा जिसपर भौंरें उड़-उड़कर रहे थे। उसे देखकर उन्हें ऐसा प्रतीत हुआ कि, यह कामदेवके अस्त्र-शस्त्र तेज करने पत्थर है और इसके चारों ओर चिनगारियां उड़ रही हैं। जैसे--शस्त्रोंपर धार धरनेके स पत्थरसे चिनगारियाँ निकलती हैं तद्वत् यहाँ पर भी निकल रही हैं ॥ ९२ ॥

**तदङ्गमुद्दिश्य सुगन्धि पातुकाः शिलीमुखालीः कुसुमाद्गुणस्पृशः ।**
**स्वचापदुर्निर्गतमार्गणभ्रमात् स्मरः स्वनन्तीरवलोक्य लज्जितः ॥ ९३ ॥**

**तदङ्गमिति । सुगन्धि शोभनगन्धं गन्धस्येत्यादिना समासान्त इकारः त तस्य नलस्याङ्गमुद्दिश्य लक्ष्यीकृत्य गुणो गन्धादिः मौर्वी च, गुणस्त्वावृत्तिशब्दादि न्द्रियामुख्यतन्तुष्विति वैजयन्ती । तत्स्पृशस्तद्युक्ताः स्पृशोऽनुदके क्विन्, कुसुम पादानात् पातुका धावन्तीः लषपतेत्यादिना उकञ्प्रत्ययः । स्वनन्तीर्ध्वनन्तीः श मुखालीः अलिपङ्क्तीः बाणपङ्क्तीश्चावलोक्य स्मरः स्वचापात् पौष्पाद्दुर्निर्गताः विष निर्गता ये मार्गणा बाणास्तद्भ्रमाद्धेतोर्लज्जितोऽभवत् न्यूनमिति शेषः । दुर्निर्गतेष ह्यधिकं स्वनन्तीति प्रसिद्धेः । अत्र स्वनच्छिलीमुखेषु दुर्निर्गतमार्गणभ्रमाद्भ्रा मदलङ्कारः स च शीलमुखेति श्लेषानुप्राणितादुत्थापिता चेयं स्मरस्य लज्जित त्प्रेक्षेत्यनयोरङ्गाङ्गिभावेन सङ्करः ॥ ९३ ॥**

उन महाराज नलके अंग-प्रत्यंगों पर सुगन्धित द्रव्य लगा था उस सुगन्धित द्रव्य मुग्ध होकर भ्रमरगण पुष्पगन्धको त्यागकर गुंजार करके आने लगे। उस गुंजारकी झंका श्रवणकर कामदेवको बड़ी लज्जा हुई। वह सोचने लगा-मेरे धनुषसे बाण ठीक नहीं छूटा॥

**मरुल्ललत्पल्लवकण्टकैः क्षतं समुच्चरच्चन्दनसारसौरभम् ।**
**स वारनारीकुचसञ्चितोपमं ददर्श मालूरफलं पचेलिमम् ॥ ९४ ॥**

**मरुदिति । मरुता वायुना ललत्पल्लवानाञ्चलत्किसलयानां कण्टकैस्तीक्ष्णाग्रैरवय क्षतं अन्यत्र विलसद्विटनखैः क्षतमिति गम्यते समुच्चरत् परितः प्रसर्पत् चन्दनसा स्येव सौरभं यस्य तत् अतएव वारनारीकुचेन वेश्यास्तनेन सञ्चितोपमं सम्पादि सादृश्यमित्युपमालङ्कारः । वारस्त्री गणिका वेश्येत्यमरः । कुलाङ्गनानखक्षताद्यनौचित्य द्वारविशेषण, पचेलिमं स्वतः पक्व कर्मकर्त्तरि केलिमच उपसंख्यानमिति पचेः केलि प्रत्ययः । मालूरफलं बिल्वफलं बिल्वे शाण्डिल्यशैलूषौ मालूरः श्रीफलावपीत्यमर स नलो ददर्श ॥ ९४ ॥**

उन महाराज नलने पवनके झोकोंसे हिलाये हुए पल्लवोंमें स्थित कांटोंसे क्षत-वि तथा चन्दनके समान सुगन्ध वाले परिपक्व बेलको बेलके वृक्षमें देखा। वह बेलका फल (वे वेश्याके कुचके सदृश पके नखक्षत वाला था ॥ ९४ ॥

**युवद्वयीचित्तनिमज्जनोचितप्रसूनशून्येतरगर्भगह्वरम् ।**

**स्मरेषुधीकृत्य धिया भियान्धया स पाटलायाः स्तवकं प्रकम्पितः ॥ ९५**

युवेति । युवा च युवती च तयोर्यूं नोर्द्वयी मिथुनं तस्याश्चित्तयोःकर्मणोर्निमज्जने यन्तात्ल्युट् उचितैः क्षमैः प्रसूनैः पुष्पबाणैः शून्येतरदशून्यं पूर्णं गर्भगह्वरं गर्भकुहरं यस्य तत् पाटलायाः पाटलवृक्षस्य स्तबकं कुसुमगुच्छंभियान्धया भयमूढया धिया भयजन्यभ्रान्त्येत्यर्थः स्मरेषुधीकृत्य कामतूणीकृत्य तथा विभ्रम्य इत्यर्थः, अतएव भयात् प्रकम्पितश्चकम्पे अत्र पाटलस्तबके मदनतूणीरभ्रमात् भ्रान्तिमदलङ्कारः कविसंमतसादृश्याद्विषये विहितात्मनि । आरोप्यमाणानुभवो यत्र स भ्रान्तिमान्मत इति लक्षणात् ॥ ९५ ॥

उन महाराज नलने युवक–युवतीके हृदय डूब जाने वाले एवं गम्भीर गुफावाले पाटल पुष्पको देखा और भयजन्य भ्रान्तिसे उसे वे कामबाण समझकर कांपने लगे ॥ ९५ ॥

मुनिद्रुमः कोरकितः शितिद्युतिर्वनेऽमुनामन्यत सिंहिकासुतः ।
तमिस्रपक्षत्रुटिकूटभक्षितं कलाकलापं किल वैधवं वमन् ॥ ९६ ॥

मुनीति । अमुना नलेन वने कोरकितः संजातकोरकः शितिद्युतिः पत्रेषु कृष्णच्छविः मुनिद्रुमोऽगस्त्यवृक्षः तमिस्रपक्षे त्रुटिकूटेन क्षयव्याजेन भक्षितं अभक्षितत्वे कुतः क्षय इति भावः । अत्र कूटशब्देन क्षयापह्नवेन भक्षणारोपादपह्नवभेदः । वैधवं चन्द्रसम्बन्धि विधुः सुधांशुः शुभ्रांशुरित्यमरः । कलाकलापङ्कलासमूहं वमन्नुद्गिरन् सिंहिकासुतोराहुरमन्यत किल खलु ? अत्र कोरकितशितद्युतित्वाभ्यां मुनिद्रुमस्येन्दुकलाकलापवमनविशिष्टराहुत्वोत्प्रेक्षा साचोक्तापह्नवोत्थापितेति सङ्करः ॥ ९६ ॥

उन महाराज नलने अगस्त्यके वृक्षमेंसे उसके फूलोंको खिलते हुए देखा—वह वृक्ष राहुके समान कृष्ण पक्षमें क्षीण चन्द्रको भक्षण करके चन्द्ररूपी फूलको ( शुक्ल पक्षमें ) उगल रहा था ॥ ९६ ॥

पुरोहठात्क्षिप्ततुषारपाण्डरच्छदावृतेर्वीरुधि बद्धविभ्रमाः ।
मिलन्निमीलं विदधुर्विलोकिता नभस्वतस्तं कुसुमेषुकेलयः ॥ ९७ ॥

पुर इति । पुरोऽग्रे हठात् झटित्याक्षिप्ता आकृष्टा तुषारेण हिमेन पाण्डराणां छदानां पत्राणां तुषारवत् पाण्डरस्य च्छदस्याच्छादकस्य वस्त्रस्य चावृतिरावरणं येन तस्य नभस्वतो वायोः विरुधि लतायां बद्धाः अनुबद्धा विभ्रमा भ्रमणानि विलासाश्च यास्तान्ताः कुसुमेषु विषये केलयः क्रीडाः कुसुमेषु केलयः कामक्रीडाश्च विलोकिताः सत्यस्तं नृपं नलं मिलन्निमीलो मिलनं यस्य तं विदधुः निमीलिताचक्षुरित्यर्थः विरहिणा मुद्दीपकदर्शनस्य दुःसहदुःखहेतुत्वात् अन्यत्र ( नेक्षेतार्कं न नग्नां स्त्रीं न च संसृष्टमैथुनामिति निषेधादिति भावः । ) अत्र प्रस्तुतनभस्वद्विशेषणसामर्थ्यादप्रस्तुतकामुकविरहप्रतीतेः समासोक्तिरलङ्कारः ॥ ९७ ॥

उन महाराजने पवनद्वारा निर्मित लताके विलास एवं कामक्रीड़ाको देखकर नेत्र बन्द कर लिये । वह पवन उस समय तुषारके समान शुभ्र हिमको लतापरसे दूर कर रहा था ॥ ९७ ॥

गता यदुत्सङ्गतले विशालतां द्रुमाः शिरोभिः फलगौरवेण ताम् ।
कथं न धात्रीमतिमात्रनामितैः स वन्दमानानभिनन्दति स्म तान् ॥ ९८ ॥

गता इति । द्रुमा यस्या धात्र्या उत्सङ्गतले उपरि देशे च विशालतां विवृद्धिं गतान्... तां धात्रीम्भुवञ्च उपमातरं वा धात्री जनन्यामलके वसुमत्युपमातृष्विति विश्वः, ... कर्मणिष्ट्रन्निति दधातेष्ट्रन् प्रत्ययः । फलगौरवेण फलभरेण सुकृतातिशयेन च हेतु... अतिमात्रं नामितैः प्रह्वीकृतैः नमेर्मित्त्वविकल्पाद्ध्स्वाभावः शिरोभिरग्रैः उत्तमाङ्गै... वन्दमानान् स्पृशतोऽभिवादयमानांश्च तान् प्रकृतान् द्रुमान् अतएव यच्छन्दानपे... स नलः कथं नाभिनन्दतिस्म अभिननन्दैवेत्यर्थः, वृक्षाणां क्षेत्रानुरूपफलस्य सम्पा... अपत्यानां च मातृभक्तिञ्च को नाम नाभिनन्दतीति भावः । अत्रापि विशेषणसामर्थ्या... पुत्रप्रतीतेः समासोक्तिरलङ्कारः ॥ ९८ ॥

उन महाराज नलने फल—फूलोंसे लदे वृक्षोंको देखा । वे वृक्ष फल—फूलोंके भार... पृथ्वीपर झुके जा रहे थे । जिन्हें देखकर ज्ञात होता था कि, वे वृक्ष जिस पृथ्वीमाता... गोदमें रहकर बढ़े हुए हैं उसे शिरोंसे प्रणाम करनेको झुक रहे हैं—अतः महाराज भी उन... वृक्षोंको प्रणाम कैसे न करते ॥ ९८ ॥

नृपाय तस्मै हिमितं वनानिलैः सुधीकृतं पुष्परसैरहर्महः ।
विनिर्मितं केतकरेणुभिः सितं वियोगिनेऽधत्त न कौमुदी मुदः ॥ ९९ ॥

अत्रातपस्य चन्द्रिकात्वनिरूपणाय तद्धर्मान् सम्पादयति । नृपायेति । वनानिलैः उद्यानवातैः हिमं शीतलं कृतं हिमितन्तत्करोतेर्ण्यन्तात् कर्मणि क्तः । पुष्परसैर्वनवाता... नीतैः मकरन्दैः सुधीकृतममृतीकृतं तथा केतकरेणुभिः सितं विनिर्मितं शुभ्रीकृतं अह्नो महस्तेजः अहर्मह आतपः रोः सुपीति रेफादेशः । तदेव कौमुदीति व्यस्तरूपकं त्रियो... गिने तस्मै नृपाय मुदः प्रमोदान् नाधत्त न कृतवती प्रत्युतोद्दीपकैवाभूदिति भावः ॥ ९९ ॥

केतकीके परागोंसे विमल तथा पुष्परससे युक्त होनेपर सुधाके समान शीतल, दिवसोंने और चन्द्रिका मय रात्रियोंने उन विरही महाराज नलको आनन्दित न किया ॥ ९९ ॥

वियोगभाजोऽपि नृपस्य पश्यता तदेव साक्षादमृतांशुमाननम् ।
पिकेन रोषारुणचक्षुषा मुहुः कुहूरुताहूयत चन्द्रवैरिणी ॥ १०० ॥

वियोगेति । वियोगभाजोऽपि वियोगिनोऽपि नृपस्य तदाननमेव साक्षादमृतांशुं प्रत्यक्षचन्द्रं पश्यता अतएव रोषादद्यापि चन्द्रतां न जहातीति क्रोधादिवारुणचक्षुषा पिकेन चन्द्रवैरिणी कुहूर्निजालाप एव कुहूनष्टचन्द्रममावास्येति श्लिष्टरूपकं, कुहूः स्यात् कोकिलालापनष्टेन्दुकलयोरपीति विश्वः । मुहुराहूयत आहुता किमित्युत्प्रेक्षा पूर्वोक्त... रूपकसापेक्षेति सङ्करः । अस्य चन्द्रस्येयमेव कुहूराह्वातव्या स्यात् तत्कान्तिराहित्यस... म्भवादिति भावः ॥ १०० ॥

उन वियोगी महाराज नलके मुखको साक्षात् चन्द्रके समान देखकर चन्द्रवैरिणी कोमल लाल–लाल नेत्रोंसे "कुहू" "कुहू" कहने लगी। [ 'कुहू' नाम अमावास्याका है—जिसमें चन्द्र नहीं उगता है। ] ॥ १०० ॥

अशोकमर्थान्वितनामताशया गतान् शरण्यं गृहशोचिनोऽध्वगान्।
अमन्यतावन्तमिवैष पल्लवैः प्रतीष्टकामज्वलदस्त्रजालकम् ॥ १०१ ॥

अशोकमिति। एष नलः पल्लवैः प्रतीष्टानि प्रतिगृहीतानि संछन्नानि कामस्य ज्वलदस्त्राणि तद्रूपकाणि जालकानि चारकानि बालमुकुलगुच्छा येन तं पल्लवसंछन्न-कुसुमरूपकामास्त्रमित्यर्थः। अन्यथा तद्दर्शनादेव ते म्रियेरन्निति भावः। अशोकमत अर्थान्वितनामता नास्ति शोकोऽस्मिन्नित्यन्वर्थसंज्ञा तत्कृतया आशया अस्मानप्य-शोकान् करिष्यतीत्यभिलाषेण शरणे रक्षणे साधुं समर्थं शरण्यं मत्वेति शेषः। शरणं रक्षणे गृह इति विश्वः तत्र साधुरिति यत्प्रत्ययः। आगतान् शरणागतानित्यर्थः। गृहान् दारान् शोचन्तीति गृहशोचिनः गृहानुद्दिश्य शोचन्त इत्यर्थः। गृहाः पत्न्यां गृहे स्मृत इति विश्वः। अध्वगान् प्रोषितान् अवन्तमिव शरणागतरक्षणे महाफलस्मरणादन्यथा महादोषस्मरणाच्च रक्षन्तमिवेत्यर्थः। अमन्यत ज्ञातवान् अस्त्रभीरूणां तद्गोपनमव रक्षणाय इति भावः ॥ १०१ ॥

उन महाराज नलने अशोक वृक्षको देखा—जिसकी शरणमें लोग जाकर शोक रहित होते हैं—क्योंकि, 'अशोक' का अर्थ है—शोक न होना। परन्तु, उस अशोकने अपने पल्लव-की प्रज्वलित काम वाणोंसे उन्हें वेधना शुरू किया ॥ १०१ ॥

विलासवापीतटवीचिवादनात् पिकालिगीतेः शिखिलास्यलाघवात्।
वनेऽपि तौर्य्यत्रिकमारराध तं क्व भोगमाप्नोति न भाग्यभाग्जनः ॥१०२॥

विलासेति। विलासवापी विहारदीर्घिका तस्यास्तटे वीचीनां वादनात्पिकाना-मलीनाञ्च गीतेर्गानात् शिखिनां मयूराणां लास्यलाघवात् नृत्यनैपुण्यात् च वनेऽपि तं नलं तौर्य्यत्रिकं नृत्यगीतवाद्यत्रयं कर्त्तृ आरराध आराधयामास तथा हि भाग्यभाक् भाग्यवान् जनः क्व भुज्यत इति भोगः सुखं तं नाप्नोति सर्व्वत्रैवाप्नोतीत्यर्थः। सामा-न्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासः ॥ १०२ ॥

भाग्यवान् पुरुष कहांपर सुख नहीं पाते हैं—देखिये उस वनमें भी उन महाराज नलको विहार क्रीड़ाकी बावलियां अपने तटोंकी तरंगोंसे वाद्य बजाकर सुनाती थीं। कोयलें और भौंरे मधुर गान सुनाते थे कि बहुना—मोरगण नृत्य दिखाते थे ॥ १०२ ॥

तदर्थमध्याप्य जनेन तद्वने शुका विमुक्ताः पटवस्तमस्तुवन्।
स्वरामृतेनोपजगुश्च शारिकास्तथैव तत्पौरुषगायनीकृताः ॥ १०३ ॥

तदर्थमिति। जनेन सेवकजनेन तदर्थं नलप्रीत्यर्थमध्याप्य स्तुतिं पाठयित्वा तस्मिन् वने विमुक्ताः विसृष्टाः पटवः स्फुटगिरः शुकास्तं नलमस्तुवन् तथैव शुकवदेव तदर्थम-

ध्याप्य मुक्ताः तत्पौरुषस्य नलपराक्रमस्य गायिन्यो गायकाः कृता गायनीकृ शारिकाः शुकवध्वः स्वरामृतेन मधुरस्वरेणेत्यर्थः उपजगुश्च ॥ १०३ ॥

उन महाराज नलकी तुष्टिके लिए पुरवासियोंने सुग्गों को और मैनाओं को पढ़ाकर व भेजा । वे सुग्गे अपनी स्फुट वाणीसे उन महाराजकी स्तुतियां करते थे तथा उसी री मैनाएं भी अपनी सुरीली ध्वनियोंसे उनके गुण पराक्रमके गीत गाती थीं ॥ १०३ ॥

इतीष्टगन्धाढ्यमटन्नसौ वनं पिकोपगीतोऽपि शुकस्तुतोऽपि च ।
अविन्दतामोदभरं बहिश्चरं विदर्भसुभ्रूविरहेण नान्तरम् ॥ १०४ ॥

इतीति । इतीत्थमिष्टगन्धाढ्यं इष्टसौगन्धसम्पन्नं वनमटन् देशकालाध्वग व्या कर्म्मसंज्ञा ह्यकर्म्मणामिति वनस्य देशत्वात् कर्म्मत्वं, असौ नलः पिकैः कोकि पगीतोऽपि शुकैःस्तुतोऽपि च परं केवलं परं स्यादुत्तमानात्मवैरिदूतो केवल इति विश्व बहिरामोदभरं सौरभ्यातिरेकमेवाविन्दत विदर्भसुभ्रूविरहेण हेतुना आन्तरमामोद रमानन्दातिरकरूपन्नाविन्दत न लब्धवान् प्रत्युत दुःखमेवान्वभूदिति भावः । आ दो गन्धहर्षयोरिति विश्वः ॥ १०४ ॥

वे महाराज नल मधुर सुगन्धोंसे युक्त उस वनमें भ्रमण करते हुए सुग्गों और मैन तथा कोयलोंके मृदु स्तवनोंसे बाह्यरूपसे तो प्रमुदित दीख पड़ते थे । परन्तु, दमयन विरहके कारण वे आन्तरिक रूपसे प्रमुदित न थे ॥ १०४ ॥

करेण मीनं निजकेतनं दधत् द्रुमालबालाम्बु निवेशशङ्कया ।
व्यतर्कि सर्वर्त्तुघने वने मधुं स मित्रमत्रानुसरन्निव स्मरः ॥ १०५ ॥

करेणेति । स नलः निजकेतनं निजलाञ्छनं मीनं द्रुमालबालाम्बुषु निवेशश प्रवेशभिया करेण दधत् तादृक्शुभरेखाव्याजेन दधान इत्यर्थः सर्वर्त्तुघने सर्वर्त्तुस अत्र अस्मिन् वने मित्रं सखायं मधुंवसन्तमनुसरन् अन्विष्यन् स्मर इव व्यतर्कि उत्प्रेक्षा ॥ १०५ ॥

वृक्षोंके थालोंमें मछली न चली जाय इस कारण महाराज नल मछली (चिह्न) अपने हाथमें धारण किये हुए थे (उनके हाथमें मीन रेखा थी)। सब ओरसे सघन पर्यटन करते हुए वे महाराज ऐसे दीख रहे थे। जैसे—कामदेव अपने मित्र वसन्त के भ्रमण करता हुआ दीखता है ॥ १०५ ॥

लताबलालास्यकलागुरुस्तरुप्रसूनगन्धोत्करपश्यतोहरः ।
असेवतामुं मधुगन्धवारिणि प्रणीतलीलाप्लवनो वनानिलः ॥ १०६ ॥

लतेति । लता एवाबलास्तासां लास्यकलासु मधुरनृत्तविद्यासु गुरुरुपदे मान्द्योक्तिः, तरुप्रसूनगन्धोत्कराणां द्रुमकुसुमसौरभसम्पदां पश्यतो हरः पश्य नादृत्य हरः प्रत्यक्षचौरोऽयं वस्तुतो मे हरत्ययं च चौरः पश्यतोहर इति हला पचाद्यच् षष्ठी चानादरे इति षष्ठी । वाग्दिक्पश्यद्भ्योयुक्तिदण्डहरेष्विति वक्त

तुक् । सौरभ्यमुक्तं मधुमकरन्द एव,गन्धवारि गन्धोदकं तत्र प्रणीतलीलाप्लवनः एतेन-कृतलीलावगाहन इति शैत्योक्तिः, ईदृग्वनानिलोऽमुं नलमसेवत गुणवान् सेवकः सेव्य-प्रियो भवतीति भावः ॥ १०६ ॥

उन महाराज नलकी सेवा उस "पश्यतोहर" पवनने की जो लतारूपी अंगनाओंकी मधुर नृत्यकलाका गुरु था तथा जो पुष्पगन्धरूपी पुष्पसम्पत्तिको सामने आहरण करने वाला था एवं जिसने परागरूपी जलमें लीलापूर्वक स्नान भी किया था ॥ १०६ ॥

अथ स्वमादाय भयेन मन्थनाच्चिरत्नरत्नाधिकमुच्चितं चिरात् ।
निलीय तस्मिन्निवसन्नपांनिधिर्वने तडागो ददृशेऽवनीभुजा ॥ १०७ ॥

अथेति । अथ वनालोकनानन्तरं मन्थनाद्भयेन धनार्थं पुनर्मथिष्यतीति भयादित्यर्थः। चिरादुच्चितं सञ्चितं चिरत्नं चिरन्तनं चिरमरुत्ववादिभ्यस्त्नो वक्तव्य इति त्नप्रत्ययः । तच्च तद्रत्नाधिकं श्रेष्ठवस्तु भूयिष्ठं चेति चिरत्नरत्नाधिकं रत्नं स्वजातौ श्रेष्ठेऽपीत्यमरः । स्वं धनमादाय तस्मिन वने निलीयान्तर्धाय निवसन् वर्त्तमानोऽपांनिधिरिवेत्युत्प्रेक्षा तेन नलेन तडागः सरोविशेषोऽवनीभुजा राज्ञा ददृशे दृष्टः ॥ १०७ ॥

उन महाराज नलने वनश्री देखनेके पश्चात् सरोवर देखा, वह सरोवर क्या था अपितु, चिरकालसे सञ्चित उत्तम वस्तुओं रत्नोंको एवं विपुल सम्पत्तिको अपने अभ्यन्तरमें छिपाये हुए मानो उस वनमें छिपा हुआ, दूसरा समुद्र ही था ॥ १०७ ॥

पयोनिलीनाभ्रमुकामुकावली रदाननन्तोरगपुच्छसच्छवीन् ।
जलार्द्धरुद्धस्य तटान्तभूभिदो मृणालजालस्य निभाद्बभार यः ॥ १०८ ॥

यदुक्तं धनमादायेति तदेवात्र सम्पादयति नवभिः श्लोकैः पय इत्यादिभिः । यस्तडागः जलेनार्द्धरुद्धस्य अर्द्धछन्नस्य तटान्तभूभिदस्तटप्रान्तनिर्गतस्येत्यर्थः मृणालजालस्य बिसवृन्दस्य निभाद्व्याजाद्धित्यपह्नवालङ्कारः, निभो व्याजसदृक्षयोरिति विश्वः । अनन्तोरगस्य शेषाहेः पुच्छेन सच्छवीन् सवर्णान् तद्वद्धवलानित्यर्थः पयोनिलीनानामभ्रमुकामुकावलीनामैरावतश्रेणीनां रदान् दन्तान् बभार तत्रैक एवैरावतः अत्र त्वसंख्या इति व्यतिरेकः अभ्रमुकामुका इति द्वितीयासमासो मधुपिपासुवत् न लोकेत्यादिना षष्ठी प्रतिषेधात् लपपतेत्यादिना कमेरुकञ्प्रत्ययः ॥ १०८ ॥

पुनः उसी सरोवररूपी समुद्रका वर्णन करते हैं:—

वह तालाब अपने तटपरकी पृथ्वीपर उगे हुए सिवारको आधे जल भागसे ढाके हुए तथा अनन्त शेषनागकी पूंछके तुल्य स्वच्छ कान्तिवाले कमलनालोंसे युक्त ऐसा लगता था मानो, उसके भीतर अनेकों ऐरावत हाथी दांतों को ऊपर की ओर किये हुए बैठे हों ॥ १०८ ॥

तटान्तविश्रान्ततुरङ्गमच्छटा स्फुटानुबिम्बोदयचुम्बनेन यः ।
बभौ चलद्वीचिकशान्तशातनैः सहस्रमुच्चैःश्रवसामिव श्रयन् ॥ १०९ ॥



तटान्तेति । यस्तडागस्तटान्ते तीरप्रान्ते विश्रान्ता या तुरङ्गमच्छटा नलानीताश्व-

श्रेणी तस्याः स्फुटानुबिम्बोदयचुम्बनेन प्रकटप्रतिबिम्बाविर्भावप्रीत्या निमित्तेन एकैकशस्तासां वीचीनामन्तःशातनैरुग्रताडनैः अश्वादेस्ताडनीकशेत्यमरः, चलदुच्च-दुच्चैःश्रवसां सहस्रं श्रयन् प्राप्नुवन्निव बभावित्युत्प्रेक्षा व्यतिरेकश्च पूर्ववत् ए-नलाश्वानामुच्चैःश्रवःसाम्यं गम्यत इत्यलङ्कारेण वस्तुध्वनिः ॥ १०९ ॥

उन महाराज नलके सहस्रों घोड़े उस तालाबके तटपर विश्रान्ति ले रहे थे जिनकी छ- उसके जलमें पड़ रही थी। उसे देखकर ऐसा प्रतीत होता था कि सहस्रों "उच्चैःश्र- ( इन्द्रके घोड़े ) उसके भीतर विद्यमान हैं और उसकी तरंगरूपी चाबुकोंसे ताड़ित हो चल रहे हैं ॥ १०९ ॥

सिताम्बुजानां निवहस्य यश्छलाद्बभावलिश्यामलितोदरश्रियाम् ।
तमःसमच्छायकलङ्कसङ्कुलं कुलं सुधांशोर्बहुलं वहन् वहु ॥ ११० ॥

सितेति। यस्तडागः अलिभिः श्यामलितोदरश्रियां श्यामीकृतमध्यशोभानां सि-म्बुजाना पुण्डरीकाणां निवहस्य च्छलात् तमःसमच्छायः तिमिरवर्णः यः कलङ्कः सङ्कुलं बहलं संपूर्णस्वह्ननेकं सुधांशोरचन्द्रस्य कुलं वंशं वहन् सन् बभौ। अत्र च्छ-शब्देन पुण्डरीकेषु विषयापह्नवेन चन्द्रत्वाभेदादपह्नवभेदः व्यतिरेकस्तु पूर्ववत् ॥११-

उस तालाबमें अनेकों शुभ्र कमल खिले थे जिनके ऊपर मध्यभागमें काले-काले भौंरे थे उन्हें देखकर ऐसा प्रतीत होता था कि, तिमिरके समान कलंकको धारण करनेवाले अ- चन्द्रोंको यह तालाब धारण करने वाला है ॥ ११० ॥

रथाङ्गभाजा कमलानुषङ्गिणा शिलीमुखस्तोमसखेन शार्ङ्गिणा ।
सरोजिनीस्तम्बकदम्बकैतवान्मृणालशेषाहिभुवान्वयायि यः ॥ १११ ॥

रथाङ्गेति। यस्तडागो रथांगं चक्रवाकः चक्रायुधञ्च यद्यपि चक्रवाके रथाङ्गना- च प्रयोगो रूढः तथापि प्रायेणास्य चक्रशब्दपर्यायत्वप्रयोगदर्शनात् पदस्याप्युभ- प्रयोगम्मन्यते कविः, तद्भाजा भजो ण्विः, कमलैः कमलया चानुषङ्गिणा संसर्- शिलीमुखस्तोमसखेन अलिकुलसहचरेण अन्यत्र सखिशब्दः सादृश्यवचनः त- वर्णेनेत्यर्थः मृणालं शेषाहिरिवेत्युपमितसमासः तद्भुवा तदाकारेण अन्यत्र मृणाल- शेषाहिः तद्भुवा तदाधारेण शार्ङ्गिणा विष्णुना सरोजिनीनां स्तम्बा गुल्माः अप्र- स्तम्बगुल्ममित्यमरः, तेषां कदम्बस्य कैतवान्मिषात् अन्वयायि अन्वेयातोऽनुसृतो- ष्ठित इति यावत्। अत्रापि कैतवशब्देन स्तम्बत्वमपह्नुत्य शार्ङ्गित्वारोपादपह्नवभेदः॥

उस तालाबके समीप चक्रवाक थे तथा उसके भीतर भौंरोंसे युक्त कमल थे एवं उन- लोंके मृणाल शेष नागके आकारके सदृश थे। जिन्हें देखकर ऐसा विदित होता था कि तालाब नहीं है अपितु सरोजिनीके गुच्छोंको धारण किये हुए, लक्ष्मीयुक्त शेषशायी रंगवाले चक्रधारी कृष्णको रखे हुए साक्षात् समुद्र ही है ॥ १११ ॥



तरङ्गिणीरङ्कजुषः स्ववल्लभास्तरङ्गलेखा बिभराम्बभूव यः ।

दरीद्गतैः कोकनदौघकोरकैर्धृतप्रबालाङ्कुरसञ्चयश्च यः ॥ ११२ ॥

तरङ्गिणीरिति । यस्तडागोऽङ्कजुषोऽन्तिकभाजः उत्सङ्गसङ्गिन्यश्च वा तरङ्गरेखास्तरङ्गराजिरेव स्ववल्लभास्तरङ्गिणारिति व्यस्तरूपकम्बिभराग्बभूव बभार भीह्रीभृहुवां श्लुवच्चेति भृञो विकल्पादाम् प्रत्ययः । किञ्च यस्तडागो दरीद्गतैरीषद्बुद्धैः कोकनदौघकोरकैः रक्तोत्पलखण्डकलिकाभिः धृतप्रवलाङ्कुरसञ्चयश्च धृतविद्रुमाङ्कुरनिकरश्चेति । अत्रापि कोकनदकोरकाणां विद्रुमत्वे रूपणाद्रूपकालङ्कारः ॥ ११२ ॥

वह तालाब अपनी गोदमें चिपटी हुई तरंगरूपी स्त्रियोंसे युक्त होकर एवं अर्धविकसित लाल-लाल कमलोंसे परिव्याप्त होकर ऐसा शोभित हो रहा था—जैसा अपनी गोदमें चिपटी नदियोंसे युक्त होकर-एवं मूंगेकी लाल-लाल शोभाको धारण कर समुद्र शोभित होता है ११२

महीयसः पङ्कजमण्डलस्य यश्छलेन गौरस्य च मेचकस्य च ।
नलेन मेने सलिले निलीनयोस्त्विषं विमुञ्चन् विधुकालकूटयोः ॥ ११३ ॥

महीयस इति । यस्तडागः महीयसो महत्तरस्य गौरस्य च मेचकस्य च पङ्कजमण्डलस्य सितासितसरोजयोश्छलेन सलिले निलीनयोः विधुकालकूटयोः सितासितयोरिति भावः । त्विषं विमुञ्चन् विसृजन्निव नलेन मेने । अत्रच्छलेन विमुञ्चन्निवेति प्रापह्नवोत्प्रेक्षा ॥ ११३ ॥

उस तालाबमें नीले कमल और शुभ्र कमल खिले थे जिन्हें देखकर ऐसा लगता था कि यह तालाब नहीं है अपितु, समुद्र है और ये नीले कमल तथा शुभ्र कमल नहीं है अपितु विष और चन्द्र हैं जिन्हें यह बाहरकी ओर फेंक रहा हैं ॥ ११३ ॥

चलीकृता यत्र तरङ्गरिङ्गणैरबालशैवाललतापरम्पराः ।
ध्रुवन्दधुर्वाडवहव्यवाडवस्थितिप्ररोहत्तमभूमधूमताम् ॥ ११४ ॥

चलीकृता इति । यत्र यस्मिन् तडागे तरङ्गरिङ्गणैस्तरङ्गकम्पनैश्चलीकृताः चञ्चलीकृताः अबालानां कठोराणां शैवाललतानां परम्पराः पंक्तयः हव्यं वहतीति हव्यवाडग्निः वहश्चेति ण्विप्रत्ययः । तस्य छन्दोमात्रविषयत्वात् अनादरेण भाषायां प्रयोगः वाडवहव्यवाहो वाडवाग्नेरेव स्थित्यान्तरवस्थानेन प्ररोहत्तमोवहिःप्रादुर्भवत्तमो भूमा येषान्ते च ते धूमाश्च तेषां भावस्तत्ता तां दधुः वहिरुत्थित धूमपटलवद्बभुरित्यर्थः । ध्रुवमित्युत्प्रेक्षायाम् ॥ ११४ ॥

उस तालाबकी तरंगोंके थपेड़ोंसे कठिन शिवार लताएं चञ्चलायमान हो रही थीं जिन्हें देखकर ऐसा प्रतीत होता था कि यह तालाब नहीं है अपितु समुद्र है और ये शिवारकी लताएं नहीं हैं अपितु समुद्रमें स्थित वड़वाग्निका धूम्रपटल है ॥ ११४ ॥

प्रकाममादित्यमवाप्य कण्टकैः करम्बितामोदभरं विवृण्वती ।
धृतस्फुटश्रीगृहविग्रहा दिवा सरोजिनी यत्प्रभवाप्सरायिता ॥ ११५ ॥



प्रकाममिति । आदित्य सूर्यमवाप्य प्रकामं कण्टकैः नालगतैः तीक्ष्णाग्रैरवयवैः

करम्बिता दन्तुरिता अन्यत्रादित्यमदितिपुत्रमिन्द्रमवाप्य कण्टकैः पुलकैः करम्बित्वा अतएवामोदभरं परिमलसम्पदमानन्दसम्पदं च बिभ्रती प्रकटयन्ती दिवसे धृतानि स्फुटश्रीगृहाणि पद्मानि यस्य स विग्रहः स्वरूपं यस्याः सा दिवा स्वर्गेण स्फुटश्रीगृहमुज्वलशोभास्पदं विग्रहो देहो यस्याः सा स्वर्गलोकवासि- त्यर्थः । यस्तडागः प्रभवः कारणं यस्याः सा तज्जन्या सरोजिनी पद्मिनी अप्सरा- अप्सर इवाचरिता उपमानात् कर्त्तुः क्यङ् सलोपश्चेति कर्त्तरि क्तः, ओजसोऽप्सर- रित्यप्सरसः सकारलोपः, श्लिष्टविशेषणेयमुपमा ॥ ११५ ॥

कमलनालगत तीक्ष्णाग्रोंसे सुशोभिता, परिमल मृदु सुगन्धियुक्ता, कमलोंके समान धारिणी उक्त तालावमें कमलिनी थीं । जिन्हें देखकर ऐसा ज्ञात होता था कि ये कमलि- नहीं हैं अपितु, दिनमें दिनकरसे युक्त स्वर्गकी अप्सराएं हैं [ अप्सराएं सदा सूर्य-चन्द्र- आदि देवोंसे युक्त रहती हैं ] ॥ ११५ ॥

यदम्बुपूरप्रतिबिम्बितायतिर्मरुत्तरङ्गैस्तरलस्तटद्रुमः ।
निमज्य मैनाकमहीभृतः सतस्तनान पक्षान् धुवतः सपक्षताम् ॥ ११६ ॥

यदिति । यस्य तडागस्याम्बुपूरे प्रतिबिम्बितायतिः प्रतिफलितायामः मरुत्त- वातवीजनैस्तरलश्चञ्चलः तटद्रुमः निमज्य सतो वर्त्तमानस्य पक्षान् धुवतः कम्पय- मैनाकमहीभृतस्तदाख्यस्य पर्व्वतस्य सपक्षतां साम्यं तनोतीत्युपमा ॥ ११६ ॥

पवनके झकोरोंसे चञ्चलीभूत तटपरके वृक्षोंकी छाया उक्त तालावके जलमें पड़ी । देखकर ऐसा विदित होता था वह छाया चञ्चल वृक्षोंकी नहीं है, अपितु, समुद्रमें प्र- मैनाक पर्वत अपने पंखोंको कंपा रहा है ॥ ११६ ॥

पयोधिलक्ष्मीमुषि केलिपल्वले रिरंसुहंसीकलनादसादरम् ।
स तत्र चित्रं विचरन्तमन्तिके हिरण्मयं हंसमबोधि नैषधः ॥ ११७ ॥

पयोधीति । अथ स नैषधो निषधानां राजा नलः जनपदशब्दात् क्षत्रियादञि- पयोधिलक्ष्मीमुषि तत्सदृश इत्यर्थः । अत्र केलिपल्वले क्रीडासरसि रिरंसूनां मिच्छूनां हंसीनां कलनादेषु सादरं सस्पृहन्तत्रान्तिके तत्समीपे विचरन्तं चित्रमद्- हिरण्मयं सुवर्णमयं दाण्डिनायनादिना निपातनात् साधुः हंसमबोधि ददर्शेत्यर्थः दीपजनेत्यादिना कर्त्तरि चिण् ॥ ११७ ॥

तत्पश्चात् उन महाराज नलने समुद्रशोभाधारी उस तालावके तटपर विचरण करने- सुवर्णके एक अद्भुत राजहंसको देखा जो उस समय हंसिनियोंकी मधुर तानमें लव- होकर रतिकी इच्छा कर रहा था ॥ ११७ ॥

प्रियासु बालासु रतिक्षमासु च द्विपत्रितं पल्लवितञ्च बिभ्रतम् ।
स्मरार्जितं रागमहीरुहाङ्कुरं मिषेण चञ्च्वोश्चरणद्वयस्य च ॥ ११८ ॥



पुनस्तमेव विशिनष्टि प्रियास्विति । बालासु अरतिक्षमासु किन्त्वासन्नयौव-

मुषि = चुराने वाला शोभा को

मित्वित्यर्थः। अन्यथा रागाङ्कुरासम्भवात् रतिक्षमासु युवतीषु द्विविधासु प्रियासु विषये क्रमाच्चञ्च्वोस्त्रोट्योः चञ्चुस्त्रोटिरुभे स्त्रियामित्यमरः। चरणद्वयस्य च मिषेण द्विपत्रितं सञ्जातद्विपत्रं पल्लवितं सञ्जातपल्लवञ्च चञ्च्वोर्द्वयोः सम्पुटितत्वे साम्यात् द्विपत्रित्वं चरणयोस्तु विभ्रमरागमत्त्वेन पल्लवसाम्यात्पल्लवत्वं राजहंसानां लोहितचञ्चुचरणत्वात् तस्मिन् मिषेणेत्युक्तं स्मरार्जितं स्मरेणैव घृद्दरोपणेनोत्पादित-मित्यर्थः। राग एव महीरुहस्तस्याङ्कुरं रागमहीरुहाङ्कुरं बिभ्रतं चञ्चुपुटमिषेण द्विपत्रितं बालिकागोचररागं चरणमिषेण पल्लवित युवतीविषये रागञ्च बिभ्रतमि-त्यर्थः। ईदृशं हंसमबोधीति पूर्वेणान्वयः। नाभ्यस्ताच्छतुरिति नुम्प्रतिषेधः, घृत्ता-ङ्कुरो हि प्रथमं द्विपत्रितो भवति, पश्चात् पल्लवित इति प्रसिद्धम्। तत्र रागं बिभ्रत इति हंसविशेषणात्, तद्द्वारागस्य हंसाधिकरणत्वोक्तिः, प्रियास्वधिकरणभूतास्वित्यु-पाध्यायविश्वेश्वरव्याख्यानं प्रत्याख्येयं, अन्यनिष्ठस्य रागस्यान्याधिकरणत्वायोगात् नचायमेक एवोभयनिष्ठ इति भ्रमितव्यम्, तस्येच्छापरतरपर्य्यायस्य तथात्वायोगात् बुद्ध्यादीनामपि तथात्वापत्तौ सर्वसिद्धान्तविरोधात्, विषयानुरागाभावप्रसङ्गाच्च उभयोरपि रागत्वसाम्यादुभयनिष्ठभ्रमः केषाञ्चित् कस्मात्कामिनोरन्योन्याधिकरण-रागयोरन्योन्यविषयत्वमेव नाधिकरणत्वमेवमिति सिद्धान्तः, प्रियास्विति विषयसप्तमी न त्वाधारसप्तमीति सर्वं रमणीयम्, अत्र रागमहीरुहाङ्कुरमिति रूपकं चंचुचरण-मिषेणेत्यपह्नवानुप्राणितमिति सङ्करः। तेन च बाह्याभ्यन्तररागयोर्भेदे अभेदलक्ष-णातिशयोत्थापिता चञ्चुचरणव्याजेनान्तरस्येव बहिरङ्कुरितत्वोत्प्रेक्षा व्यज्यत इत्यलङ्कारेणालङ्कारध्वनिः ॥ ११८ ॥

उस राजहंसकी चोंच एवं चरण लाल थे। अतः उस राजहंसको देखकर ऐसा ज्ञात होता था कि यह राजहंस नहीं है। अपितु, कामदेवका एक क्रीडावृक्ष है। जिसमें इसकी चोंच नवीन अंकुरित दो पत्रके समान है और इसके लाल-लाल चरण पल्लवके समान हैं। उपर्युक्त दोनों वस्तुएं उसकी नवीन बाला प्रिया तथा रतिक्षमा प्रियाका यथाक्रम चुम्बन और आलिंगन करनेमें समर्थवान् हैं॥ ११८॥

**महीमहेन्द्रस्तमवेक्ष्य स क्षणं शकुन्तमेकान्तमनोविनोदिनम्।**
**प्रियावियोगाद्विधुरोऽपि निर्भरं कुतूहलाक्रान्तमना मनागभूत् ॥ ११९ ॥**

महीति। महीमहेन्द्रो भूदेवेन्द्रः स नलः एकान्तं नितान्तं मनो विनोदयतीति तथोक्तं तं शकुन्तं पक्षिणं क्षणमवेक्ष्य प्रियावियोगान्निर्भरमतिमात्रं विधुरो दुःस्थोऽपि मनागीषत्कुतूहलाक्रान्तमनाः कौतुकितचित्तोऽभूत् गृहीतकामोऽभूदीत्यर्थः ॥ ११९ ॥

उन महीमहेन्द्र महाराजने, जो उस समय प्रियाके वियोगसे दुःखी थे, अत्यन्त मनो-विनोद देनेवाले उस राजहंसको पकड़नेकी इच्छा की॥ ११९॥



अवश्यभव्येष्वनवग्रहग्रहा यया दिशा धावति वेधसः स्पृहा।

तृणेन वात्येव तयानुगम्यते जनस्य चित्तेन भृशावशात्मना ॥ १२० ॥

कथमीदृशे चापल्ये प्रवृत्तिरस्य धीरोदात्तस्येत्याशङ्क्य नात्र जन्तोः स्वात कि‍न्तु भाव्यर्थानुसारिणी विधातुरिच्छैव तथा प्रेरयतीत्याह । अवश्येति । अवश्यं भाव्यर्थेषु विषये भव्यगेयादिना कर्त्तरि यत्प्रत्यान्तो निपातः लुपेदवश कृत्ये इत्यवश्यमो मकारलोपः अनवग्रहग्रहा अप्रतिबन्धनिर्बन्धा निरङ्कुशाभि शेति यावत् ग्रहोऽनुग्रहनिर्बन्धग्रहणेषु रणोद्यम इति विश्वः । वेधसः स्पृहा विधा च्छा यथा दिशा धावति येनाध्वना प्रवर्त्तते तयैव दिशा भृशावशात्मनात्यन्तप न्त्रस्वभावेन जनस्य चित्तेन तृणेन वात्या वातसमूह इव पांशादिभ्यो यः अनुगा वेधसः स्पृहा कर्म्म ॥ १२० ॥

जैसे तृण आँधीका अनुगमन करता है वैसे ही विधिकी इच्छा द्वारा मनुष्योंका अवश्यम्भावीकी ओर—अनिच्छित दिशाकी ओर—बेरोक टोक ले जाया जाता है ॥ १२

अथावलम्ब्य क्षणमेकपादिकां तदा निदद्रावुपपल्वलं खगः ।
सतिर्य्यगावर्जितकन्धरः शिरः पिधाय पक्षेण रतिक्लमालसः ॥ १२१ ॥

चिकीर्षितार्थे दैवानुकूल्यं कार्य्यतो दर्शयति । अथेति । अथ नलदृष्टिप्राप्त्यन रतिक्लमालसः सः खगो हंसः तदा नलकुतूहलकालक्षणमेकपादो यस्यां क्रिया मित्येकपादिका एकपादेनावस्थानं मत्वर्थीयष्ठन् प्रत्ययः तद्धितार्थत्यादिना सङ्ख समासः, यस्येति लोपस्य स्थानिवद्भावेन ताद्रूप्याभावन्ना पादः पदादेशः तामेकपादि मवलम्ब्या तिर्य्यगावर्जितकन्धरः आवर्त्तितग्रीवः सन् पक्षशिरः पिधाय उपपल पल्वले निदद्रौ सुष्वाप । स्वभावोक्तिरलङ्कारः, स्वभावोक्तिरलङ्कारो यथावद्वस्तुव मिति लक्षणात् ॥ १२१ ॥

उन महाराज नलके दृष्टिगत होनेके पश्चात् रतिक्रीड़ासे श्रान्त होकर वह राजहंस, कुतूहलके समय, एक पैरपर बैठ गया और अपने पंखोंसे अपने शिरको अच्छादित क तालावके सन्निकट सो गया ॥ १२१ ॥

सनालमात्माननिर्ज्जितप्रभं ह्रियानतं, काञ्चनमम्बुजन्म किम् ?
अबुद्ध तं विद्रुमदण्डमण्डितं स पीतमम्भः प्रभुचामरञ्च किम् ? ॥१२

सनालमिति । स नलः तं निद्राणं हंसम् आत्माननेन निर्जितप्रभं निजमुखनि कृतशोभम् अतएव ह्रिया नतं सनालं नालसहितं काञ्चनं सौवर्णमम्बुजन्माम्भ किम् ? तथा विद्रुमदण्डेन मण्डितं भूषितं पीतवर्णमम्भःप्रभोरपाम्पत्युः वरुण चामरं किम् ? इतिशब्दोऽत्राहार्य्यः इति अबुद्ध बुद्धवानुत्प्रेक्षित वानित्यर्थः, बुध लुङि तङः झशस्तथोर्द्धोऽध इति तकारस्य धकारः ॥ १२२ ॥

क्या वह सुवर्णका कमल है जो मेरी ( महाराज नलकी ) मुखकान्तिसे विजित अपने समझ कर लज्जासे मुख लटकाकर एक ओर पड़ गया है ? अथवा जलके स्वामी महा वरुणकी मूँगेके दण्डवाली पीली चामर है ? ॥ १२२ ॥

कृतावरोहस्य हयादुपानहौ ततः पदे रेजतुरस्य बिभ्रती।
तयोः प्रबालैर्वनयोस्तथाम्बुजैर्नियोद्धुकामे किमु बद्धवर्मणी? ॥ १२३ ॥

कृतेति। ततस्तन्निदर्शनानन्तरं हयादश्वात्कृतावरोहस्य कृतावतरणस्यास्य नलस्योपानहौ वर्मणी पादत्राणे। पादत्राणे उपानहौ इत्यमरः। पदे चरणे तयोर्वनयोः सलिलकाननयोः वने सलिल कानने इत्यमरः प्रबालैः पल्लवैः तथाम्बुजैः पद्मैश्चेत्यर्थः सहार्थे तृतीया नियोद्धुं कामोऽभिलाषो ययोस्ते नियोद्धुकामे युद्धकाम इत्यर्थः। काममनसोरपीति तुमुनो मकारलोपः अतो बद्धवर्म्मणी किमु बद्धकवचे इव ते रेजतुः किमित्युत्प्रेक्षा ॥ १२३ ॥

जब महाराज नल घोड़ेसे उतरे तब जूतेसे सजे हुए उनके पैर ऐसे मालूम पड़े। जैसे—कवचसे युक्त होकर वनके पल्लवों और जलके कमलोंसे युद्ध करनेकी कामनासे वहाँ पर आये हों ॥ १२३ ॥

विधाय मूर्त्तिं कपटेन वामनीं स्वयं बलिध्वंसिविडम्बिनीमयम्।
उपेतपार्श्वश्चरणेन मौनिना नृपः पतङ्गं समधत्त पाणिना ॥ १२४ ॥

विधायेति। अयं नृपः स्वयमेव कपटेन छद्मना वामनीं ह्रस्वां गौरादित्वात् ङीप् बलिध्वंसि विडम्बिनीं कपटवामनविष्णुमूर्त्यनुकारिणीमित्यर्थः मूर्त्तिं विधाय कायं सङ्कुच्येत्यर्थः मौनिना निःशब्देन चरणेनोपेतपार्श्वः प्राप्तहंसान्तिकः पाणिना पतङ्गं पक्षिणं समधत्त सन्धत्तवान् जग्राहेत्यर्थः स्वभावोक्तिरलङ्कारः ॥ १२४ ॥

उन महाराज नलने कपटसे राजा बलिको छलनेवाली—वामनावतारकी मूर्तिके सदृश अपनी मूर्ति बनाकर तथा चुपचाप दबे पाँव उस राजहंसके समीप जाकर उसे अपने हाथसे पकड़ लिया ॥ १२४ ॥

तदात्तमात्मानमवेत्य संभ्रमात् पुनः पुनः प्रायसदुद्प्लवाय सः।
गतो विरुत्योड्डयने निराशतां करौ निरोद्धुर्दशति स्म केवलम् ॥१२५॥

तदिति। स हंसः आत्मानं तदा तु तेन नलेनात्तं गृहीतमवेत्य ज्ञात्वा सम्भ्रमादुत्प्लवायोत्पतनाय पुनः पुनः प्रायसदायस्तवान् यसु प्रयत्न इति धातोर्लुङि पुषादित्वाच्च्लेरङादेशः उड्डयने उत्पतने निराशतां गतो विरुत्य विक्रुश्य निरोद्धुः गृहीतुः करौ केवलं करावेव दशति स्म दष्टवान् अत्रापि स्वभावोक्तिरेव ॥ १२५ ॥

जब उस राजहंसने अपनेको उन महाराज नलसे गृहीत समझ लिया तब उसने सम्भ्रमयुक्त उड़नेका बार-बार प्रयत्न किया। किन्तु, उड़नेमें विवश होकर उसने मारे क्रोधके उन पकड़नेवाले महाराजके हाथमें काट लिया ॥ १२५ ॥

ससम्भ्रमोत्पातिपतत्कुलाकुलं सरः प्रपद्योत्कतयानुकम्पिताम्।
तमूर्मिलोलैः पतगग्रहान्नृपं न्यवारयद्वारि रुहैः करैरिव ॥ १२६ ॥

स इति। ससम्भ्रमं सत्वरमुत्पातिना उड्डीयमानेन पतत्कुलेन पक्षिसङ्घेनाकुलं

सङ्कुलं सरः कर्त्तुं उत्कतया उन्मनस्तया उत्क उन्मना इति निपातनादिविधाना साधुः अनुकम्पितां प्रपद्य कृपालुतां प्राप्य तं नृपमूर्मिलोलैश्चलैर्वारिरुहैः करैः व्यस्तरूपकं पतगग्रहात्पक्षिग्रहात् न्यवारयदिवेत्युत्प्रेक्षा वास्तवनिवारणा सम्भव त्प्रेक्षा निवारणस्य करसाध्यत्वात् तत रूपकाश्रयणम् अतएवैवं शब्दस्य उपमा धेनार्थानुसाराद्व्यवहितान्वयेनाप्युत्प्रेक्षा व्यञ्जकत्वमिति रूपकोत्प्रेक्षयोरङ्गाङ्गिभा सङ्करः ॥ १२६ ॥

उन महाराज नलने जब उस राजहंसको पकड़ा तब उस तालावके तटपर बैठे हुए पक्षीगण घबड़ाकर उड़ गये । उनके एक साथ उड़ने पर तालाबका जल हिलने लगा तरङ्गित होने लगा । उसे देखकर ऐसा विदित होता था कि मानो, राजहंसकी उद्विग्नत करुणा करके वह तालाब अपने कमलरूपी हाथोंसे महाराजको पक्षी पकड़नेसे रोक रहा है।

**पतत्रिणा तद्रुचिरेण वञ्चितं श्रियः प्रयान्त्याः प्रविहाय पल्वलम् ।**
**चलत्पदाम्भोरुहनूपुरोपमा चुकूज कूले कलहंसमण्डली ॥ १२७ ॥**

पतत्रिणेति । रुचिरेण पतत्रिणा हंसेन वञ्चितं विरहितं तत्पल्वलं सरः वि प्रयान्त्या गच्छन्त्या श्रियो लक्ष्म्याश्चलन्त्यां पदाम्भोरुहनूपुराभ्याम् उपमा स यस्याः सा कलहंसमण्डली कुले चुकूज यूथभ्रंशे कूजनमेषां स्वभावस्तत्र हंसेनैव गच्छन्त्या सरःशोभायाः श्रीदेव्या सहाभेदाध्यवसायेन कूजत्कलहंसमण्डल्यां पुरत्वमुत्प्रेक्ष्यते उपमाशब्दोऽपि मुख्यार्थानुपपत्तेः सम्भावनालक्षक इत्यवधेयम् ॥ १

कलहंसोंकी श्रेणी उस तालावको त्यागकर कूजती हुई जाने लगी । उसे देखकर प्रतीति होती थी कि उस तालाबकी सौन्दर्यश्री उसे छोड़कर नूपुरोंको झुन-झुनाती जा रही है ॥ १२७ ॥

**न वासयोग्या वसुधेयमीदृशस्त्वमङ्ग ! यस्याः पतिरुज्झितस्थितिः ।**
**इति प्रहाय क्षितिमाश्रिता नभः खगास्तमाचुक्रुशुरारवैः खलु ॥ १२८**

नेति । इयं वसुधा वासयोग्या निवासार्हा न कुतः अङ्ग भो ! यस्या वसुध उज्झितस्थितिः त्यक्तमर्यादः ईदृशः अनपराधपक्षिधारकः त्वं पतिः पालकः इत्थं क्षितिं प्रहाय नभ आश्रितास्तं नलमारवैरुच्चध्वनिभिराचुक्रुशुः खलु उक्तरीत्या न्दोपालम्भनं चक्रुरिवेत्युत्प्रेक्षा गम्या ॥ १२८ ॥

पृथिवीका परित्याग करके आकाशमें जाते हुए पक्षियोंने महाराज नलकी निन्दा वे पक्षीगण उस समय शायद यह कह रहे थे कि, "अब यह वसुन्धरा बसने योग्य न क्योंकि इसके स्वामी आप ऐसे लोकाचार विवर्जित व्यक्ति हैं ।" ॥ १२८ ॥

**न जातरूपच्छदजातरूपता द्विजस्य दृष्टेयमिति स्तुवन् मुहुः ।**
**अवादि तेनाथ स मानसौकसा जनाधिनाथः करपञ्जरस्पृशा ॥ १२९**



नेति । इयमीदृग्जातरूपच्छदः सुवर्णपक्षः जातरूपता उत्पन्नसौन्दर्यत्वं हि दे

र्णो न दृष्टा हिरण्मयः पक्षी न कुत्रापि दृष्ट इत्यर्थः इति मुहुस्तुवन् स जनाधिनायः
स्मिन्नन्तरे करपञ्जरस्पृशा तद्गतेन मानसं सरः ओकःस्थानं यस्येति सः तेन
नसौकसा हसेन हंसास्तु श्वेतगरुतश्चक्राङ्गा मानसौकस इत्यमरः । अवादि उक्तः
: कर्म्मणि लुङ ॥ १२९ ॥

तत्पश्चात् हस्तरूपी पिंजड़ेमें पड़ा हुआ वह राजहंस उन महाराजसे बोला जिसके सौन्दर्य
प्रशंसा महाराज मुग्ध होकर बार–बार कर रहे थे—"आजीवन मैंने तुम्हारे सदृश पक्षी
देखा, तुम्हारे पंखोंसे आविर्भूत सौन्दर्य अन्य पक्षियोंमें नहीं मिलता आदि आदि ।"१२९

धिगस्तु तृष्णातरलं भवन्मनः समीक्ष्य पक्षान्मम हेमजन्मनः ।
तवार्णवस्येव तुषारशीकरैर्भवेदमीभिः कमलोदयः कियान् ॥ १३० ॥

तदेव चतुर्भिराह । धिगित्यादि । हेम्नो जन्म येषान्तान् हेमजन्मनो हैमान् मम
न् पतत्राणि समीक्ष्य तृष्णातरलम् आशावशगं भवन्मनो धिगस्त्विति निन्दा
निर्भर्त्सननिन्द्योरित्यमरः । धिगुपर्य्यादिषु त्रिष्विति धिग्योगात् मन इति
या तुषारशीकरैः हिमकिरणैरर्णवस्येव तव एभिः पक्षैः कियान् कमलाया लक्ष्म्याः
कस्य जलस्य जलजस्य चोदयो वृद्धिर्भवेत् न कियानित्यर्थः ॥ १३० ॥

उस राजहंसने कहा—"हे राजन् ! स्वर्णके सदृश मेरे पंखोंको देखकर आपका चित्त
भिभूत हो गया है—धिक्कार है ऐसे चित्त चाञ्चल्यको । हे स्वामिन् ! जैसे—हिम कणों
मुद्रके जलमें अभिवृद्धि नहीं होती है वैसे ही मेरे स्वर्णके पंखोंकी श्रीसे आपकी श्रीमें
वृद्धि नहीं हो सकती है ॥ १३० ॥

केवलं प्राणिबधो बधो मम त्वदीक्षणाद्विश्वसितान्तरात्मनः ।
गर्हितं धर्मधनैर्निवर्हणं विशिष्य विश्वासजुषां द्विषामपि ॥ १३१ ॥

ेति । हे नृप ! त्वदीक्षणात् त्वन्मूर्त्तिदर्शनादेव विश्वसितान्तरात्मनो विस्रब्ध-
स्य विश्वस्तस्येत्यर्थः । मम बधः केवलं प्राणिमात्रबधो न किन्तु विश्वासघातपात-
यर्थः ततः किमत आह विश्वासजुषां विस्रम्भभाजां द्विषामपि निवर्हणं हिंसनं
धनैर्धर्मपरैः मन्वादिभिः विशिष्यातिरिच्य विगर्हितमत्यन्तनिन्दितमित्यर्थः॥१३१॥

प्रभो ! आपको देखकर मुझे आप पर श्रद्धा उत्पन्न हो गई थी और मैं विश्वास करके
पड़ रहा था उतनेमें ही आपने मुझे पकड़ लिया । अस्तु—

मुझ जैसे निश्छली एवं विश्वास धारण करनेवाले जीवकी हिंसासे आपको केवल जीव-
का ही पाप न लगेगा । अपितु, विश्वासघातका भी पाप लगेगा । क्योंकि—धर्मवेत्ता
आदिने विश्वास प्राप्त कर आये हुए शत्रुकी हिंसा करनेका प्रवल प्रतिरोध किया है ॥१३१॥

पदे सन्ति भटा रणोद्भटा न तेषु हिंसारस एष पूर्य्यते ?
धिगीदृशन्ते नृपतेः कुविक्रमं कृपाश्रये यः कृपणे पतत्रिणि ॥ १३२ ॥



पदे पद इति । रणोद्भटाः रणेषु प्रचण्डाः भटायोधाः पदे पदे सन्ति सर्व्वत्र सन्ती

त्यर्थः वीप्सायां द्विर्भावः एष हिंसारसो हिंसारागस्तेषु भटेषु न पूर्यते अत्र काकुः किमित्यर्थः नृपतेर्महाराजस्य ते तव ईदृशमवध्यवधरूपं कुविक्रमं धिक् यः कु कृपश्राये कृपाविषये अनुकम्पनीये कृपणे दीने पतत्रिणि क्रियत इति विशेषः ॥

हे महाराज ! इस जगती पर पदे-पदे रण योद्धा हैं। अतः आपका वह हिंसा रा हननसे क्या पूरा नहीं हो सकता ? हे नाथ ! आपके इस अवध्य दीन-हीन प करनेमें प्रवृत्त पराक्रमको शतशः धिक्कार है ॥ १३२ ॥

**फलेन मूलेन च वारिभूरुहां मुनेरिवेत्थं मम यस्य वृत्तयः ।**
**त्वयाद्य तस्मिन्नपि दण्डधारिणा कथं न पत्या धरणी हृणीयते ॥**

फलेति । यस्य मम मुनेरिव वारिभूरुहां जलरुहां पद्मादीनाम् अन्यत्र व भूरुहाञ्च फलेन मूलेन चेत्थमनेन दृश्यमानप्रकारेण वृत्तयो जीविकाः तस्मिन् अनपराधेऽपीति भावः। दण्डधारिणा दण्डकारिणा अदण्ड्यदण्डकेनेत्यर्थः । पत्या हेतुना अद्य धरणी कथं न हृणीयते जुगुप्सत एवेत्यर्थः, हृणीयतेः कण्ड्वादि लट् तत्र हृणीङिति ङित्करणादात्मनेपदम् अकार्यकारिणं भर्त्तारमपि गर्हन्ते इति भावः ॥ १३३ ॥

आह ! कन्दमूल—फल तथा कमलनाल आदिको भक्षण करके ऋषियोंके समान निर्वाह करनेवाले मेरे समान जीवोंकी जो व्यक्ति हिंसा करते हैं उस दण्डधारी पति पृथिवी माता घृणा क्यों नहीं करती ? ॥ १३३ ॥

**इतीदृशैस्तं विरचय्य वाङ्मयैः सचित्रवैलक्ष्यकृपं नृपं खगः ।**
**दयासमुद्रे स तदाशयेऽतिथीचकार कारुण्यरसापगा गिरः ॥ १३४**

इतीति । इतीत्थं खगो हंसस्तं नृपम् ईदृशैर्दोषालम्भैरित्यर्थः वाङ्मयैर्वा एकाचो नित्यं मयटमिच्छन्तीति विकारार्थे मयट्प्रत्ययः पक्षिकथनात् चि स्वाकार्योद्घाटनादपत्रपा वैलक्ष्यं परार्त्तिदर्शने तन्निवर्त्तनेच्छा या कृपा ता वर्त्तत इति स चित्रवैलक्ष्यकृपं विरचय्य विधाय ल्यपि लघुपूर्वादित्ययादेशः द तदाशये तच्चित्ते कारुण्यरसापगाः करुणारसनदीः गिरः अतिथीचकार प्र मासेत्यर्थः समुद्रे नदीप्रवेशो युक्त इति भावः ॥ १३४ ॥

इस प्रकारके कथनोंसे राजहंसने उन महाराज नलको विस्मित, लज्जाशील औ बना दिया। ततः अपनी करुणारसमयी नदीके समान वाणीको उन महाराज नल समुद्ररूपी चित्तमें अतिथि बनाकर प्रविष्ट करा दिया। (अर्थात्—जब महाराज द गये तब उसने करुण स्वरमें उनसे कहना प्रारम्भ किया।) ॥ १३४ ॥

**मदेकपुत्रा जननी जरातुरा नवप्रसूतिर्वरटा तपस्विनी ।**
**गतिस्तयोरेष जनस्तमर्दयन्नहो विधे ! त्वां करुणा रुणद्धि नो ॥ १**



तावद्गिरः प्रपञ्चयति । मदित्यादिना । तत्र तावद्दैवमुपालभते हे विधे

इमेवैकः पुत्रो यस्याः सा मदेकपुत्रा मम नाशे तस्या गत्यन्तरं नास्तीत्यर्थः। जरातुरा यमप्यसमर्थेत्यर्थः, वरटा स्वभार्य्या हंसस्य योषिद्वरटेत्यमरः। नवप्रसूतिरचिरप्रसवा स्विनी शोच्या एष जनः स्वयमित्यर्थः तयोर्जायाजनन्योर्गतिः शरणं तं जनं मामि-र्थः अर्दयन् पीडयन् हे विधे ! विधातः ! त्वां करुणा न रुणद्धि मत्पीडनान्न निवा-तीति काकुः न रुणद्धि किमित्यर्थः ॥ १३५ ॥

हे विधे ! मैं अपनी वृद्धा अशक्ता माताका एकमात्र पुत्र हूँ, नव प्रसवकर्त्री शोचनीया ामें परिव्याप्ता मेरी स्त्री है। उन दोनोंका मैं ही पालक हूँ। हे भाग्य ! अनुकम्पाके त्य मुझ निःसहायको कष्ट देते हुए तुम करुणवृत्ति क्यों नहीं धारण करते हो ?॥ १३५॥

मुहूर्त्तमात्रं भवनिन्दया दयासखाः सखायः स्रवदश्रवो मम।
निवृत्तिमेष्यन्ति परं दुरुत्तरस्त्वयैव मातः ! सुतशोकसागरः ॥ १३६ ॥

अथ मातरं शोचयति मुहूर्त्तेति। हे मातः ! सखायः सुहृदो दयासखाः सदयाः सारगर्हणेन क्षणमात्रं गलिता एव सन्तो निवृत्तिं शोकोपरतिमेष्यन्ति, किन्तु त्वयैव तशोक एव सागरः परमत्यन्तः दुःखेनोत्तीर्य्यत इति दुरुत्तरो दुस्तरः तरतेः कृच्छ्रार्थे ल्प्रत्ययः ॥ १३६ ॥

हे मातः ! मेरे दयालुमित्र आँसुओंको वहाते हुए, संसारकी निन्दा करते हुए क्षणमात्रमें पनेि शोक भुला देंगे। परन्तु, हे जननि ! आपके लिए पुत्रशोकरूपी सागर पार करना ठेन होगा ॥ १३६ ॥

मदर्थसन्देशमृणालमन्थरः प्रियः कियद्दूर इति त्वयोदिते।
विलोकयन्त्या रुदतोऽथ पक्षिणः प्रिये स कीदृग्भविता तव क्षणः॥१३७॥

अथ भार्य्यामुद्दिश्य विलपति मदर्थेत्यादिना। हे प्रिये ! मह्यमिमे मदर्थे र्थेन सह नित्यसमासः सर्वलिङ्गता च वक्तव्या, तयोः सन्देशमृणालयोः वाचिक-सयोः मन्थरस्तत्प्रेषणे विलम्बितप्रवृत्तिः प्रियः कियद्दूरे देशे वर्त्तत इति त्वया दिते उक्ते पृष्टे सतीत्यर्थः अथ प्रश्नानन्तरं रुदतः अनिष्टोच्चारणाशक्तया अश्रूणि मुञ्चतः पक्षिणः इतो गच्छतो गतान्विलोकयन्त्यास्तव स क्षणः स कालः कीदृग्भ-विता भविष्यति वज्रपातप्राय इति भावः। कर्त्तरि लुट् ॥ १३७ ॥

हे प्रिये ! तुम उस क्षण कितने दुःखका अनुभव करोगी जिस क्षण मेरे लिए अन्य क्षियोंको रोते देखकर और मुझे मृत न जानकर अज्ञातवश उनसे तुम पूछोगी—"ऐ क्षियो ! मेरे पति अभी कितनी दूर हैं तथा मेरे पास कमलनाल आदि भेजनेमें कितने स्त हैं" ॥ १३७ ॥

कथं विधातर्मयि पाणिपङ्कजात्तव प्रियाशैत्यमृदुत्वशिल्पिनः।
वियोक्ष्यसे वल्लभयेति निर्गता लिपिर्ललाटंतपनिष्ठुराक्षरा ॥ १३८ ॥

कथमिति। हे विधातः ! प्रियायाः वरटायाः शैत्यमृदुत्वशिल्पमस्त्यस्य तदङ्ग-

शैत्यमार्दवनिर्म्माणकात्तवपाणिपङ्कजात्पङ्कजमृदुशिशिरात् पाणेरित्यर्थः मयि । वल्लभया सह वियोचयसे इत्येवंरूपा अतएव ललाटं तपन्ति दह ललाटन्तपानि सूर्य्यललाटयोर्दशितपोरिति खल्प्रत्ययः अरुर्द्विषदित्यादिना मुम तानि निष्ठुराणि कर्णकठोराणि चाक्षराणि यस्याः सा लिपिरक्षरविन्यासः निर्गता निसृःता, अत्र कारणात् विरुद्धकार्य्योत्पत्तिकथनाद्विषमालङ्कारभेदः, कार्य्योस्योत्पत्तिर्यत्रानर्थस्य भावयेत् । विरूपघटना वा स्याद्विषमालंकृतिर्मतेति

हे ब्रह्मदेव ! आपने मेरी प्रियाके कोमल और सुधासम शीतल अङ्गोंके निर्माण करने हाथोंसे मेरे ललाटमें तपानेवाले कठोर अक्षर कैसे लिखे ? [ आप भार्याहीन हैं । अतः कर सके ] ॥ १३८ ॥

अपि स्वयूथ्यैरशनिक्षतोपमं समाद्य वृत्तान्तमिमं वतोदिता ।
मुखानि लोलाक्षि ! दिशामसंशयं दशापि शून्यानि विलोकयिष्यसि ।

अपीति । अपि चेत्यपेरर्थः अद्यास्मिन् दिने सद्यः पहदित्यादिना नि स्वयूथ्यैः स्वसङ्गचरैर्हंसैः कर्तृभिरशनिक्षतोपमं वज्रप्रहारप्रायं समेमं घृन्ता अनर्थवार्त्ता उदिता उक्ता सती वदेर्बुजर्थस्य दुहादित्वादप्रधाने कर्म्मणि क्तः, स्वपीत्यादिना सम्प्रसारणं, हे लोलाक्षि ! दश दिशां मुखानि शून्यान्यालचय कारणि विलोकयिष्यसि असंशयं सन्देहो नास्तीत्यर्थः अर्थाभावेऽव्ययीभावः, खेदे ॥ १३९ ॥

हे चञ्चलनेत्रधारिणि ! प्रिये !! वज्रप्रहारके समान मेरे इस अनर्थकारी वधवृत्तको, अपने सहचरोंके द्वारा सुनकर तुम दशों—दिशाओंको शून्य देखोगी ॥ १३९ ॥

ममैव शोकेन विदीर्णवक्षसा त्वयापि चित्राङ्गि ! विपद्यते यदि ।
तदस्मि दैवेन हतोऽपि हा हतः स्फुटं यतस्ते शिशवः परासवः ॥ १४०

ममैवेति । हे चित्राङ्गि ! लोहितचञ्चुचरणत्वाद्विचित्रगात्रे, मम शोकेनैव मद्वि दुःखेनैव विदीर्णवक्षसा विदलितहृदा त्वया विपद्यते म्रियते यदि तर्त्तहि दैवेन स्फुटं व्यक्तं पुनर्हतोऽस्मि हेति विषादे हा विस्मय विषादयोरिति विश्वः । कुतः य शिशवः परासवो मातुरप्यभावे पोषकाभावान्मृताः अतः शिशुमरणभावनया णितं मे मरणदुःखं प्राप्त मित्यर्थः ॥ १४० ॥

हे विचित्राङ्गि ! यदि तुम मेरे शोकसे विदारित होकर प्राणोंको त्याग दोगी तो, वशात, मैं मरकर पुनः मारा गयाके समान होऊंगा । क्योंकि, तुम्हारे प्राणोंके बच्चे अनाथ होकर पालन-पोषणके अभावसे वे प्राणोंको न धारण कर सकेंगे हाय दशा होगी ॥ १४० ॥

तवापि हाहा विरहात् क्षुधाकुलाः कुलायकूलेषु विलुठ्य तेषु ते ।
चिरेण लब्धा बहुभिर्मनोरथैर्गताः क्षणेनास्फुटितेक्षणा मम ॥ १४१

ननु मन्मृतौ कथं तेषां मृतिरत आह तवापीति। हे प्रिये! बहुभिर्मनोरथैश्चिरेण लब्धाः कृच्छ्रलब्धा इत्यर्थः अस्फुटितेक्षणाः अद्याप्यनुन्मीलितेक्षणा मम ते शावकाः शिशवः तवापि न केवलं ममैवेति भावः विरहाद्विपत्तेः क्षुधाकुलाः क्षुत्पीडिताः स्वसम्पादितेष्वित्यर्थः कुलायकूलेषु नीडान्तिकेषु, कुलायो नीडमस्त्रियामित्यमरः। विलुव्य परिवृत्य क्षणेन गताः मृतप्रायाः हा हेति खेदे॥ १४१॥

हे प्रिये! अनेकों मनोरथोंसे बहुत समयके पश्चात् भाग्यवश उत्पन्न वे बच्चे जिनकी अभी आंखें भी नहीं खुली हैं। विपत्तिमें भूख-प्यासके व्याकुल होकर हमारे द्वारा निर्मित घोसलोंके प्रान्तभागसे गिरकर हाय, क्षणमात्र ही में मर जायंगे॥ १४१॥

सुताः कमाहूय चिराय चूङ्कृतैर्विधाय कम्प्राणि मुखानि कं प्रति।
कथासु शिष्यध्वमिति प्रमील्य स स्रुतस्य सेकाद्बुबुधे नृपाश्रुणः॥१४२॥

सुता इति। हे सुताः! चूङ्कृतैश्चूङ्कारैश्चिराय कं प्रति कमपि प्रति मुखानि कम्प्राणि चञ्चलानि विधाय कथासु शिष्यध्वं कथामात्रशेषा भवत, कुत्रापि पित्रोरदर्शनाद्म्रियध्वं प्राप्तकाले लोट् मरणकालः प्राप्त इत्यर्थः इतीति इत्युक्त्वेत्यर्थः। गम्यमानार्थत्वादप्रयोगः प्रमील्य मूर्च्छां प्राप्य स हंसः सुतस्य दयार्द्रभावात्प्रवहतो नृपस्याश्रुणः सेकाद्बुबुधे संज्ञां लेभे प्रायेणात्र स्वभावोक्तिरूह्या॥ १४२॥

हे पुत्रो! किसे देरतक अपनी चुंकारोंसे बुलाकर तथा अपनी चोंचोंमें उनके मुखोंको डालकर बोलचाल की भाषा सीखोगे! ऐसा विलाप करते हुए वह राजहंस मूर्च्छित हो गया। ततः महाराजने दयार्द्रभावसे आंसुओंको बहाते हुए नेत्रजलके छिड़कावसे उसे होशमें ला दिया। अर्थात्—महाराज करुणाकरके रोने लगे और उनके नेत्रजलके सिञ्चनसे वह चैतन्य हो गया॥ १४२॥

इत्थममुं विलपन्तममुञ्चद्दीनदयालुतयावनिपालः।
रूपमदर्शि धृतोऽसि यदर्थं गच्छ यथेच्छमथेत्यभिधाय॥ १४३॥

अत्र सर्वत्र भिन्नसर्गान्तैरिति काव्यलक्षणाद्वृत्तान्तरेण श्लोकद्वयमाह इत्थमित्यादिना। इत्थं विलपन्तं परिदेवमानममुं हंसं अवनिपालो नलो दीनेष्वार्त्तेषु दयालुतया कारुणिकतया रूपमाकृतिरदर्शि अपूर्व्वत्वादवलोकितं यस्मै यदर्थं रूपदर्शनार्थमेव धृतो गृहीतोऽसि अथ यथेच्छं गच्छेत्यभिधाय अमुञ्चत् मुक्तवान्। दोधकवृत्तमिदम्भभभा गाविति लक्षणात्॥ १४३॥

इस रीतिसे विलाप करनेवाले राजहंसको उन महाराज पृथिवीपाल नलने, जो दीनों पर दया करनेवाले थे, उसका स्वरूप पुनः देखा क्योंकि उन्होंने उसके रूपपर मुग्ध होकर ही उसे पकड़ा था। ततः यह कहकर उसे छोड़ दिया—"जाओ स्वेच्छासे विचरण करो"॥१४३॥

आनन्दजाश्रुभिरनुश्रियमाणमार्गान् प्राक्शोकनिर्गलितनेत्रपयःप्रवाहान्।
चक्रे स चक्रनिभचङ्क्रमणच्छलेन नीराजनां जनयतां निजबान्धवानाम्॥ १४४



५२

आनन्देति । हंसः चक्रनिभचंक्रमणस्य मण्डलाकारभ्रमणस्य छलेन नीरा
जनयतां कुर्व्वतां निजबान्धवानां बन्धमुक्तं बान्धवाः नीराजयन्तीति समा
प्राङ् मोचनात्पूर्वं शोके निर्गलिता निःसरितानेत्रपयःप्रवाहाः वाष्पपूरास्तानानन्
श्रुभिरानन्दवाष्पैरनुस्रियमाणमार्गान् अनुगम्यमानमार्गांश्चक्रे कृतवान् । अत्र प
स्वभावसिद्धं बन्धमुक्तं स्वयूथ्यभ्रमणं छलशब्देनापह्नुत्य तत्र नीराजनात्वारोपाद
वभेदः । अत्र चमत्कारित्वान् मङ्गलाचाररूपत्वाच्च सर्व्वत्र सङ्गीतश्लोकेष्वानन्द
प्रयोगः, यथाह भगवान् भाष्यकारः—मङ्गलादीनि मङ्गलमध्यानि मङ्गलान्तानि हि
तानि शास्त्राणि प्रथन्ते वीरपुरुषाण्यायुष्मत्पुरुषाणि च भवन्ति अध्येतारश्च प्रवृ
भवन्तीति । वसन्ततिलकावृत्तम् उक्तं वसन्ततिलका तभजा जगौ ग इति लक्ष
सर्गान्तत्वाद्वृत्तभेदः यथाह दण्डी सर्गैरनतिविस्तीर्णैः श्राव्यवृत्तैः सुसन्धिभिः । सर्व
भिन्नसर्गान्तैरुपेतं लोकरञ्जनमिति ॥ १४४ ॥

ततः उस राजहंसको घेरकर उनके साथियों ने परिक्रमण किया । वह परिक्रमण
लगता था । जैसे—वे लोग उसकी आरती कर रहे हों । उस राजहंसने अपने नेत्रोंसे
न्दाश्रु गिराये जो आनन्दाश्रु उसकी आंखोंसे पहले गिरे हुए शोकाश्रु के अनुगामी थे ॥

श्रीहर्षं कविराजराजिमुकुटालङ्कारहीरः सुतम्
श्रीहीरः सुषुवे जितेन्द्रियचयं मामल्लदेवी च यम् ।
तच्चिन्तामणिमन्त्रचिन्तनफले शृङ्गारभङ्ग्या महा-
काव्ये चारुणि नैषधीयचरिते सर्गोऽयमादिर्गतः ॥ १४५ ॥

अथ कविः काव्यवर्णनमाख्यातपूर्वकं सर्गसमाप्तिं श्लोकबन्धेनाह श्रीहर्षमि
कविराजराजिमुकुटानां विद्वच्छ्रेष्ठश्रेणीमुकुटानां अलङ्कारभूतो हीरो वज्र
हीरो नाम विद्वान् श्रीहर्षनामानं यं सुतं सुषुवे जनयामास मामल्लदेवी नाम स्व
सा च यं सुतं सुषुवे तस्य श्रीहर्षस्य यश्चिन्तामणिमन्त्रः तस्य चिन्तनमुपा
तस्य फले फलभूते शृङ्गारभङ्ग्या शृङ्गाररसचारुणि निषधानां राजा नैषधो
तदीयचरिते नलचरितनामके महाकाव्ये अयमादिः प्रथमः सर्गो गतः समाप्त
एवमुत्तरत्रापि द्रष्टव्यम् ॥ १४५ ॥

इति पदवाक्यप्रमाणपारावारपारीणमहोपाध्यायकोलाचलमल्लिनाथसूरिविर
चितायां जीवातुसमाख्यायां नैषधटीकायां प्रथमः सर्गः समाप्तः ।

---

कविराजोंके मुकुटमणि, हीरेके समान श्रीहीर तथा श्री मामल्लदेवीने जिन पुत्रको
किया । उन्होंने जितेन्द्रिय रहकर चिन्तामणि नामक मन्त्रका जप किया उसी जपके
शृंगाररसपूर्ण मनोहर महाकाव्य नैषधचरित का यह प्रथम सर्ग है ॥ १४५ ॥



इस रीतिसे नैषधचरितकी "प्रबोधिनी" हिन्दी टीका में प्रथमसर्ग समाप्त हुआ ।

# द्वितीयः सर्गः ।

अधिगत्य जगत्यधीश्वरादथ मुक्तिं पुरुषोत्तमात्ततः ।
वचसामपि गोचरो न यः स तमानन्दमविन्दत द्विजः ॥ १ ॥

अधिगत्येति । अथ मोचनानन्तरं स द्विजः पक्षी विप्रश्च, दन्तविप्राण्डजा द्विजा इत्यमरः । जगत्यधीश्वरात् क्ष्मापतेः भुवनपतेश्च जगती भुवने क्ष्मायामिति विश्वः । पुरुषोत्तमात् पुरुषश्रेष्ठात् विष्णोश्च ततः तस्मात् प्रकृतान्नलात् अन्यत्र प्रसिद्धाच्च मुक्तिं मोचनं निर्वाणञ्च अधिगत्य प्राप्य य आनन्दो वचसामपि न गोचरः वक्तुमशक्यः यतो वाचो निवर्तन्त इत्यादेरवाङ्मानसगोचरश्च तमानन्दं परमानन्दञ्च अविन्दतालभत विदेर्लाभार्थात् कर्त्रभिप्राये क्रियाफल इत्यात्मनेपदं शे मुचादीनामिति नुमागमः अत्राभिधायाः प्रकृतार्थमात्रनियन्त्रणादुभयश्लेषानुपपत्तेर्भेदान्तरानवकाशाल्लक्षणायाश्च मुख्यार्थबाधमन्तरेणासम्भवात् ध्वनिरेवायं ब्राह्मणस्य विष्णोर्मोक्षानन्दप्राप्तिलक्षणार्थान्तरप्रतीतेर्न श्लेषः प्रकृताप्रकृतोभयगतः । अस्मिन् सर्गे एकशतश्लोकपर्य्यन्तं वियोगिनीवृत्तम् । विषमे ससजा गुरुः समे सभरा लोऽथ गुरुर्वियोगिनीति लक्षणादिति संक्षेपः ॥ १ ॥

ततः जगत्के अधिपति तथा नरश्रेष्ठ महाराज नलके हाथसे मुक्ति प्राप्तकर उस राजहंसको अति आनन्द मिला—उस आनन्दका वर्णन वाणी द्वारा नहीं किया जा सकता है । जैसे—जगत्के ईश्वर पुरुषोत्तम भगवान् विष्णुसे विप्रगण मुक्ति प्राप्तकर आनन्दित होते और उस आनन्दका वर्णन वाणी द्वारा नहीं कर सकते हैं—अनुभवसे ज्ञात करते हैं । अद्वत्—उस राजहंसको आनन्द हुआ जो अवर्णनीय है ॥ १ ॥

अधुनीत खगः स नैकधा तनुमुत्फुल्लतनूरुहीकृताम् ।
करयन्त्रणदन्तुरान्तरे व्यलिखच्चञ्चुपुटेन पक्षती ॥ २ ॥

अधुनीतेति । स खगो हंसः उत्फुल्लतनूरुहीकृतां नृपकरपीडनादुद्बुद्ध्य पतत्रीकृतां पतत्रञ्च तनूरुहमित्यमरः । तनुं शरीरं नैकधा अनेकधा नञर्थस्य सुप्सुपेति समासः नञ् समासे न लोपप्रसङ्गः अधुनीत धूतवान् धूञः क्र्यादेर्लङिति तङ् प्वादीनां ह्रस्व इति ह्रस्वः किञ्च करयन्त्रणेन नृपकरपीडनेन दन्तुरे निम्नोन्नतमध्यप्रदेशे पक्षती पक्षमूले स्त्रीपक्षतिः पक्षमूलमित्यमरः, चञ्चुपुटेन त्रोटिसम्पुटेन व्यलिखत् विलेखनेन ऋजूचकारेत्यर्थः । एतदादेः श्लोकचतुष्टयेपु स्वभावोक्तिरलङ्कारः ॥ २ ॥

उस राजहंसने महाराज नलके हाथसे उत्पीड़ित, अतः उत्फुल्लित, पंखोंवाली देहको खूब फड़फड़ाया तथा महाराजके हाथमें रहनेसे उत्पन्न पीड़ाको अपनी चोंचसे हटाया—चोंचसे अपने पंखोंके तथा शरीरके निम्न–मध्य–ऊर्ध्व स्थलोंको चोंचसे खूब खुजलाया ॥ २ ॥



अयमेकतमेन पक्षतेरधिमध्योर्ध्वगजद्दमङ्घ्रिणा ।

स्खलनक्षण एव शिश्रिये द्रुतकण्डूयितमौलिरालयम् ॥ ३ ॥

अयमिति । अयं हंसः स्खलनक्षण एव मोचनानन्तरमेवेत्यर्थः एकतमेनाङ्घ्रि पक्षतेः पक्षमूलस्याधिमध्यं मध्ये ऊर्द्ध्वगामिनी जङ्घा यस्मिन् कर्मणि तद्यथा कण्डूयनेन तत्तथा द्रुतं कण्डूयितमौलिः सत्वरं कर्षितचूडः सन् आलयं निजा शिश्रये श्रितवान् ॥ ३ ॥

वह राजहंस महाराज नलके हाथसे छूटते ही एक पैरपर स्थित होकर दूसरे पैरसे स्थल शिरको जल्दी–जल्दी खुजलाता हुआ अपने घोंसले में बैठा ॥ ३ ॥

स गरुद्वनदुर्गदुर्ग्रहान् कटु कीटान् दशतः सतः क्वचित् ।
नुनुदे तनुकण्डुपण्डितः पटुचञ्चूपुटकोटिकुट्टनैः ॥ ४ ॥

स इति । पण्डितः निपुणः स हंसः गरुतः पक्षा एव वनदुर्गं तत्र दुर्ग्रहान् ग्रहीतुमशक्यान् कटु तीक्ष्णन्दशतः दन्तैस्तुदतः क्वचित् कुत्रचिदेव सतः वर्त्तमानात् कीटान् क्षुद्रजन्तून् पटुचञ्चूपुटस्य समर्थत्रोटेः कोट्योः अग्रेण कुट्टनैः घट्टनैस्तनुरल्पा कण्डूर्यस्मिन् तनुकण्डु यथा तथा गोस्त्रियोरुपसर्ज्जनस्येति ह्रस्वः, नुनुदे निवारितवान् स्वरितञित इत्यात्मनेपदम् ॥ ४ ॥

निपुण उस राजहंसने अपने पंखरूपी विपिनप्रासादमें निवास करनेवाले तथा तेज से काटनेवाले एवं चोंचसे न पकड़े जानेवाले दुष्ट कीड़ोंको अपनी चोंचकी प्रचण्ड चो नष्ट कर दिया—चोंचकी रगड़से कीड़ोंको मार डाला । तथा अपने शरीर में होनेवाली धी धीमी खुजलीको दूर किया ॥ ४ ॥

अयमेत्य तडागनीडजैर्लघु पर्य्यव्रियताथ शङ्कितैः ।
उदडीयत वैकृतात् करग्रहजादस्य विकस्वरस्वरैः ॥ ५ ॥

अयमिति । अयं हंसस्तडागनीडजैः सरःपक्षिभिस्तत्रत्यहंसैः नीडोद्भवा गरुत्मन्त इत्यमरः । लघु क्षिप्रमेत्यागत्य पर्य्यव्रियत परिवृतः वृणोतेः कर्मणि लङ् । अथ परिवेष्टनान्तरमस्य हंसस्य करग्रहजान्नलकरपीडनजन्याद्विकृतादेव वैकृताद्विलुण्ठितपक्षरूपाद्विकारदर्शनादित्यर्थः स्वार्थेऽण् प्रत्ययः, शङ्कितैश्चकितैः अतएव विकस्वरस्वरैः घोषैस्तैरुदडीयतोड्डीनं डीङो भावे लङ् ॥ ५ ॥

तालावके समीप रहनेवाले हंसोंने उस राजहंसको जल्दीसे आकर घेर लिया। उन्होंने महाराज नलके हाथोंमें रहनेसे उसके पंखोंकी विकृत अवस्था देखी और आश्चर्यान्वित होकर वे लोग जोरसे शब्द करते हुए उड़ गये ॥ ५ ॥

दधतो बहुशैवलक्ष्मतां धृतरुद्राक्षमधुव्रतं खगः ।
स नलस्य ययौ करं पुनः सरसः कोकनदभ्रमादिव ॥ ६ ॥

दधत इति । अथ स खगो हंसः बहुशैवला भूरिशैवला क्ष्मा भूर्यस्य तद्बहुशैवलक्ष्म तस्य भावः तत्ता तान्दधतो दधानात् सरसः पल्वलात् बहूनि शैवलक्ष्माणि शिवस्य

चिह्नानि यस्य स बहुशैवलक्ष्मा तस्य भावः तत्ता तान्दधतो दधानस्य नलस्य रुद्राक्षाणि मधुव्रता इवेत्युपमितसमासः ते धृता येन तं करं कोकनदभ्रमाद्रक्तोत्पलभ्रान्तेरिव पुनर्ययौ कोकनदं तु रुद्राक्षसदृशमधुव्रतं खलु । अत्र बहुशैवलेत्यादौ शब्दश्लेषस्तदनुप्राणिता रुद्राक्षमधुव्रतमित्युपमा तत्सापेक्षा चेयं कोकनदभ्रमादिवेत्युत्प्रेक्षेति सङ्करः ॥ ६ ॥

वह राजहंस, महाराज नलके लाल कमलके सदृश हाथमें लाल कमलके धोखेसे पुनः आया, महाराजके हाथोंमें भ्रमरपंक्तिके समान रुद्राक्षोंकी माला थी तथा उनके शरीरपर अनेकों शिवभक्तिके चिह्न शोभा दे रहे थे। उस समय राजा नलकी देह तालाबके समान थी क्योंकि जैसे -- तालाबमें लाल-लाल कमल खिले रहते हैं और उन कमलोंपर मधुपावली बैठी रहती है तथा तालाबके चारोओर शिवार-घास जमी रहती है। वैसे ही महाराज की तालाब तुल्य देहमें उनका हाथ लाल कमलके सदृश दीखता था एवं उस हाथमें धारण की हुई रुद्राक्षकी माला भ्रमरपंक्तिके तुल्य ज्ञात होती थी। महाराज नलके भालप्रदेशमें लगी हुई भस्म आदि शिवभक्तिकी सूचना दे रही थी ॥ ६ ॥

पतगश्चिरकाललालनादतिविश्रम्भमवापितो नु सः ।
अतुलं विदधे कुतूहलं भुजमेतस्य भजन्महीभुजः ॥ ७ ॥

अथास्य स्वयमागमनादुत्प्रेक्षते पतग इति । पतगो हंसश्चिरकाललालनादुपलालनादतिविश्रम्भमतिविश्वासं समौ विश्रम्भविश्वासावित्यमरः । अवापितः प्रापितो नु किमित्युत्प्रेक्षा अन्यथा कथं पुनः स्वयमागच्छेदिति भावः । किञ्च एतस्य महीभुजो भुजम्भजन् स्वयमाप्नुवन् अतुलं कुतूहलं विदधे कौतुकञ्चकारेत्यर्थः अत्रोत्प्रेक्षावृत्त्यनुप्रासयोः शब्दार्थालङ्कारयोस्तिलतण्डुलवत् संसृष्टिः एकद्वित्र्यादिवर्णानां पुनरुक्तिर्भवेद्यदि । सङ्ख्यानियममुल्लङ्घ्य वृत्त्यनुप्रास इरित इति ॥ ७ ॥

राजहंसके पुनरागमनपर उत्प्रेक्षा की जाती है कि, वह क्यों पुनः आया—

महाराज नलके हाथपर राजहंसके पुनः आने से महाराजको अनुपम कौतूहल उत्पन्न हुआ—ऐसा ज्ञात होता है कि, वह राजहंस महाराजके हाथपर चिरकालतक रहा। अतः महाराजपर विश्वास करके और उनके अनुरागभरे सान्त्वनादि वचनोंपर प्रमुग्ध होकर वह पुनः आया ॥ ७ ॥

नृपमानसमिष्टमानसः स निमज्जत्कुतुकामृतोर्म्मिषु ।
अवलम्बितकर्णशष्कुलीकलसीकं रचयन्यवोचत ॥ ८ ॥

नृपमानसमिति । इष्टमानसः प्रियमानसः स राजहंसः कुतुकं हर्षस्तदेव अमृतं सुधा तस्योर्मिषु निमज्जदन्तर्गतं नृपमानसं नलमनः कर्णौ शष्कुल्याविव कर्णशष्कुल्यौ ते कलस्यौ ते अवलम्बिते अवधीकृते धृते च येन तत्तथोक्तं नद्यृतश्चेति कप् रचयन्

कुर्व्वन्नवोचत उक्तवान् जले मज्जन्नपि तरणार्थं कलसमवलम्बते तद्वत्कर्णशष्कुली कल
स्यावित्युपमारूपकयोः संसृष्टिः ॥ ८ ॥

कुतूहलरूपी जल तरंगोंके वेगमें बहनेवाले महाराज नलके चित्तको उस राजहंसने कर्ण
शष्कुलीरूपी घड़ोंके सहारेसे न बहने दिया—जैसे कोई व्यक्ति जलमें डूबनेके समय घड़ोंके
सहारेसे बचता है तद्वत्, अर्थात्—जब महाराज नल आश्चर्यचकित होकर राजहंसके पुनरा
गमनका मनमें विचार कर रहे थे तब उस राजहंसने स्पष्ट शब्दोंमें महाराजसे कहा— ॥ ८ ॥

मृगया न विगीयते नृपैरपि धर्मागममर्मपारगैः ।
स्मरसुन्दर मां यदत्यजस्तव धर्मः स दयोदयोज्ज्वलः ॥ ९ ॥

मृगयेति । धर्मागममर्म्मपारगैर्धर्मशास्त्रतत्त्वपारदर्शिभिरपि अन्तात्यन्ताध्वरदूरपा
रसर्व्वानन्तेपु ड इति गमेर्डप्रत्ययः। नृपैर्मृगया आखेटो नावगीयते न गर्ह्यते तथापि हे
स्मरसुन्दर ! मामत्यज इति यत् स त्यागस्तव दयोदयेनोज्ज्वलो विमलो निरुपाधिक
इति यावत् धर्म्मः सुकृतं, न केवलमाकारादेव सुन्दरोऽसि किन्तु धर्मतो
ऽपीति भावः ॥ ९ ॥

हे राजन् ! धर्मशास्त्रियोंने राजाको आखेट करना निन्द्य नहीं कहा है। किन्तु आपने
मुझे न मार कर छोड़ दिया। आपकी यह उदारता आपकी करुणार्द्र चित्तवृत्तिको प्रक
करत है। अतः हे नृप ! आप केवल स्वरूपसे ही सुन्दर नहीं हैं अपितु, दया-दाक्षिण्यादि
गुणोंसे युक्त हैं ॥ ९ ॥

अबलस्वकुलाशिनो झषान्निजनीडद्रुमपीडिनः खगान् ।
अनवद्यतृणार्दिनो मृगान् मृगयाघाय न भूभृतां घ्नताम् ॥ १० ॥

ननु प्राणिहिंसा कथं नावगीयते तत आह अबलेति। अबलस्वकुलाशिनो झष
दुर्बलस्वकुलघातिनो मत्स्या इति प्रसिद्धिः निजनीडद्रुमपीडिनो विण्मोचनफल
भक्षणादिना स्वाश्रयवृक्षपीडाकरान् खगान् अनवद्यतृणार्दिनः अनपराधितृणहिंस
कान् मृगान् अन्तःसंज्ञा भवन्त्येते सुखदुःखसमन्विता इति मनुस्मृत्या तत्तृणा
दीनामपि प्राणित्वात्तद्धिंसा पीडैवेति भावः, सर्वत्रापि ताच्छील्ये णिनिप्रत्ययः
घ्नतां हिंसतां भूभृतां मृगया अघाय पापाय न भवति तद्वधस्य दण्डरूपत्वात् प्रत्यु
ताकरणे दोष इति भावः ॥ १० ॥

अपने वंशके निर्बल प्राणियोंको मारनेवाली मछलियोंको तथा अपने आश्रयभूत वृक्षोंको
पीड़ा देनेवाले ( वृक्षोंके फल खाकर तथा उनपर बीट करके कष्ट देनेवाले ) पक्षियोंको प
निर्दोष तृणों के :नन करनेवाले हिरणोंको मारनेसे राजाओंको पाप नहीं लगता है—राजा
को शिकार करना शास्त्रसिद्ध है ॥ १० ॥



यदवादिषमप्रियन्तव प्रियमाधाय नुनुत्सुरस्मि तत् ।

कृतमातपसञ्ज्वरं तरोरभिवृष्यामृतमंशुमानिव ॥ ११ ॥

तथापि किमर्थं पुनरागतन्त्वयेत्यत आह यदिति । तत्र यदप्रियमवादिषमवोचम् । प्रियमाधाय प्रियं कृत्वा तदप्रियन्तरोः कृतं स्वकृतमातपसन्तापम् अमृतमुदकमभिवृष्य पयः कीलालममृतमित्यमरः । अंशुमानिव नुनुत्सुर्नोदितुं प्रमार्ष्टुमिच्छुः नुद-प्रेरण इत्यस्माद्धातोः सन्नन्तादुप्रत्ययः ॥ ११ ॥

हे राजन् ! मैंने जो कुछ अप्रिय शब्द आपसे पूर्वमें कहे उन अप्रिय शब्दोंके निवारणार्थ प्रिय शब्दोंको कहने आपके समीप उपस्थित हुआ हूं । यथा—सूर्य भगवान् स्वभावतः ताप देते हैं परन्तु वह ताप वृक्षोंको कष्टकर होता है अतः वृक्षोंके ताप वारणके लिए वे जल वृष्टि करके उनके तापको हरण करके आनन्दित कर देते हैं ॥ ११ ॥

उपनम्रमयाचितं हितं परिहर्त्तुं न तवापि साम्प्रतम् ।
करकल्पजनान्तराद्विधेः शुचितः प्रापि स हि प्रतिग्रहः ॥ १२ ॥

तर्हि भवन्मोचनं सुकृतमेव मम पर्य्याप्तम् किं हष्टोपकारेणेति न वाच्यमित्याह उपनम्रमिति । अयाचितमप्रार्थितमुपनम्रमुपनतं हितम् इह चामुत्र चोपकारकं तवापि परिहर्त्तुं न साम्प्रतं न युक्तम् । अयाचितं हितं ग्राह्यमपि दुष्कृतकर्म्मण इति स्मरणादिति भावः । तदपि मादृशात् पृथग्जनात् कथं ग्राह्यमत आह करेति । हि यस्मात्कारणात् स प्रतिग्रहः करकल्पकरस्थानीयमित्यर्थः ईषदसमाप्तौ कल्पप्प्रत्ययः यज्जनान्तरं स्वयं यस्य तस्माच्छुचेः शुद्धाद्विधेः ब्रह्मणः प्रापि प्राप्तः न तु मत्त इति भावः । आप्नोतेः कर्म्मणि लुङ् विधिरेव ते दाता अहं तस्योपकरणमात्रम् अतो न याच्ञालाघवन्तवेति भावः ॥ १२ ॥

हितकारिणी अप्रार्थित वस्तुकी प्राप्तिको आप ऐसे लोगोंको भी अस्वीकृत नहीं करना चाहिये । क्योंकि, वह हितकारिणी वस्तु वास्तविकरूपसे ( शुद्ध रूपसे ) करपरम्परया—एक हाथसे दूसरे—तीसरे हाथ होती हुई—ब्रह्माजीके द्वारा ही सबको प्राप्त होती है । दैवसे सब कुछ कार्य होते हैं ॥ १२ ॥

पतगेन मया जगत्पतेरुपकृत्यै तव किं प्रभूयते ।
इति वेद्मि न तु त्यजन्ति मां तदपि प्रत्युपकर्त्तुमर्त्तयः ॥ १३ ॥

ननु सार्वभौमस्य मे तिरश्चा त्वया किमुपकरिष्यते तत्राह पतगेनेति । पतगेन पक्षिमात्रेण मया जगत्पतेः सार्वभौमस्य तवोपकृत्यै उपकाराय प्रभूयते क्षम्यते किं न भूयत एवेत्यर्थः भावे लट् इति वेद्मि अक्षमत्वं जानामि, तदपि तथाप्यर्त्तयो यास्तु त्वया विनिवर्तिता इति भावः मां प्रत्युपकर्त्तुं न त्यजन्ति प्रत्युपकरणाय प्रेरयन्तीत्यर्थः अत्र पतगोऽप्यहं महोपकारिणस्ते महोपकारं करवाणीति भावः ॥ १३ ॥

मेरे ऐसे पक्षीके द्वारा आप ऐसे चक्रवर्त्तीका भला क्या उपकार हो सकता है—कुछ नहीं इस बातको भली भांति जानने पर भी आपके द्वारा किये उपकारका प्रत्युपकार करनेके लिए मेरा चित्त मुझे बाध्य कर रहा है ॥ १३ ॥

अचिरादुपकर्त्तुराचरेदथवात्मोपयिकीमुपक्रियाम् ।
पृथुरित्थमथाणुरस्तु सा न विशेषे विदुषामिह ग्रहः ॥ १४ ॥

अथ वा यथाशक्ति पत्नोऽस्त्वित्याह अचिरादिति । अथवा उपकर्त्तुरचिरादविलम्बादुपाय एवौपयिकः विनयादित्वात् स्वार्थे ठक् उपधाया ह्रस्वत्वञ्चेति ह्रस्वः ततआगता औपयिकी तामात्मौपयिकीं स्वोपाय साध्यामित्यर्थः तत आगत इत्यण् प्रत्ययेटिड्ढाणञित्यादिना ङीप् उपक्रियामाचरेत् प्रत्युपकारं कुर्य्यात् चरधातो र्विधिलिङ् इत्थमेवं सति सोपक्रिया पृथुरधिकास्तु अथ अथवा अणुरल्पोस्तु विदुषां विवेकिनामिहास्मिन् विषये विशेषे ग्रह आग्रहो न गुणग्राहिणो विवेकिनः कृतज्ञतामेव अस्य पश्यन्ति न दोषमन्विष्यन्तीत्यर्थः ॥ १४ ॥

अथवा, उपकार करनेवाले व्यक्तिके प्रति उपकृत व्यक्तिको स्वोपायसाध्या, यथाशक्ति, उपायक्रिया द्वारा अविलम्ब ही प्रत्युपकार कर देना चाहिये। वह उपाय क्रिया चाहे बड़ी हो अथवा छोटी हो । इसका विचार उपकारकर्त्ता नहीं करते हैं—वे लोग उपकृतके आन्तरिक भावको जान लेते हैं कि उसमें कृतज्ञता भाव है वा नही ॥ १४ ॥

भविता न विचारचारु चेत्तदपि श्रव्यमिदं मदीरितम् ।
खगवागियमित्यतोऽपि किं न मुदन्दास्यति कीरगीरिव ॥ १५ ॥

अथ स्ववाक्ये आदरं याचते भवितेति । हे नृप ! इदं वक्ष्यमाणं मदीरितं मद्वचः मद्वचनं विचारे विमर्शे चारु युक्तं न भविता न भविष्यति चेत्तदपि अविचारितरमणीयमपि श्रव्यं श्रोतव्यम् इयं खगवागित्यतोऽपि हेतोः कीरगीः शुकवागिव मुदं किं न दास्यति दास्यत्येव प्रयोजनान्तराभावेऽपि कौतुकादपि श्रोतव्यमित्यर्थः ददातेः लृट् ॥ १५ ॥

हे नृप ! आगे कहे जानेवाले मेरे कथनको आप अरमणीय और अविचारित समझकर सुननेमें अन्यमनस्क न होवें । अर्थात्—मेरे वाक्योंको आप अवश्य सुनें । जैसे—लोग सुग्गोंकी वाणी सुनकर मुदित होते हैं वैसे हो आप मेरे वचनों सुनें तो क्या आपको आनन्द न होगा—अवश्य होगा [ क्योंकि एक पक्षी मनुष्य भाषा बोले और लोग खुश न हों ऐसा होना असम्भव है । सभी खुश हो जाते हैं ] ॥ १५ ॥

स जयत्यरिसार्थसार्थकीकृतनामा किल भीमभूपतिः ।
यमवाप्य विदर्भभूः प्रभुं हसति द्यामपि शक्रभर्तृकाम् ॥ १६ ॥

अथ यद्वक्तव्यं तदाह स इति । अर्थेन अभिधेयेन सह वर्त्तत इति सार्थकम् तेन सहेति तुल्ययोग इति बहुव्रीहिः वोपसर्जनस्येति सहशब्दस्य विकल्पात् सभावः शेषाद्विभाषेति कप् समासान्तः ततश्च्विरभूततद्भावे अरिसार्थेषु शत्रुसङ्घेषु सार्थकीकृतं नाम भीम इत्याख्या येन स तथोक्तः च प्रसिद्धः बिभ्यत्यस्मादिति भीमः भियो म इत्यपादानार्थे निपातनान्मप्रत्यय औणादिकः भीम इति भूपतिः नृपः जयति किल

सर्व्वोत्कर्षेण वर्त्तते खलु विदर्भभूर्विदर्भदेशः यं भूपतिं प्रभुं भर्त्तारमवाप्य शक्रो भर्त्ता यस्यास्तां शक्रभर्तृकां नद्यूतश्चेति कपि द्यान्दिवमपि हसति किमुतान्यभर्तृकदेशानित्यर्थः स्त्रियो हि भर्त्तुरुत्कर्षाद्धासं कुर्वन्तीति भावः अत्र विदर्भभुवोऽपि द्युहासासम्बन्धेऽपि सम्बन्धोक्तेरतिशयोक्तिः ॥ १६ ॥

अब कथनको प्रारम्भ करता है—

शत्रुसंघोंमें अपने नामको सार्थक करनेवाले प्रसिद्ध भीम नामक महाप्रतापी भूपति विदभ देशमें रहते हैं, जिनको स्वामीरूपमें प्राप्तकर विदर्भदेशकी राजधानी विदर्भनगरी, इन्द्र से परिपालित इन्द्रपतिवाली अमरावती पर हंसती है। विदर्भ नगरी, अमरावती—स्वर्गकी देवनगरीसे भी उत्तम है ॥ १६ ॥

दमनादमनाक् प्रसेदुषस्तनयां तथ्यगिरस्तपोधनात् ।
वरमाप सदिष्टपिष्टपत्रितयानन्यसदृग्गुणोदयाम् ॥ १७ ॥

दमनादिति । स भीमभूपतिरमनागल्पं प्रसेदुषो निजोपासनया प्रसन्नात् भाषायां सदवसश्रुव इति सदेर्लिटः क्वसादेशः दमनाद्दमनाख्यात् तथ्यगिरः अमोघवचनात् तपोधनादृषेः दिष्टानां कालानां विष्टपानां लोकानाञ्च त्रितययोरनन्यसदृशीं गुणोदयां कालत्रये लोकत्रये चानन्यसाधारणगुणप्रकर्षां तनयां दुहितरं वरमाप वरत्वेन लब्धवानित्यर्थः देवादृते वरः श्रेष्ठे त्रिषु क्लीबे मनाक्प्रिय इत्यमरः ॥ १७ ॥

उन भीम नृपतिने प्रबल तपसे प्रसन्न दमन नामक अमोघ वचन कहने वाले महर्षिसे यह वरदान प्राप्त किया कि, उनको एक कन्या होगी जो तीनों लोकों तथा तीनों कालों—भूत, वर्त्तमान, भविष्यत्—में अनन्य साधारण गुण कीर्तिवाली होगी। अर्थात्—उस कन्याके समान तीनों लोकों तथा तीनों कालोंमें कोई कन्या न होगी ॥ १७ ॥

भुवनत्रयसुभ्रुवामसौ दमयन्ती कमनीयतामदम् ।
उदियाय यतस्तनुश्रिया दमयन्तीति ततोऽभिधां दधौ ॥ १८ ॥

अथास्या नामधेयं व्युत्पादयन्नेवाह भुवनत्रयेति । असौ वरप्रसादलब्धा तनया कर्त्री तनुश्रिया निजशरीरसौन्दर्य्येण करणेन भुवनत्रयसुभ्रुवां त्रैलोक्यसुन्दरीणां कमनीयतामदं सौदर्य्यगर्वं दमयन्ती अस्तं गमयन्ती दमेर्ण्यन्तान्न पादमित्यादिना कर्त्रभिप्राय आत्मनेपदापवादः परस्मैपदप्रतिषेधेऽप्यकर्त्रभिप्रायविवक्षायां परस्मैपदे लटः शत्रादेशः, उदियाय उदिता इणो लिट् ततस्तस्मादेव निमित्ताद्दमयन्तीत्यभिधामाख्यां दधे दधातेर्लिट् ॥ १८ ॥

उक्त कन्याकी उत्पत्तिके साथ उत्पन्न, उसकी देह शोभाके प्रादुर्भावसे तीनों लोकोंकी सुन्दरियोंकी शोभाका दमन हो गया है। अतः उसका नाम दमयन्ती ही रखा गया है—क्योंकि वह तीनों लोकोंकी सुन्दरियोंकी शोभाका दमन करनेवाली है ॥ १८ ॥



श्रियमेव परं धराधिपाद्गुणसिन्धोरुदितामवेहि ताम् ।

व्यवधावपि वा विधोः कलां मृडचूडानिलयां न वेद कः ॥ १६ ॥

अथैकविंशतिश्लोकैश्चिकुरादारभ्य दमयन्तीं वर्णयति श्रियमिति । हे नृप ! वा दमयन्तीं गुणसिन्धोः गुणसागराद्धराधिपाद्भीमनरेन्द्रादुदितामुत्पन्नां श्रियं साक्षाल्लक्ष्मीमेव परं ध्रुवमवेहि जानीहि अवपूर्व्वादिणी लाटि सेर्हिरिति ह्यादेशे ङित्त्वान्न सार्वधातुकगुणः संहितायामाद्गुणः अत्र केवलावपूर्व्वस्य इणो ज्ञानार्थत्वादाङ् प्रश्लेतदलाभात्, प्रश्लेपेऽप्योमाङोश्चेति पररूपमिति केषाञ्चित्प्रक्रियोपन्यासो वृथा प्रत्याल्यागः अवैहीति वृद्धिरवद्येति वामनसूत्रमप्यनाङ् प्रश्लेष एव भ्रान्तिप्राप्तवृद्धिप्रतिषेपरं गुण एव युक्तः इति व्याख्यानादन्यथा ओमाङोश्चेति पररूपमेव युक्तमित्युक्तइति, न च देशव्यवधानान्न श्रीरेवेति वाच्यमित्याह व्यवधौ व्यवधाने सत्यपि उपर्गे घोः किरिति किप्रत्ययः मृगचूडानिलयां हरशिखाश्रयां कलां विधोरिन्दोरेव कः को वा न वेद सर्व्वोऽपि वेदैवेत्यर्थः विदो लटो वेति वैकल्पिको णलादेशः यथा हररोगतापि कला चन्द्रकलैव तथा भीमभवनोदिताप्येषा श्रीरेवेति सौन्दर्यातिशयोक्ति अत्र श्रीकलयोः नृपमृडौ वाक्यद्वये विम्बप्रतिविम्बभावेन सामान्यधर्म्मवत्तया निर्दिष्टाविति दृष्टान्तालङ्कारः यत्र वाक्यद्वये विम्बप्रतिविम्बतयोच्यते । सामान्यधर्म काव्यज्ञैः स दृष्टान्तो निगद्यत ॥ इति लक्षणात् ॥ १९ ॥

हे नृप ! उस दमयन्तीको आप गुणोंके समुद्र महाराज भीमसे उत्पन्न साक्षात् लक्ष्मीके सदृश जानिये । जैसे—शिवजीके भालपर सुशोभित चन्द्रकलाको चन्द्रकला ही कहते हैं सूर्यकला नहीं कहते हैं । तद्वत् वह दमयन्ती भी विष्णुसे दूर होने पर भी लक्ष्मी ही है।

चिकुरप्रकरा जयन्ति ते विदुषी मूर्द्धनि सा विभर्त्ति यान् ।
पशुनाप्यपुरस्कृतेन तत्तुलनामिच्छतु चामरेण कः ॥ २० ॥

चिकुरप्रकरा इति । चिकुरप्रकराः केशसमूहाः जयन्ति सर्व्वोत्कर्षेण वर्त्तयान् वेत्तीति विदुषी विशेषज्ञा विदेः शतुर्वसुः उगितश्चेति ङीप् वसोः सम्प्रसासा दमयन्ती मूर्द्धनि विभर्त्ति विद्वद्गृह एव सर्वस्याप्युत्कर्षहेतुरिति भावः अतः पशुना तिरश्चा चमरीमृगेणाप्यपुरस्कृतेनानादृतेन चामरेण चमरीपुच्छेन सह तुलनान्तेषां चिकुराणां समीकरणञ्च इच्छतु न कोऽपीत्यर्थः सम्भावनायां लोट्, तुलनानिषेधस्यापुरस्कृतपदार्थहेतुकत्वात्पदार्थहेतुकं काव्यलिङ्गम् हेतोर्वाक्यपदार्थता काव्यलिङ्गमुदाहृतमिति लक्षणात् ॥ २० ॥

हे नृप ! वे केशकलाप धन्य हैं जिन्हें दमयन्ती अपने शिर पर धारण करती है। केशोंकी उपमा चमरी गायकी ( पूँछ ) चामरसे कोई भी देनेकी इच्छा करता है क्या ? कभी नहीं करता है ॥ २० ॥

स्वदृशोर्जनयन्ति सान्त्वनां खुरकण्डूयनकैतवान्मृगाः ।

जितयोरुदयत्प्रमीलयोस्तदखर्वेक्षणशोभया भयात् ॥ २१ ॥

स्वदृशोरिति । मृगाः हरिणास्तस्या दमयन्त्या अखर्व्वयोरायतयोरीक्षणयोरक्ष्णोः शोभया कर्त्र्या जितयोरत एव भयादुदयत्प्रमीलयोरुत्पद्यमाननिमीलनयोः स्वदृशोर्निजनयनयोः खुरैः शफैः शफं क्लीबे खुरः पुमानित्यमरः, कण्डूयनस्य कर्षणस्य कैतवाच्छलात्सान्त्वनां जनयन्ति लालनां कुर्व्वन्ति यथा लोके परपराजिता निमीलिताक्षाः स्वजनैर्भयनिवृत्तये करतलास्फालनादिना परिसान्त्व्यन्ते तद्वदिति भावः । अत्र कैतवशब्देन कण्डूयनमपह्नुत्य सान्त्वनारोपादपह्नवभेदः ॥ २१ ॥

हे नृप ! मृगगण उस दमयन्तीके विशाल नेत्रोंकी शोभासे पराजित होकर अपने नेत्रों को भयसे खोलते बन्द करते हुए अपने खुरोंसे नेत्रोंको खुजलानेके मिससे दीखते हैं अर्थात् मृगगण उसके विशाल नेत्रोंसे तिरस्कृत हो गये हैं अतः अपनी आंखोंको खुरोंसे खुजाते हुए दीखते हैं ॥ २१ ॥

अपि लोकयुगं दृशावपि श्रुतदृष्टा रमणीगुणा अपि ।
श्रुतिगामितया दमस्वसुर्व्यतिभाते सुतरां धरापते ॥ २२ ॥

अपीति । हे धरापते ! दमो नाम भीमस्यैवात्मजस्तस्य स्वसुर्दमयन्त्याः लोकयुगं मातापितृकुलयुगं श्रुतिगामितया वेदप्रसिद्धतया सुतरां व्यतिभाते परस्परोत्कर्षेण भातः तथा दृशौ नेत्रे अपि श्रुतिगामितया कर्णान्तविश्रान्ततया व्यतिभाते परस्परोत्कर्षेण भातस्तथा श्रुताः श्रुतिप्रसिद्धाः ते च ते दृष्टाः लोकप्रसिद्धाश्च विशेषणयोरपि विशेषणविशेष्यभावविवक्षायां विशेषणसमासः ते रमणीगुणाः स्त्रीधर्म्मा अपि श्रुतिगामितया जनैः श्रूयमाणतया श्रुतिः श्रोत्रे तथाम्नाये वार्त्तायां श्रोत्रकर्म्मणीति विश्वः । सुतरां व्यतिभाते व्यतिहारेण भान्ति आत्मनेपदेष्वनत इति झस्यादादेशः सर्व्वत्र कर्त्तरि कर्मव्यतिहार इत्यात्मनेपदम् अदादित्वाच्छपो लुक् सर्व्वत्र टेरेत्वम् । अत्र लोकयुगादीनान्त्रयाणामपि प्रकृतत्वात् केवलप्रकृतविषयतुल्ययोगिताभेदः प्रस्तुताप्रस्तुतानाञ्च केवलं तुल्यधर्म्मतः । औपम्यं गम्यते यत्र सा मता तुल्ययोगितेति लक्षणात् ॥ २२ ॥

हे धरापते ! महाराज भीमके पुत्रकी बहिन दमयन्तीके मातृ–पितृकुल वेद प्रसिद्ध होनेके कारण अतिश्लाघ्य हैं । उसके दोनों नेत्र विपुल होनेसे कानों तक विस्तृत हैं तथा उसके गुणोंकी प्रशंसा वेदशास्त्र धर्मानुकूल स्त्रीलक्षणोंसे परिपूर्ण होनेसे, कर्णपरम्परासे लोकमें प्रसिद्ध हैं—उसमें रमणीय गुण हैं ॥ २२ ॥

नलिनं मलिनं विवृण्वती पृषतीमस्पृशती तदीक्षणे ।
अपि खञ्जमञ्जनाञ्चिते विदधाते रुचिगर्वदुर्विधम् ॥ २३ ॥

नलिनमिति । नलिनं पद्मं मलिनमचारु विवृण्वती कुर्वाणे पृषतीं मृगीमस्पृशती असमानत्वात् दूरादेव परिहार इत्यर्थः तदीक्षणे तल्लोचने अञ्जनाञ्चिते कज्जलपरिष्कृते सती खञ्जनं खञ्जरीटाख्यं पक्षिविशेषं खञ्जरीटस्तु खञ्जनः इत्यमरः । 
तमपि रुचिगर्वदुर्विधं चारुत्वगर्वनिःस्वं विदधाते कुर्वाते सर्वथाप्यनुपमेये इत्यर्थः

निःस्वस्तु दुर्विधो दीनो दरिद्रो दुर्गतोऽपि स इत्यमरः। ईक्षणयोर्नलिनादि नीकरणाद्यसम्बन्धे सम्बन्धोक्तेरतिशयोक्तिः तया चोपमा व्यज्यत इत्यलङ्कारेण ङ्कारध्वनिः ॥ २३ ॥

हे नृप ! अञ्जन लगे हुए विशाल नेत्रोंसे उस दमयन्तीने कमलोंको तिरस्कृत कर तथा मृगीगणोंकी आँखोंको उपहासित करके खञ्जन नामक पक्षियोंकी कान्तिके गर्वको कर दिया । अर्थात्—उसकी अञ्जन लगी विस्तीर्ण आँखोंके सामने कमल और हिरणि आँखें एवं खञ्जनकी शोभा कुछ नहीं है ॥ २३ ॥

अधरं खलु बिम्बनामकं फलमाभ्यामिति भव्यमन्वयम् ।
लभतेऽधरबिम्बमित्यदः पदमस्या रदनच्छदे वदत् ॥ २४ ॥

अधरमिति । अधरबिम्बमित्यदः पदम् अधरं बिम्बमिवेत्युपमितसमासाश्रय स्त्रीणामधरेषु यत्पदं प्रयुज्यते तदित्यर्थः अस्याः दमयन्त्याः रदनच्छदस्य ओष्ठमधि धत् तदभिधानाय प्रयुक्तं सदित्यर्थः बिम्बनामकं फलं बिम्बमस्मादमयन्तीरदन दादधरं किलापकृष्टं खल्विति अधरशब्दस्यापकृष्टार्थत्वे अधरं बिम्बं यस्मात्तदिति व्रीहिसमासे च सति भव्यमबाधितसन्वयं वृत्तिपदार्थसंसर्गलक्षणं लभते अन समर्थसमासाश्रयणे समर्थः पदविधिरिति समर्थपरिभाषा भज्येत तर्हि नोक्त स्यादिति भावः । अत्र दमयन्तीदन्तच्छदस्य बिम्बाधरीकरणासम्बन्धेऽपि सम्बन्धे रतिशयोक्तिः पूर्ववत् ध्वनिश्च ॥ २४ ॥

हे नृप ! उस दमयन्तीके रदच्छद (अधरोष्ठों) ने बिम्ब फलको भी तिरस्कृत कर है—अर्थात् उसके अधर बिम्बफल (कुँदरू) से भी अधिक लाल तथा शोभनीय हैं ॥ २४

हृतसारमिवेन्दुमण्डलं दमयन्तीवदनाय वेधसा ।
कृतमध्यबिलं विलोक्यते धृतगम्भीरखनीखनीलिम ॥ २५ ॥

हृतसारमिति। इन्दुमण्डलं दमयन्तीवदनाय तन्निर्माणायेत्यर्थः क्रियार्थोपपद चतुर्थी वेधसा हृतसारमुद्धृतमध्याङ्गमिव कुतः कृतमध्यबिलं विहितमध्यरन्ध्रमत धृतो गम्भीरखनीखस्य निम्नमध्यरन्ध्राकाशस्य नीलिमा नैल्यन्तथा विलोक्यते खियामाकरः स्यादित्यमरः कृदिकारादक्तिनो इति ङीप् अत्र कलङ्कापह्नवेन खनीि रोपादपह्नवभेदः स च कृतमध्यबिलमित्येतत्पदार्थहेतुककाव्यलिङ्गानुप्राणितः तद चेयं हृतसारमित्युत्प्रेक्षेति सङ्करः तथा चोपमा व्यज्यत इति पूर्ववत् ध्वनिः ॥ २५

हे नृप ! ब्रह्मदेवने दमयन्तीके मुख सृजनार्थ चन्द्रमण्डलसे उसके सार (तत्त्व निकाला, इसीसे चन्द्रमण्डलमें बिल हो गया है। जिस बिलसे ऊपरका नीला दिखाता है अर्थात्—चन्द्रमण्डलमें जो कालिमा है वह नीले आकाशकी छाया हैं ॥ २५

धृतलाञ्छनगोमयाञ्चनं विधुमालेपनपाण्डरं विधिः ।
भ्रमयत्युचितं विदर्भजाननीराजनवर्द्धमानकम् ॥ २६ ॥

धृतेति। विधिर्ब्रह्मा धृतं लाञ्छनमङ्क एव गोमयाञ्जनं मध्यस्थितगोमय संश्लेषणम् एनम् आलेपनपाण्डरं निजकान्तिसुधाधवलितमित्यर्थः विधुं चन्द्रमेव विदर्भजाननस्य वैदर्भीमुखस्य नीराजनवर्द्धमानकं नीराजनशरावम् शरावो वर्द्धमानक इत्यमरः। किरणदीपकलिकायुक्तमिति भावः भ्रमयत्युचितं लोकोत्तरत्वात् इति भावः एवं नीराजयन्तीति देशाचारः। अत्र विधुतल्लाञ्छनादेर्नीराजनशरावगोमयादित्वेन रूपणात्सावयवरूपकम् ॥ २६ ॥

हे नृप! उस दमयन्तीके मुखकी आरती उतारनेके लिए ब्रह्माजीने चन्द्रको नीराजनपात्र रचा है। अर्थात्—जैसे लोग आरती करनेवाले पात्रको, ऐपन (आटेको घोलकर बनाया जाता है) से लेपकर तथा उसकी गोबरसे पूजा करके पश्चात् आरती करते हैं तद्वत् ब्रह्मा चन्द्ररूपी आरती को जिसमें सफेद ऐपन किरण तुल्य तथा गोबरके सदृश कलंक लगा है उस दमयन्तीकी आरती करनेके निमित्त रचा है ॥ २६ ॥

सुषमाविषये परीक्षणे निखिलं पद्मभाजि तन्मुखात्।
अधुनापि न भङ्गलक्षणं सलिलोन्मज्जनमुज्झति स्फुटम् ॥ २७ ॥

सुषमेति। सुषमा परमा शोभा सैव विषयः यस्मिन् परीक्षणे जलदिव्यशोधने कृते निखिलं पद्मं पद्मजातं तन्मुखादपादानात् भङ्गावधित्वादभाजि अभञ्जि स्वयमेव भग्नमभूदित्यर्थः स्फुटं कर्त्तरि लुङ् भञ्जेश्च चिणीति वैभाषिको नकारलोपः अतएवाधुनापि भङ्गलक्षणपराजयचिह्नं सलिलादुन्मज्जनं क्षणमपि नोज्झति न जहाति जलदिव्योन्मज्जनस्य पराजयलिङ्गत्वस्मरणादिति भावः। उन्मज्जनक्रियानिमित्तेयं भङ्गोत्प्रेक्षा ॥ २७ ॥

हे नृप! उस दमयन्तीके मुखके साथ परमा शोभाकी परीक्षामें सभी कमल पराजित हो गये। अतः अभी भी वे कमल पराजयचिह्नको धारण किये हुए हैं इसीसे क्षणमात्रके लिए भी जलमज्जन नहीं त्यागते हैं—रात दिन जलमें रहते हैं ॥ २७ ॥

धनुषी रतिपञ्चबाणयोरुदिते विश्वजयाय तद्भ्रुवौ।
नलिके न तदुच्चनासिके त्वयि नालीकविमुक्तिकामयोः ॥ २८ ॥

धनुषी इति। तद्भ्रुवौ विश्वजयायोदिते उत्पन्ने रतिपञ्चबाणयोर्धनुषी नूनमित्यादिव्यञ्जकाप्रयोगाद्गम्योत्प्रेक्षा, किञ्च तस्याः दमयन्त्याः उच्चनासिके उन्नतनासापुटे त्वयि नालीकानां द्रोणिचापशराणां विमुक्तिं कामयेते इति तथोक्तयोः तयोः शिलिकामिभच्याचरिभ्यो ण इति णप्रत्ययः नालीकं पद्मखण्डे स्त्री नालीकः शरशल्ययोरिति विश्वः नलिके न द्रोणिचापे न किमिति काकुः पूर्ववदुत्प्रेक्षा ॥ २८ ॥

हे नृप! संसारको जीतनेके लिए उस दमयन्तीकी धनुषकार भौंहें क्या रति और कामदेवके धनुष नहीं हैं—अवश्य हैं। हे राजन्! उस दमयन्तीकी नलिका समान उच्च नासिका, उस समय नलीका कार्य न करेगी जिस समय रति और कामदेव आपपर छोटे बाण मारनेकी

इच्छा करेंगे—अवश्य करेगी । अर्थात्—दमयन्तीकी भौहें धनुपाकार हैं तथा उसकी
अतिसुन्दर है ॥ २८ ॥

**सदृशी तव शूर ! सा परं जलदुर्गस्थमृणालजिद्भुजा ।**
**अपि मित्रजुषां सरोरुहां गृहयालुः करलीलया श्रियः ॥ २९ ॥**

सदृशीति । हे शूर ! जलदुर्गस्थानि मृणालानि जयत इति तज्जितौ भुजौ
सा मित्रजुषामर्कसेविनां सुहृत्सलिलानाञ्च सहायसम्पन्नानामपीत्यर्थः मित्रं
मित्रोऽर्क इति विश्वः । सरोरुहं श्रियः शोभा सम्पदश्च न लोकेत्यादिना षष्ठी
करलीलया भुजविलासेन भुजव्यापारेण बलिग्रहणेन च बलिहस्तांशवः कराः ली
लासक्रिययोरिति चामरः, गृहयालुः ग्रहीता ग्रहग्रहण इति धातोश्चौरादिकात्
गृहीत्यादिना आलुच् प्रत्ययः अयामन्तेत्यादिना णेरयादेशः सा दमयन्ती तव प
न्तं सदृशी अनुरूपेत्युपमालङ्कारः शूरस्य शूरैव भार्य्या भवितुमर्हतीति भावः ॥

हे शूर ! उस दमयन्तीने जलरूपी प्रासादमें रहनेवाले कमलतन्तुओंको
भुजाओंसे पराजित कर दिया है तथा सूर्यको चढ़ाये जाने वाले कमलोंकी शोभाको
लीलासे ले लिया है— अर्थात् दमयन्तकी बाहें कमलतन्तुओंसे भी अच्छी हैं तथा हा
कमलश्रीसे भी सुन्दर है । अतः वह आपके योग्य है क्योंकि शूरकी पत्नी शूर ही होती

**वयसी शिशुतातदुत्तरे सुदृशि स्वाभिविधिं विधित्सुनी ।**
**विधिनापि न रोमरेखया कृतसीम्नी प्रविभज्य रज्यतः ॥ ३० ॥**

वयसी इति । सुदृशि दमयन्त्यां स्वाभिविधिं स्वव्याप्तिं विधित्सुनी विधा
च्छती अहमहमिकया स्वयमेवाक्रमितुमिच्छती इत्यर्थः शिशुतातदुत्तरे बाल्य
वयसी विधिना सीमाभिज्ञेन रोमरेखया सीमाचिह्नेन प्रविभज्य रोमराजेः प्रागेव
शैशवेन स्थातव्यन्ततः परं यौवनेनेति कालतो विभागं कृत्वा कृतसीम्नि कृत
अपि विभाषा ङिश्योरित्यलोपः न रज्यतः न सन्तुष्यतः रम्यवस्तु दुस्त्यजमिति
एतेन वयःसन्धिरुक्तः । अत्र प्रस्तुतवयोविशेषसाम्यादप्रस्तुतविवादप्रतीतेः स
क्तिरलङ्कारः ॥ ३० ॥

हे नृप ! अधुना दमयन्ती को शैशवावस्थाके आगे आनेवाली युवावस्था तथा शैश
दोनोंने घेर रखा है ब्रह्माने भी अभी उसमें शैशवावस्थाको अतिक्रमण करनेवाली रो
नहीं रची है जिससे उसकी अवस्था परिज्ञात की जाय कि वह किस अवस्थामें है । अ
दमयन्ती अभी शैशवावस्थाकी समाप्ति और युवावस्थाकी अभिसन्धिमें है ॥ ३० ॥

**अपि तद्वपुषि प्रसर्पतोर्गमिते कान्तिझरैरगाधताम् ।**
**स्मरयौवनयोः खलु द्वयोः प्लवकुम्भौ भवतः कुचावुभौ ॥ ३१ ॥**

सम्प्रति मौनमेवाश्रित्याह अपीति । कान्तिझरैर्लावण्यप्रवाहैरगाधतां दुरव
गमिते तद्वपुषि दमयन्तीशरीरे प्रसर्पतोस्तरतोः स्मरयौवनयोर्द्वयोरपि उभौ

वस्योन्मज्जनस्य कुम्भौ प्लवनार्थं कुम्भावित्यर्थः प्रकृतिविकारभावाभावादश्वघासा-वत्तादर्थ्ये षष्ठीसमासः लोके तरद्भिः अनिमज्जनाय कुम्भादिकमवलम्ब्यत इति सिद्धं भवतः खलु । अत्र कुचयोः स्मरयौवनप्लवनकुम्भत्वोत्प्रेक्षया तयोरौत्कट्यं कुच-श्रातिवृद्धिर्व्यज्यत इत्यलङ्कारेण वस्तुध्वनिः ॥ ३१ ॥

हे नृप ! उस दमयन्तीके लावण्यरूप। शरीरसागरमें बहनेवाले कामदेव और यौवन नोंको उसके शरीरमे उत्पन्न दो कलशके समान उरोज मिल गये जिनसे वे लोग उस लावण्य-मुद्रको पार करनेकी इच्छा कर रहे हैं । अर्थात्—दमयन्तीके वक्षःस्थलमें दो कलशोंके समान कुच हैं तथा कामदेव और युवावस्थासे परिव्याप्त उसका शरीर हो चुका है ॥ ३१ ॥

**कलसे निजहेतुदण्डजः किमु चक्रभ्रमकारितागुणः ।**
**स तदुच्चकुचौ भवन् प्रभाझरचक्रभ्रममातनोति यत् ॥ ३२ ॥**

कलश इति । निजहेतुदण्डजः स्वनिमित्तकारणजन्यः चक्रभ्रमकारिता कुलालभा-ड्भ्रमणजनकत्वं सैव गुणो धर्मो रूपादिश्च, गुणः प्रधाने रूपादावित्यमरः । सः लसे किमु दण्डकार्य्ये कलसे संक्रान्तः किमु इत्यर्थः, कुतः यद्यस्मात् स कलसः स्या दमयन्त्या उच्चकुचौ भवन् तत्कुचात्मना परिणतः सन् प्रभाझरे लावण्य-वाहे चक्रभ्रमं चक्रवाकभ्रान्तिं कुलालदण्डभ्रमणं चातनोति, चक्रो गणे चक्रवाके क्रं सैन्यरथाङ्गयोः, ग्रामजाले कुलालस्य भाण्डे राष्ट्रास्त्रयोरपि इत्युभयत्रापि विश्वः । त्र समवायिकारणगुणा रूपादयः कार्य्ये संक्रामन्ति न निमित्तगुणा इति तार्किका-विधां समये स्थिते गुण इति चक्रभ्रम इति चोभयत्रापि वाच्यप्रतीयमानयोरभेदाध्य-त्यसाय एव "स तदुच्चकुचौ भवन्नि"ति कुचकलशयोरभेदातिशयोक्त्युत्थापितझर-गेवक्रभ्रमात्मकक्रियानिमित्ता कुचात्मनि कलशे कार्य्ये चक्रभ्रमकारितालक्षणनिमित्त-तमरणगुणसंक्रमलक्षणेनोत्प्रेक्षेति सङ्क्षेपः तार्किकसमये विरोधात् विरोधाभासोऽलङ्कार ति कैश्चिदुक्तम् तदेतदत्यन्ताश्रुतचरमलङ्कारपारदृश्वानः शृण्वन्तु ॥ ३२ ॥

हे नृप ! उस दमयन्तीके उच्च स्तनोंको देखनेसे यह भ्रान्ति होने लगती है कि वे चक्र-क पक्षी हैं अथवा लावण्य प्रवाहमें घूमनेवाले कुलाल दण्डके निर्मित कलश हैं । अर्थात्—मयन्तीके विशाल स्तन घड़ोंके समान तथा चक्रवाक पक्षीके समान हैं और उन स्तनोंकी रों ओर जो कान्ति फैल रही है उसमे यह ज्ञात नहीं होता है । कि वे स्तन हैं वा कान्ति-जमें घूमनेवाला प्रभारथ है । इस श्लोकका अर्थ ऐसा भी है कि – कुलाल अपने दण्डसे से मट्टीका पात्र, चक्रपर मिट्टी धर कर, चक्रको घुमाकर रचता है फिर पात्र बन जानेपर सा ज्ञात होता है वह पात्र दण्डके कार्यमें आगया अर्थात्—दण्ड पात्रका कारण न होकर त्र दण्डका कारण है ऐसा प्रतीत होने लगता हैं ॥ ३२ ॥

**भजते खलु षण्मुखं शिखी चिकुरैर्निर्मितबर्हगर्हणः ।**



**अपि जम्भरिपुं दमस्वसुर्जितकुम्भः कुचशोभयेभराट् ॥ ३३ ॥**

भजत इति । दमस्वसुर्दमयन्त्याश्चिकुरैर्निर्म्मित वर्हगर्हणः कृतपिच्छनिन्दः जितवर्हं इत्यर्थः शिखी मयूरः षण्मुखं कार्त्तिकेयं भजते खलु तथा कुचशोभया जितकुम्भ इभराडैरावतोऽपि जम्भरिपुमिन्द्रं भजते परपरिभूताः प्राणत्राणाय प्रवलमाश्रयन्ते इति प्रसिद्धम् अत्र शिख्यैरावतयोः षण्मुखजम्भारिभजनस्य जितवर्हत्वजितकुम्भत्वपदार्थहेतुकत्वात् तद्धेतुके काव्यलिङ्गे तदसम्बन्धेऽपि सम्बन्धाभिधानादतिशयोक्तिश्च ॥३३॥

हे नृप ! उस दमयन्तीके केशकलापसे अपने पुच्छको हीन समझ कर मोर स्वामी कार्तिकेयकी सेवामें तथा गजराज ऐरावत उसके कुचोंसे अपने कुम्भोंको हीन समझकर, * इन्द्र की परिचर्यामें चला गया। अर्थात्—दमयन्तीके केशकलाप मोर पंखोंसे अच्छे हैं और उसके कुच ऐरावतके भी कुम्भोंसे अच्छे हैं—साधारण हाथियोंकी बात ही क्या है ॥ ३३ ॥

**उदरं नतमध्यपृष्ठतास्फुरदङ्गुष्ठपदेन मुष्टिना ।**
**चतुरङ्गुलिमध्यनिर्गतत्रिबलिभ्राजि कृतं दमस्वसुः ॥ ३४ ॥**

उदरमिति । दमस्वसुरुदरं नतमध्यं निम्नमध्यप्रदेशं पृष्ठं यस्योदरस्य तस्य भावस्तत्ता तया स्फुरत् दृढग्रहणात् पृष्ठफलके स्फुटीभवदङ्गुष्ठपदमङ्गुष्ठन्यासस्थानं यस्य तेन मुष्टिना करणेन चतसृणामङ्गुलीनां समाहारश्चतुरङ्गुलि तद्धितेत्यादिना समाहारे द्विगुरेकवचननपुंसकत्वे तस्य मध्येभ्योऽन्तरालेभ्यो निर्गतं यत्त्रिवलि पूर्ववत् समासादिः कार्य्यः, यत्तूक्तं वामनेन त्रिवलिशब्दः संज्ञा चेदिति सूत्रेण सप्तर्षय इत्यादिवद्दिक्संख्ये संज्ञायामिति संज्ञायां द्विगुरिति तदपि चेत्करणसामर्थ्यात् त्रिवलय इति बहुवचनप्रयोगदर्शने स्थितं गतिमात्रं न सार्वत्रिकमिति प्रतीमः तेन भ्राजत इति तद्भ्राजि वलित्रयशोभि कृतमित्युत्प्रेक्षा कौतुकिनेति शेषः मुष्टिग्राह्यमध्येयमित्यर्थः मुष्टिग्रहणादङ्गुष्ठनोदनात्पृष्ठमध्ये नम्रता उदरे च चतुरङ्गुलिनोदनाद्वलित्रयाविर्भावश्चेत्युत्प्रेक्षते ॥ ३४ ॥

हे नृप ! जब ब्रह्माजी दमयन्तीको रचने लगे तो उन्होंने अपनी मुट्ठीमें, दमयन्तीका उदरस्थल सहित पृष्ठभागको पकड़ा । अतः दमयन्तीके पेटपर जो त्रिवली है वहाँ ब्रह्माके चारों अंगुलीमध्यकी तीन रेखाएं हैं । अर्थात्—दमयन्तीका पेट तथा पृष्ठभाग पतला है तथा अंगूठे सहित मुट्ठीमें आने वाला पृष्ठभाग और उदर भाग क्रमसे है । याने पृष्ठभाग अंगूठे के दबावमें आजाने लायक तथा चारों अंगुलीके दबावमें आने लायक उदर भाग है ॥ ३४ ॥

**उदरं परिमाति मुष्टिना कुतुकी कोऽपि दमस्वसुः किमु ।**
**धृततच्चतुरङ्गुलीव यद्वलिभिर्भाति सहेमकाञ्चिभिः ॥ ३५ ॥**

उदरमिति । कोऽपि कुतुकी दमस्वसुरुदरं मुष्टिना परिमाति किमु परिच्छिनत्ति किमित्युत्प्रेक्षा कुतः यद् यस्मात् सहेमकाञ्चिभिर्वलिभिर्हेमकाञ्च्या सह चतसृभिर्वलिभिरित्यर्थः एतस्याः कनकसावर्ण्यं सूचितं धृतं तस्य मातुश्चतुरङ्गुली अङ्गुलीचतुष्टयं



* जम्भनामक दैत्यको मारनेसे इन्द्रको जम्भरिपु कहते हैं।

येन तदिव भातीत्युत्प्रेक्षा अत्रोत्प्रेक्षयोर्हेतुहेतुमद्भूतयोरङ्गाङ्गिभावेन सजातीयः सङ्करः। पूर्वश्लोके वलीनां तिसृणां चतुरङ्गुलिमध्यनिर्गतत्वमुत्प्रेक्षितम्। इह तु तासामेव काञ्चीसहितानां चतुरङ्गुलित्वमुत्प्रेक्षत इति भेदः प्रेक्षितुरिति भावः ॥ ३५ ॥

हे नृप ! कोई कौतुको दमयन्तीको त्रिवली नापने लगा तो उसे भी उसकी त्रिवली चार अंगुलियोंके मध्यकी तीन रेखाके समान ही प्रतीत हुई। अर्थात् किसी कौतुकी व्यक्तिने दमयन्तीके उदरभागके निम्न प्रदेश पर स्थित सोनेकी पतली करधनीके सहित उसकी त्रिवली नापी तो उसके चारों अंगुलीमें उस दमयन्तीकी करधनी सहित त्रिवली हुई—याने तीन त्रिवलीकी रेखाएँ और चौथी करधनीकी रेखा चार अंगुलीके बराबर हुई। सुवर्णकी करधनी उसके अंगपर पड़नेसे रेखारूप प्रतीत होती है अर्थात्—वह सुवर्णके समान कान्तिवाली भी है॥३५॥

पृथुवर्तुलतन्नितम्बकृन्मिहिरस्यन्दनशिल्पशिक्षया ।
विधिरेकचक्रचारिणं किमु निर्मित्सति मान्मथं रथम् ॥ ३६ ॥

पृथ्विति। पृथु वर्त्तुलं च तस्याः नितम्बं करोतीति नितम्बकृन्नितम्बं कृतवान् विधिः ब्रह्मा मिहिरस्यन्दनशिल्पशिक्षया रविरथनिर्माणाभ्यासपाटवेन एककमेकाकि एकादाकिनिच्चासहाय इति चकारात् कप्रत्ययः। तेन चक्रेण चरतीति तच्चारिणं मान्मथं रथं निर्मित्सति किमु ? सूर्यस्येव मन्मथस्यापि एकचक्रं रथं निर्मातुमिच्छति किमु इत्युत्प्रेक्षा अन्यथा किमर्थमिदं नितम्बनिर्म्माणमिति भावः मातेः सन्नन्ताल्लट्। सनि मीमेत्यादिना ईसादेशः, सस्यार्द्धधातुक इति सकारस्य तकारः, अत्र लोपोभ्यासस्येत्यभ्यासलोपः ॥ ३६ ॥

हे नृप ! ब्रह्मदेवने उस दमयन्तीके नितम्ब विपुल तथा गोल आकारवाले बनाये हैं जिन्हें देखनेसे ऐसा आभास होता है कि वे ब्रह्मदेव, जिन्होंने एक चक्रवाला सूर्यका रथ बनाया हैं, अब कामदेवका एक चक्रवाला रथ बनाना चाहते हैं। अर्थात्—दमयन्तीके जघन विशाल तथा गोल हैं ॥ ३६ ॥

तरुमूरुयुगेण सुन्दरी किमु रम्भां परिणाहिना परम् ।
तरुणीमपि जिष्णुरेव तां धनदापत्यतपःफलस्तनीम् ॥ ३७ ॥

तरुमिति। सुन्दरी दमस्वसा परिणाहिना विपुलेन ऊरुयुगेण रम्भां रम्भां नाम तरुं परन्तरुमेव न लोकेत्यादिना षष्ठीप्रतिषेधः। जिष्णुः किमु किन्तु धनदापत्यस्य नलकूबरस्य तपसः फलस्तनीं फलभूतकुचां तां रम्भान्नाम तरुणीमपि जिष्णुरेव। रम्भाकदल्यप्सरसोरिति विश्वः। रम्भे इव रम्भाया इव चोरू यस्याः सा इत्युभयथा रम्भोरूरित्यर्थः ॥ ३७ ॥

हे नृप ! उस दमयन्तीकी जांघें केलेके खम्भोंको जीतनेवाली ज्ञात होती हैं तथा (उसकी जाँघें उस रम्भा नामक अप्सराकी जाँघोंकों भी जीतनेवाली ज्ञात होती हैं जिसके कुचोंके स्पर्शसे कुबेरके पुत्र नलकूबरको कठिन तपस्या करनी पड़ी थी। अर्थात्—उसकी जाँघें केलेके खम्भोंसे भी अधिक बृहद् तथा चिकनी हैं ॥ ३७ ॥

जलजे रविसेवयेव ये पदमेतत्पदतामवापतुः ।
ध्रुवमेत्य रुतः सहंसकी कुरुतस्ते विधिपत्रदम्पती ॥ ३८ ॥

जलजे इति । ये जलजे द्विपद्मे रविसेवया सूर्योपासनयेव एतस्याः पदतां चरणत्वमेव पदम्प्रतिष्ठामवापतुः ते जलजे कर्मभूते विधिपत्रदम्पती द्वन्द्वचारिणौ ब्रह्मवाहहंसौ एत्यागत्य रुतः रवात्कूजनादित्यर्थः । रौतेः सम्पदादित्वात् क्विपि तुगागमः । सहंसकी सकटकी सहंसकी च कुरुतः अभूततद्भावे च्विः । हंसकः पादकटक इत्यमरः । हंसपक्षे वैभाषिकः कप्रत्ययः । ध्रुवमित्युत्प्रेक्षायां पद्महंसयोरविनाभावात् कयोश्चिद् व्यपद्मयोस्तत्पदत्वमुत्प्रेक्ष्य दिव्यहंसयोरेव हंसकत्वञ्चोत्प्रेक्षते ॥ ३८ ॥

हे नृप ! पूर्वजन्ममें दो स्थल कमलोंके दम्पतीने सूर्योपासनाकी ततः सूर्यके प्रसादसे उन दोनों स्थलकमलोंने इस जन्ममें दमयन्तीके दो चरण होनेका सौभाग्य प्राप्त किया। यथाक्रम कमलिनी वाम चरण हुई तथा कमल दाहिना चरण हुआ । यह बात भूठ नहीं है क्योंकि—उस दमयन्तीके चरण कमलोंमें ब्रह्मदेवके वाहन दो हंसोंने-हंसदम्पतीने तो( चरणभूषण ) के रूपमें कुई-कुई ध्वनि करते हुए आश्रय लिया है । अर्थात्—दमयन्तीके चरण कमलोंके समान ही नहीं है अपितु विशेष स्थलके कमलोंके समान हैं (जहाँ कमल रहते है वहाँ हंस रहते हैं । जहाँ विशेष प्रकारके कमल रहते हैं वहाँ विशेष प्रकारके हंस रहते हैं जैसे—यहाँ ब्रह्माके वाहन हंस आये हैं ॥ ३८ ॥

श्रितपुण्यसरःसरित्कथं न समाधिक्षपिताखिलक्षपम् ।
जलजं गतिमेतु मञ्जुलां दमयन्तीपदनाम्नि जन्मनि ॥ ३९ ॥

श्रितेति । श्रिताः सेविताः पुण्याः सरःसरितः मानसादीनि सरांसि गङ्गाद्याः सरितश्च ये तत्समाधिना ध्यानेन निमीलनेन क्षपिताखिलक्षपं यापितसर्वरात्रं जलजं दमयन्तीपदमिति नाम यस्मिन् जन्मनि मञ्जुलाकृतिं रम्यगतिमुत्तमदशाञ्च गतिर्मार्गे दशायां चेति विश्वः । कथं नैतु एत्वेवेत्यर्थः । पदस्य गतिसाधनत्वात्तत्रापि दमयन्तीसम्बन्धाच्चोभयगतिलाभः । तथापि जन्मान्तरेऽपि सर्वथा तपः फलितमिति भावः । सम्भावनायां लोट् ॥ ३९ ॥

हे नृप ! वे कमल जिन्होंने अपनी पंखुरियोंको बन्द करके ध्यानावस्थित अवस्थामें गङ्गा प्रभृति पुण्य सरिताओंमें रातें व्यतीतकी अब वे दमयन्तीके चरणरूपमें होकर क्यों न आनन्दोपभोग करें । अर्थात्—दमयन्तीके चरण कमलोंके समान हैं । (दो कमलोंने रातमें अपनी कलीरूपी आँखें बन्दकर, समाधि दशामें, गङ्गा आदि नदीमें रातभर तप किया उस तपके प्रभावसे वे कमल दमयन्तीके चरण हो गये । अतः अब क्यों न वे कमल आनन्दित हों—तपस्याका फल दूसरे जन्ममें भी मिलता है—जैसे कमलोंको मिला ) ॥ ३९ ॥

सरसीः परिशीलितुं मया गमिकर्मीकृतनैकनीवृता ।
अतिथित्वमनायि सा दृशोः सदसत्संशयगोचरोदरी ॥ ४० ॥

अथ कथं त्वमेनां वेत्सीत्यत आह सरसीरिति । सरसीः सरांसि परिशीलितुं परिचेतुं तत्र विहर्त्तुमित्यर्थः । चुरादिणेरनित्यत्वादण्यन्तप्रयोगः । गमिर्गमनं शब्दपर-शब्देनार्थो गम्यते तस्य कर्मीकृताः कर्मकारकीकृताः नैके अनेके नञर्थस्य नशब्दस्य सुप्सुपेति समासः । नितरां वर्त्तन्ते जना येष्विति नीवृतः जनपदाः येन तेन क्रान्ता-नेकदेशेनेत्यर्थः । नहिवृतीत्यादिना दीर्घः । मया सदसद्वेति संशयगोचरः सन्देहास्पदं उदरं यस्याः सा कृशोदरीत्यर्थः । नासिकोदरेत्यादिना ङीप् । सा दमयन्ती दृशोरति-थित्वमनायि स्वविषयतां नीता दृष्टेत्यर्थः । नयतेः कर्मणि लुङ् ॥ ४० ॥

हे नृप ! मैं जलाशयोंके मार्गणमें अनेकों देशोंमें घूमा । परन्तु, दमयन्तीको छोड़कर मेरे आँखके सामने किसी भी अंगनाकी प्रतिमा न बसी । किं बहुना, यह सन्देहास्पद ज्ञात हुआ कि, दमयन्तीको उदर है या नहीं—अर्थात्—दमयन्ती कृशोदरी है ॥ ४० ॥

**अवधृत्य दिवोऽपि यौवतैर्न्न सहाधीतवतीमिमामहम् ।**
**कतमस्तु विधातुराशये पतिरस्या वसतीत्यचिन्तयम् ॥ ४१ ॥**

अवधृत्येति । अहमिमान्दमयन्तीं दिवः स्वर्गस्य सम्बन्धिभिर्यौवतैर्युवतिसमूहैरपि गार्भिणं यौवतं गण इत्यमरः । भिक्षादित्वात्समूहार्थे अण्प्रत्ययः तत्राप्यस्य युवतीति स्त्रीप्रत्ययान्तस्यैव प्रकृतित्वेन तद्ग्रहणात् तत्सामर्थ्यादेव भस्याढेतद्धित इति पुंवद्भाव इति वृत्तिकारः न सहाधीतवतीमसदृशीं ततोऽप्यधिकसुन्दरीमित्यर्थः । नञर्थस्य न शब्दस्य सुप्सुपेति समास इति वामनः। अवधृत्य निश्चित्य विधातुः ब्रह्मणः आशये हृदि अस्याः पतिः कतमो नु कतमो वा वसतीत्यचिन्तयम् तदैवेति शेषः ॥ ४१ ॥

हे नृप ! विचार करते हुए मैंने यह समझा कि, दमयन्ती स्वर्गकी अप्सराओंके समान नहीं हो सकती—क्योंकि इसकी सुन्दरता उनसे भी अधिक है । ततः मैं यह सोचने लगा कि, ब्रह्माने इसके पति होनेके लिए किस पुरुषको बनाने का विचार किया होगा—इसके बनाते समय । अर्थात्—यह स्वर्गांगनाओंसे भी सुंदर है तो इसके लिए ब्रह्माने किस पुरुष वा देवताको विवाहार्थ उत्पन्न किया है ॥ ४१ ॥

**अनुरूपमिमं निरूपयन्नथ सर्वेष्वपि पूर्वपक्षताम् ।**
**युवसु व्यपनेतुमक्षमस्त्वयि सिद्धान्तधियं न्यवेशयम् ॥ ४२ ॥**

अनुरूपमिति । अथेदानीमनुरूपं योग्यन्त्वां निरूपयन् तस्याः पतित्वेनालोच-यन् सर्वेष्वपि युवसु पूर्वपक्षतां दूष्यकोटित्वं व्यपनेतुमक्षमःसन् त्वयि सिद्धान्त-धियं न्यवेशयम् । त्वमेवास्याः पतिरिति निरचैषमित्यर्थः । अयमेव विधातुरप्याशय इति भावः ॥ ४२ ॥

हे नृप ! आपके स्वरूपको देखकर मैंने दृढ़ विचार किया कि, आपही उसके योग्य वर होने योग्य हैं तथा पहलेके देखे हुए सकल युवा पुरुष आपके समान उसके लिए अयोग्य प्रतीत होते हैं । अर्थात्—ब्रह्माने आपको ही उसके योग्य वर निखिल ब्रह्माण्डमें रचा है ॥ ४२ ॥

अनया तव रूपसीमया कृतसंस्कारविबोधनस्य मे ।
चिरमप्यवलोकिताद्य सा स्मृतिमारूढवती शुचिस्मिता ॥ ४३ ॥

अथ त्वद्रूपदर्शनमेव सम्प्रति तत्स्मारकमित्याह अनयेति । चिरमवलोकिता सा शुचिस्मिता सुन्दरी अद्याधुना हस्तेन निर्दिशन्नाह अनया तव रूपसीमया सौन्दर्य काष्ठया कृतसंस्कारविबोधनस्य उद्बुद्धसंस्कारस्य मे स्मृतिमारूढवती स्मृतिपथं सदृशदर्शनं स्मारकमित्यर्थः ॥ ४३ ॥

हे नृप ! आपके इस सुन्दर स्वरूपको देखनेसे मुझे उस दमयन्तीकी स्मृति हो रही है अर्थात्—हे नृप ! आपके सदृश ही उसकी सुन्दरता है जैसे दो समान वस्तुओंमेंसे एक देखनेसे दूसरीका स्मरण हो आता है, तद्वत्-आपको देखनेसे मुझे बहुत दिनों से पूर्वमें देखी हुई उस मृदु तथा स्वच्छ हास हंसनेवाली ( हंसमुखी ) दमयन्तीकी स्मृति हो आयी—उस प्रतिमा मेरी आँखोंके सामने मूर्तिमान हो गयी ॥ ४३ ॥

त्वयि वीर ! विराजते परं दमयन्तीकिलकिञ्चितं किल ।
तरुणीस्तन एव दीप्यते मणिहारावलिरामणीयकम् ॥ ४४ ॥

ततः किमत आह त्वयीत्यादि । हे वीर ! दमयन्त्याः किलकिञ्चितम् क्रोध श्रुहर्षभीत्यादेः सङ्करः किलकिञ्चितमित्युक्तलक्षणलक्षितशृङ्गारचेष्टितं त्वयि परन्तु त्वय्येव विराजते किल शोभते खलु । तथाहि मणिहारावलेर्मुक्ताहारपङ्क्तेः रामणीयकं रमणीयत्वं योपधाद्गुरूपोत्तमाद्वुञ् । तरुणीस्तन एव दीप्यते नान्यत्रेत्यर्थः । स्तनादीनां द्वित्वविशिष्टा जातिः प्रायेणेति प्रायग्रहणादेकवचनप्रयोगः । अत्र [हारकिलकिञ्चितयोरुपमानोपमेययोर्वाक्यद्वये बिम्बप्रतिबिम्बतया स्तननृपयोः समानधर्मत्वे दृष्टान्तालङ्कारः लक्षणन्तूक्तम् ॥ ४४ ॥

हे नृप ! हे वीर !! किलकिञ्चित* चेष्टावाली इस दमयन्तीका संयोग, शृङ्गारादि चेष्टावाले, आपके साथ होना उसी प्रकार सुन्दर एवं भला ( अनुरूप ) होगा जिस तरह रत्नोंकी मालाकी शोभा तरुणीके कुचों पर होती है—अन्यत्र नहीं होती है । यदि आपके साथ उसका संयोग न होगा तो वह अनुचित होगा ॥ ४४ ॥

तव रूपमिदं तया विना विफलं पुष्पमिवावकेशिनः ।
इयमृद्धधना वृथावनी स्ववनी सम्प्रवदत्पिकापि का ॥ ४५ ॥

तवेति । हे वीर ! तवेदं रूपं सौन्दर्यं तया दमयन्त्या विना अवकेशिनो बन्ध्यवृक्षस्य बन्ध्योफलोऽवकेशी चेत्यमरः । पुष्पमिव विफलं निरर्थकम् , ऋद्धधना सम्पन्नवित्ता इयमवनी वृथा निरर्थिका । सम्प्रवदत्पिका कूजत्कोकिला स्ववनी निजोद्यानम् ङीप् का तुच्छा निरर्थिकेत्यर्थः । तद्योगे तु सर्वं सफलमिति भावः । किं विं



* किलकिञ्चित=हर्ष–क्रोध–अश्रु आदिसे संश्लिष्ट ।

परिप्रश्ने क्षेपे निन्दापराधयोरिति विश्वः। अत्र नलरूपावनीनां दमयन्त्या विना रम्यतानिषेधाद्विनोक्तिरलङ्कारः। विना सम्बन्धि यत्किञ्चिद्यत्रान्यत्र परा भवेत्। रम्यतारम्यता वा स्यात् सा विनोक्तिरनुस्मृतेति लक्षणात्। तस्याश्च पुष्पमिवेत्युपमया संसृष्टिः ॥ ४५ ॥

हे नृप! आपका यह सौन्दर्य उस दमयन्तीके विना निरर्थक है जैसे विना फल वाले (जिसमें फल नहीं होते वह) वृक्षमें पुष्प निरर्थक होते हैं। यह धनप्रचुरा पृथ्वी, जिसका आप शासन करते हैं, वृथा है। किमधिकम्—कोकिल कूजित यह आपका उद्यान भी उसके विना वृथा है। अर्थात् सभी वस्तुएँ सुयोग्यके योग से अच्छी लगती हैं ॥ ४५ ॥

**अनयामरकाम्यमानया सह योगः सुलभस्तु न त्वया।**
**घनसंवृतयाम्बुदागमे कुमुदेनेव निशाकरत्विषा ॥ ४६ ॥**

अत्रान्यापेक्षां दर्शयितुं तस्याः दौर्लभ्यमाह अनयेति। अमरैरिन्द्रादिभिः काम्यमानयाभिलष्यमाणया दमयन्त्या सह योगः अम्बुदागमे घनसंवृतया मेघावृतया निशाकरत्विषा सह योगः कुमुदेनेव त्वया न सुलभो दुर्लभः इत्यर्थः। अत्र तत्संयोगदौर्लभ्यस्य अमरकामनापदार्थहेतुकत्वात् काव्यलिङ्गभेदः तत्सापेक्षा चेयमुपमेति सङ्करः ॥ ४६ ॥

हे नृप! देवोंद्वारा चाही जानेवाली उस दमयन्तीके साथ आपका संयोग सुलभ होना उसी प्रकार कठिन है जिस प्रकार वर्षा ऋतुमें चन्द्रकिरणोंके साथ कुमुदोंका संयोग सुलभ कठिन होता है ॥ ४६ ॥

**तदहं विदधे तथा तथा दमयन्त्याः सविधे तव स्तवम्।**
**हृदये निहितस्तया भवानपि नेन्द्रेण यथापनीयते ॥ ४७ ॥**

अत्र का गतिरिति आह तदिति। तत्तस्मात्कार्यस्य सप्रतिबन्धत्वादहं दमयन्त्याः सविधे समीपे तथा तथा तव स्तवं स्तोत्रं विदधे विधास्य इत्यर्थः सामीप्ये वर्त्तमाने प्रत्ययः। यथा तया हृदये विहितो भवानिन्द्रेणापि नापनीयते नेतुमशक्य इत्यर्थः। यथेन्द्रादिप्रलोभितापि त्वय्येव गाढानुरागा स्यात्तथा करिष्यामीत्यर्थः ॥ ४७ ॥

हे नृप! मैं आपकी कीर्ति–प्रशंसा दमयन्तीके समीप ऐसी रीतिसे करके उसके चित्तमें स्थिर कर दूंगा कि, फिर इन्द्रादि देवके प्रलोभन देनेपर भी वह आपकी ओरसे विमुख न होगी। अर्थात्– आपको ही प्रगाढ़ अनुरागसे चाहेगी अन्योंको नहीं चाहेगी ॥ ४७ ॥

**तव सम्मतिमत्र केवलामधिगन्तुं धिगिदं निवेदितम्।**
**ब्रुवते हि फलेन साधवो न तु कण्ठेन निजोपयोगिताम् ॥ ४८ ॥**

तर्हि तथैव क्रियतां किं निवेदनेनेत्यत आह। तवेति। अत्रास्मिन् कार्य्ये केवलामेकान्तव सम्मतिमङ्गीकारमधिगन्तुमिदं निवेदितं निवेदनं धिक्। तथा हि साधवो निजोपयोगितां स्वोपकारित्वं फलेन कार्य्येण ब्रुवते बोधयन्ति किन्तु कण्ठेन वाग्वृत्या न ब्रुवते सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासः ॥ ४८ ॥

हे नृप ! मैं केवल आपके समीप उपर्युक्त ( ४७ श्लोककी ) बात कहते हुए लज्जित हो रहा हूँ। परन्तु, आपकी इस विषयमें सम्मति लेना आवश्यक था अतः उपर्युक्त ( ४७ श्लोक की ) बात कही है। अन्यथा सज्जनोंका काम तो यह होता है कि, वे उपकारको दूसरेके प्रति करके दिखाते हैं मुंहसे आकर कहते नहीं हैं। अर्थात्—काम कर देते हैं और करके तथा करनेके पहले कभी भी सज्जन उसे उच्चरित नहीं करते हैं ॥ ४८ ॥

**तदिदं विशदं वचोऽमृतं परिपीयाभ्युदितं द्विजाधिपात् ।**
**अतितृप्ततया विनिर्ममे स तदुद्गारमिव स्मितं सितम् ॥ ४९ ॥**

तदिति । स नलो द्विजाधिपात् हंसाच्चन्द्राच्चाभ्युदितमाविर्भूतं विशदं प्रसन्नममदातञ्च तत् पूर्वोक्तमिदमनुभूयमानं वच एवामृतमिति रूपकं तत्परिपीय अतएव अतितृप्ततया अतिसौहित्येन तस्य वचोऽमृतस्य उद्गारमिव सितं स्मितं विनिर्ममे निर्मितवान् । माङः कर्त्तरि लिट् अतितृप्तस्य किञ्चिन्निःसार उद्गारः सितत्वसाम्यात् स्मितस्य वागमृतोद्गारोत्प्रेक्षा ॥ ४९ ॥

ततः उन महाराज नलने उस राजहंस ( पक्षिराज ) से आविर्भूत विशद अमृतरूपी वचनोंको अच्छी तरह से सुनकर हंसते हुए कहा—अर्थात्–जैसे कोई अधिक वस्तुसे तृप्त होकर पुनः उसे निःसृत करता है तद्वत् उन्होंने भी हास्य निःसृत किया।

चन्द्रमासे प्रादुर्भूत वचनरूपी विमल अमृतका पूर्णतया पान करके तृप्ति हो जाने पर उसी विमल अमृतको मुखसे निःसृत करनेके समान हास्य करते हुए महाराज नल बोले–॥४९

**परिमृज्य भुजाग्रजन्मना पतगङ्कोकनदेन नैषधः ।**
**मृदु तस्य मुदेऽगिरद्गिरः प्रियवादामृतकूपकण्ठजाः ॥ ५० ॥**

परिमृज्येति । निषधानां राजा नैषधः नलः जनपदशब्दात् क्षत्रियादञ् । भुजाग्रजन्मना कोकनदेन पाणिशोणपङ्कजेनेत्यर्थः । पतगं हंसं परिमृज्य तस्य हंसस्य तथा मुदे हर्षाय प्रियवादानामेवामृतानां कूपः निधिः कण्ठो वागिन्द्रियं तज्जन्याः गिरः मृदु यथा तथा अगिरत् प्रियवाक्यामृतैरसिञ्चदित्यर्थः । अत्र भुजाग्रजन्मना कोकनदेनेति विषयस्यपाणेर्निगरणेन विषयिणः कोकनदस्यैवोपनिबन्धनात् अतिशयोक्तिः विषयस्यानुपादानाद्विषय्युपनिबध्यते । यत्र सातिशयोक्तिः स्यात्कविप्रौढोक्तिसम्मतेति लक्षणात् सा च पाणिकोकनदयोरभेदोक्तिः अभेदरूपा तस्याः प्रियवादामृतकूपकण्ठेति रूपकसंसृष्टिः ॥ ५० ॥

महाराज नल लाल-लाल कमलरूपी अपने करोंसे उस हंसको सहलाते हुए तथा उसे आनन्दित करते हुए प्रियवाक्यामृतरूपी वाणीद्वारा धीरे-धीरे कहने लगे—॥ ५० ॥

**न तुलाविषये तवाकृतिर्न वचो वर्त्मनि ते सुशीलता ।**
**त्वदुदाहरणाकृतौ गुणा इति सामुद्रिकसारमुद्रणा ॥ ५१ ॥**



न तुलेति । हे हंस ! तव आकृतिः आकारः तुलाविषये सादृश्यभूमौ न वर्त्तते अस-

दृशीत्यर्थः । ते तव सुशीलता सौशील्यं वचोवर्त्मनि न वर्त्तते वक्तुमशक्येत्यर्थः । अत-एवाकृतौ गुणाः यत्राकृतिस्तत्र गुणा इति सामुद्रिकाणां या सारमुद्रणा सिद्धान्तप्रति-पादनं सात्वमेवोदाहरणं यस्याः सा तथोक्ता आकृतिसौशील्ययोः त्वय्येव सामानाधि-करण्यदर्शनादित्यर्थः । अतएवोत्तरवाक्यार्थस्य पूर्ववाक्यार्थहेतुकत्वात् काव्यलिङ्गमल-ङ्कारः हेतोर्वाक्यार्थहेतुत्वे काव्यलिङ्गमुदाहृतमिति लक्षणात् ॥ ५१ ॥

हे राजहंस ! आपका स्वरूप अतुलनीय है तथा आपकी सुशीलता भी अवर्णनीय है । अतः सामुद्रिकोंका वह कथन आपको देखकर ठीक ज्ञात होता है कि "जहाँ स्वरूप सुन्दर है वहाँ गुण भी भले हैं" अर्थात्—आप सामुद्रिकोंके उपर्युक्त उदाहरणके उदाहरण-स्वरूप हैं ॥ ५१ ॥

न सुवर्णमयी तनुः परं ननु किं वागपि तावकी तथा ।
न परं पथि पक्षपातिताऽनवलम्बे किमु मादृशेऽपि सा ॥ ५२ ॥

न सुवर्णेति । ननु हे हंस ! तवेयं तावकी युष्मदस्मदोरन्यतरस्यां खञ्चेति चका-रादण् प्रत्यये ङीप् तवकममकावेकवचन इति तवकादेशः तनुः परं मूर्तिरेव सुवर्णमयी हिरण्मयी न किन्तु वागपि तथा सुवर्णमयी शोभनाक्षरमयीत्यर्थः । अनवलम्बे निरवलम्बे पथि परमाकाश एव पक्षपातिता पक्षपातित्वं किमु किं वेत्यर्थः। निपातानामनेकार्थत्वात्। अनवलम्बे निराधारे मादृशेऽपि सा पक्षपातिता स्नेहवत्तेत्यर्थः । अत्र तनुवाचोः प्रकृता-प्रकृतयोः सुवर्णमयीति शब्दश्लेषः एवं पथि मादृशेऽपि पक्षपातितेति सजातीयसंसृष्टिः तया चोपमा व्यज्यते ॥ ५२ ॥

हे राजहंस ! आपकी देह ही केवल सुवर्णमयी नहीं है अपितु आपकी वाणी भी शोभ-नाक्षरमयी ( सुवर्णमयी ) है । आपका निरवलम्ब आकाशरूपी मार्गमें ही स्नेह (पक्षपात) नहीं है अपितु मेरे ऐसे निरवलम्ब लोगों पर भी आपका स्नेह है ॥ ५२ ॥

भृशतापभृता मया भवान्मरुदासादि तुषारसारवान् ।
धनिनामितरः सतां पुनर्गुणवत्सन्निधिरेव सन्निधिः ॥ ५३ ॥

भृशेति। भृशतापभृता अतिसन्तापभाजा मया भवांस्तुषारैः शीकरैः सारवानुत्कृष्टो मरुत् मारुतः सन् आसादि सन्तापहरत्वादिति भावः । तथा हि धनिनां धनिकानां कुबेरादीनामितरः पद्मशङ्खादिः संश्चासौ निधिश्चेति सन्निधिः सतां विदुषां पुनः गुणा-ढ्यानां सन्निधिः सान्निध्यमेव सन्निधिः महानिधिः सन्तापहारित्वात् त्वमेव शिशिरमा-रुतः अन्यस्तु दहन एवेति भावः । दृष्टान्तालङ्कारः, लक्षणं तूक्तम् ॥ ५३ ॥

हे राजहंस ! अतिसन्तापित मुझे आप शीतल तथा उत्कृष्ट पवनसे प्राप्त हुए मेरे सन्ताप को दूर किया । धनिकोंका योग शंख–पद्म निधिसे तथा सज्जनोंका योग गुणियोंसे होना अच्छा होता है । अर्थात् आप गुणवान हैं ॥ ५३ ॥



शतशः श्रुतिमागतैव सा त्रिजगन्मोहमहौषधिर्मम ।

अधुना तव शंसितेन तु स्वदृशैवाधिगतामवैमि ताम् ॥ ५४ ॥

शतश इति । त्रिजगतः त्रैलोक्यस्य मोहे सम्मोहने महौषधिः महौषधमि रूपकम् । सा दमयन्ती शतशो मम श्रुतिं श्रोत्रमागतैव अधुना तव शंसितेन कथने तु स्वदृशा मम दृष्ट्यैवाधिगतां दृष्टामवैमि साक्षाद् दृष्टां मन्ये । आप्तोक्तिप्रामाण्या दिति भावः ॥ ५४ ॥

हे राजहंस ! तीनों जगतके मोहनेमें महौषधिके समान उस राजकन्या दमयन्तीके विष में मेरे कानोंमें सैकड़ों वार वातें आयीं । परन्तु, आपके इस कथनसे तो एसा ज्ञात होता जैसे मैंने उसे साक्षात् अपने नेत्रोंसे देखा है ॥ ५४ ॥

अखिलं विदुषामनाविलं सुहृदा च स्वहृदा च पश्यताम् ।
सविधेऽपि न सूक्ष्मसाक्षिणी वदनालङ्कृतिमात्रमक्षिणी ॥ ५५ ॥

अथ स्वदृष्टेरप्याप्तदृष्टिरेव गरीयसीत्याह अखिलमिति । सुहृदा आप्तमुखे स्वहृदा स्वान्तःकरणेन च सुहृत् ग्रहणं तद्वत्सुहृदः श्रद्धेयत्वज्ञापनार्थमखिलं कृत्स्न मर्थमनाविलमसन्दिग्धं अविपर्यस्तं यथा तथा पश्यतामवधारयतां विदुषां विवेकि सविधे पुरोऽपि न सूक्ष्मसाक्षिणी असूक्ष्मार्थदर्शिनी सुप्सुपेति समासः । अक्षिणी वद नालङ्कृतिमात्रं न तु दूरसूक्ष्मार्थदर्शनोपयोगिनीत्यर्थः ॥ ५५ ॥

हे राजहंस ! विवेकीजन अपने विवेकसे तथा अपने मित्रोंके विवेकसे जिन वातों देख सकते हैं—जान सकते हैं । उन वातोंको मनुष्यकी आँखें स्वयं नहीं देख सकतीं—क्यों आखें तो केवल मनुष्यके मुखमें आभूषण रूपमें हैं ।

किसी भी मनुष्यके हितू अपने ज्ञानसे अथवा अपने मित्रोंके ज्ञानसे अपने उस दयापात्र लिए जो वातें जान सकते हैं वे वातें वह दयापात्र स्वयं नहीं जान सकता तथा न स अपनी आंखोंसे देख सकता है; जैसे मनुष्यकी आँखें अपने पासके कानों आदिके अलंकार नहीं देख सकती हैं ॥ ५५ ॥

अमितं मधु तत्कथा मम श्रवणप्राघुणिकीकृता जनैः ।
मदनानलबोधनेऽभवत् खग धाय्या धिगधैर्य्यधारिणः ॥ ५६ ॥

अमितमिति । हे खग ! जनैः विदर्भागतजनैः मम श्रवणप्राघुणिकीकृता कर्णाति थीकृता तद्विषयीकृतेत्यर्थः । आम्रेशिकः प्राघुणिक आगन्तुरतिथिस्तथेति हलायुधः अमितमपरिमितं मधु क्षौद्रं तद्वदतिमधुरेत्यर्थः । तत्कथा तद्गुणवर्णना अधैर्यधारि णोऽत्यन्ताधीरस्य मम मदनानलबोधने मदनाग्निप्रज्वलने धाय्या सामिधे भवेत् ऋक् सामिधेनी धाय्या च या स्यादग्निसमिन्धनेइत्यमरः । पाय्यसान्नाय्येत्या दिना निपातः । धिक् वाक्यार्थो निन्द्यः अत्र तत्कथायाः धाय्यात्मना प्रकृतमदनाग्नि न्धनोपयोगात् परिणामालङ्कारः आरोप्यमाणस्य प्रकृतोपयोगित्वे परिणाम इत्यलङ्का रसर्वस्वकारः ॥ ५६ ॥

हे राजहंस ! विदर्भनागरिकोंने अनेकों वार मुझे उस दमयन्तीकी ललित कथा कानोंमें सुनायी। वह कथा मुझ अधीरवान्को कामाग्नि प्रज्वलित करनेमें सामिधेनी सी हुई। धिक्कार है अधीरताको ॥ ५६ ॥

**विषमो मलयाहिमण्डलीविषफूत्कारमयो मयोहितः।**
**बत कालकलत्रदिग्भवः पवनस्तद्विरहानलैधसा ॥ ५७ ॥**

विपम इति। विषमः प्रतिकूलः कालकलत्रदिग्भवः यमदिग्भवः प्राणहर इति भावः पवनो दक्षिणमारुतः तद्विरहानलैधसा दमयन्तीविरहाग्निसमिधा तद्दाह्येने-त्यर्थः। मया मलये मलयाचले या अहिमण्डली सर्पसङ्घः तस्याः विषफूत्कारमयः ऊहितस्तद्रूप इति तर्कितइत्यर्थः। लोके च अग्निरेधांसि फूत्कारवातैर्ध्मायत इति भावः। बतेति खेदे। विरहानलैधसेति रूपकोत्थापितेयं दक्षिणपवनस्य मलयाहिमण्ड-लीफूत्कारत्वोत्प्रेक्षेति सङ्करः ॥ ५७ ॥

हे राजहंस ! यमराजकी भार्याकी दिशासे ( दक्षिणसे ) उत्पन्न प्रतिकूल पवन, ( दक्षिण पवन ) उस दमयन्तीके वियोगरूपी अग्निसमिधाको, मलयाचलकी सर्पमण्डलीसे विस्फूर्जित पवनके सदृश मुझे ज्ञात होता है। अर्थात्—जैसे लोकमें आगको समिधामें रखकर हवासे प्रज्वलित करते हैं तद्वत् यह मलयाचल के सांपोंद्वारा छोड़ी हुई हवा दमयन्तीके विरह अग्निरूपी मुझ समिधाको–मेरे शरीरको—जला रही है ॥ ५७ ॥

**प्रतिमासमसौ निशाकर खग ! सङ्गच्छति यद्दिनाधिपम्।**
**किमु तीव्रतरैस्ततः करैर्मम दाहाय स धैर्य्यतस्करैः ॥ ५८ ॥**

प्रतिमासमिति। असौ निशाकरो मासि मासि प्रतिमासम्प्रतिदर्शमित्यर्थः। वीप्सायामव्ययीभावः दिनाधिपं सूर्य्यं संगच्छति प्राप्नोतीति यत्ततः प्राप्तेः स निशाकरः तीव्रतरैरत एव धैर्यतस्करैर्मम धैर्यहारिभिः करैः सौरैः तत आनीतैः मम दाहाय संगच्छतीत्यनुषङ्गः किमुशब्द उत्प्रेक्षायाम्। अत्र सङ्गमनस्य दाहार्थत्वोत्प्रे-क्षणात् फलोत्प्रेक्षा ॥ ५८ ॥

हे राजहंस ! यह चन्द्र जो प्रतिमासमें सूर्यके साथ संम्मिलन करके उसकी तप्त किरणोंको लेता है उन्हीं किरणों द्वारा यह मेरे धैर्यको खींचता हुआ मुझे जला रहा है क्या ? ॥ ५८ ॥

**कुसुमानि यदि स्मरेषवो न तु वज्रं विषवल्लिजानि तत्।**
**हृदयं यदमूमुहन्नमूर्मम यच्चातितमामतीतपन् ॥ ५९ ॥**

कुसुमानीति। स्मरेषवः कुसुमान्येव यदि न तु वज्रमशनिः सद्योमरणाभावादिति भावः। तत्तथा अस्तु किन्तु विषवल्लिजानि विषलतोत्पन्नानि। यद्यस्मादमूः स्मरेषवः पत्री रोप इषुर्द्वयोरिति स्त्रीलिङ्गता, मम हृदयममूमुहन् अमूर्च्छयन् मुह्यतेर्णौ चङ्, य-द्यस्मादतितमामतिमात्रमयं ... अतीतपन् तापयन्ति स्म तपतेर्णौ चङ्। मोहतापलक्षणविषमकार्य्यदर्शनाद्विषवल्लिजत्वोत्प्रेक्षा ॥ ५९ ॥

हे राजहंस ! यदि कामदेव के बाण वज्र नहीं हैं, पुष्पनिर्मित ही हैं तो, अवश्य वे विपलतासे उत्पन्न हुए हैं क्योंकि, ये कामबाण मेरे हृदयको मथे डाल रहे हैं अर्थात्—कामबाण यदि वज्रके होते तो मुझे तुरत मार डालते परन्तु, इनमें तुरत मारनेकी शक्ति नहीं है किन्तु ये मुझे दहे डालते हैं परन्तु फूलोंमें दहनेकी शक्ति नहीं है अतः ये उन पुष्पोंसे निर्मित किये हुए हैं जो पुष्प विपलताके फूले हैं ॥ ५९ ॥

**तदिहानवधौ निमज्जतो मम कन्दर्पशराधिनीरधौ ।**
**भव पोत इवावलम्बनं विधिनाऽकस्मिकसृष्टसन्निधिः ॥ ६० ॥**

तदिति । तत्तस्मादिहास्मिन्ननवधौ अपारे कन्दर्पशरैर्य आधिर्मनोव्यथा पुंस्याधिर्मानसी व्यथेत्यमरः । तस्मिन्नेव नीरधौ समुद्रे निमज्जतो अन्तर्गतस्य मम विधिना दैवेनाकस्मादकाण्डे भवमाकस्मिकं अध्यात्मादित्वात्ठक् अव्ययानाम्भमात्रे टिलोपः तद्यथा तथा सृष्टसन्निधिः सन्निधानं भाग्यादागत इत्यर्थः । त्वं पोतो यानपात्रमिव यानपात्रन्तु पोत इत्यमरः अवलम्बनं भव ॥ ६० ॥

हे राजहंस ! इस अथाह कामबाणयुक्त मनोव्यथारूपी समुद्रमें डूबते हुए मुझे आप भाग्यसे आकस्मिक नावके समान सहायक प्राप्त हो गये हैं ॥ ६० ॥

**अथ वा भवतः प्रवर्त्तना न कथं पिष्टमियं पिनष्टि नः ।**
**स्वत एव सतां परार्थता ग्रहणानां हि यथा यथार्थता ॥ ६१ ॥**

अथवेति । अथवा इयं नोऽस्माकं सम्बन्धिनी उभयप्राप्तौ कर्मणीति नियमात् कर्त्तरि कृद्योगे षष्ठीनिषेधेऽपि शेषषष्ठीपर्यवसानात् कर्त्रर्थलाभः भवतः उभयप्राप्तौ कर्मणीति षष्ठी, प्रवर्त्तना प्रेरणा ण्यासश्रन्थो युच्, कथं पिष्टं न पिनष्टि स्वतः प्रवृत्तिविषयत्वात् पिष्टपेषणकल्पेत्यर्थः । हि यस्माद् ग्रहणानां ज्ञानानां यथार्थता याथार्थ्यं यथा प्रामाण्यमिव स्वतः सर्वप्रमाणानां प्रामाण्यमिव 'गृह्यतां जाता मनीषा स्वत एव मानमिति मीमांसकाः । सतां परार्थता परार्थप्रवृत्तिः स्वत एव न तु परतः उपमासंसृष्टोऽर्थान्तरन्यासः ॥ ६१ ॥

हे राजहंस ! अथवा हमारी यह आपके प्रति प्रेरणा क्या पिष्टपेषण तुल्य नहीं है—अवश्य है । क्योंकि ज्ञानोंकि प्रामाणिकता स्वतः प्रमाणभूत होती है तथा सज्जन लोग परार्थ करनेके लिए स्वयं ही उद्यत होते हैं—किसीके कहनेपर उद्यत नहीं होते हैं ॥ ६१ ॥

**तव वर्त्मनि वर्त्ततां शिवं पुनरस्तु त्वरितं समागमः ।**
**अपि साधय साधयेप्सितं स्मरणीयाः समये वयं वयः ॥ ६२ ॥**

तवेति । हे वयः ! तव वर्त्मनि शिवं मङ्गलं वर्त्ततां, त्वरितं क्षिप्रमेव पुनः समागमोऽस्तु अपिसाधय गच्छ ईप्सितमिष्टं साधय सम्पादय समये कार्य्यकाले वयं स्मरणीयाः अनन्यगामि कार्य्यं कुर्या इत्यर्थः ॥ ६२ ॥

हे वय ! राजहंस ! आपका मार्ग मंगलकारी हो और आपका पुनः समागम शीघ्र होवे । जाइये कार्यको कीजिये तथा कार्यकालमें मेरा स्मरण रखिये ॥ ६२ ॥

इति तं स विसृज्य धैर्य्यवान्नृपतिः सूनृतवाग्बृहस्पतिः।
अविशद्वनवेश्म विस्मितः श्रुतिलग्नैः कलहंसशंसितैः ॥ ६३ ॥

इतीति। धैर्य्यवानुपायलाभात् सधैर्य्यः सूनृतवाक् सत्यप्रियवादेषु बृहस्पतिः तथा प्रगल्भ इत्यर्थः। सूनृतं च प्रिये सत्यमित्यमरः। स नृपतिरितीत्थं हंसं विसृज्य श्रुतिलग्नैः श्रोत्रप्रविष्टैः कलहंसस्य शंसितैर्विस्मितः सन् वनवेश्म भोगगृहमविशत् ॥६३॥

दमयन्तीके मिलनेकी उपायप्राप्तिपर धैर्यवान् तथा सत्य भाषणमें बृहस्पतिके समान वे महाराज नल उपर्युक्त रीतिसे उस राजहंसको विदा करके उसके द्वारा ( कानोंमें ) कही हुई दमयन्तीकी चर्चापर विस्मित होते हुए वन विहारस्थ भवनमें प्रविष्ट हुए ॥ ६३ ॥

अथ भीमसुतावलोकनैः सफलं कर्त्तुमहस्तदेव सः।
क्षितिमण्डलमण्डनायितं नगरं कुण्डिनमण्डजो ययौ ॥ ६४ ॥

अथेति। अथ सोऽण्डजो हंसः तदहरेव भीमसुतायाः भैम्या अवलोकनैः सफलं कर्तुं तस्मिन्नेव दिने तां द्रष्टुमित्यर्थः। क्षितिमण्डलस्य मण्डनायितमलङ्कारभूतं कुण्डिनं कुण्डिनाख्यनगरं ययौ ॥ ६४ ॥

तदनन्तर वह राजहंस उसी दिन महाराज भीम की पुत्रीके देखनेसे अपने ( नेत्रों ) को कृतकृत्य करनेके लिए इस विश्वके अलंकारभूत कुण्डिन नगरमें गया ॥ ६४ ॥

प्रथमं पथि लोचनातिथिं पथिकप्रार्थितसिद्धिशंसिनम्।
कलसं जलसंभृतं पुरः कलहंसः कलयाम्बभूव सः ॥ ६५ ॥

अथ श्लोकत्रयेण शुभनिमित्तान्याह प्रथममित्यादिना। स कलहंसः प्रथममादौ पथि मार्गे लोचनातिथिं दृष्टिप्रियं पथिकानां प्रस्थातॄणां प्रार्थितस्य इष्टार्थस्य सिद्धिशंसिनं सिद्धिसूचकं जलसम्भृतं जलपूर्णं कलसं पूर्णकुम्भं पुरोऽग्रे कलयांबभूव ददर्श ॥ ६५ ॥

[ अब तीन श्लोकोंसे शुभ शकुन बतलाते हैं ]

कुंडिनकी यात्रामें जाते हुए उस राजहंसने पहले-पहल पथिकोंकी अभीप्सितार्थ सिद्धिकी सूचना देनेवाले दृष्टिप्रिय जलपूर्ण कलशोंको देखा ॥ ६५ ॥

अवलम्ब्य दिदृक्षयाम्बरे क्षणमाश्चर्य्यरसालसं गतम्।
स विलासवनेऽवनीभृतः फलमैक्षिष्ट रसालसंगतम् ॥ ६६ ॥

अवलम्ब्येति। स हंसो दिदृक्षया स्वगन्तव्यमार्गालोकनेच्छया अम्बरे क्षणमाश्चर्यरसेन तद्वस्तु दर्शननिमित्तेन अद्भुतरसेन अलसं मन्दं गतं गतिमवलम्ब्य अवनीभुजो नलस्य विलासवने विहारवने रसालेन चूतवृक्षेण सङ्गतं सम्बद्धं आम्रश्चूतो रसालोऽसावित्यमरः फलमैक्षिष्ट दृष्टवान् ॥ ६६ ॥

तदनन्तर वह राजहंस, अपने गन्तव्यमार्ग को देखनेकी इच्छासे, क्षणमात्रमें अद्भुतरसयुक्त मन्द गतिसे आकाशमें चला गया और वहाँ जाकर उसने महाराज नलके विहारोद्यानके आम्रवृक्षको आम्रयुक्त देखा—यात्रार्थ जाते समय आम देखना शुभ माना जाता है॥६६॥

नभसः कलभैरुपासितं जलदैर्भूरितरक्षुपन्नगम् ।
स ददर्श पतङ्गपुङ्गवो विटपच्छन्नतरक्षुपन्नगम् ॥ ६७ ॥

नभस इति । पुमान् गौः धृषभः विशेषणसमासः गोरतद्धितलुगिति समासान्तष्टच् स इव पतङ्गपुङ्गवः पक्षिश्रेष्ठः उपमितसमासः नभसःकलभैः खेचरकरिकल्पैरित्यर्थः । जलदैरुपासितं व्याप्तं भूरयः वहवस्तरक्षवो मृगादनाः पन्नगा यस्य तं विटपैः शाखाविस्तारेण विस्तारो विटपोऽस्त्रियामित्यरः । छन्नतराः अतिशयेन छादिताः क्षुपा ह्रस्वशाखाः ह्रस्वशाखाशिफः क्षुप इत्यमरः । नगं पर्वतं ददर्श पूर्णकुम्भादिदर्शनं पान्थक्षेमकरमिति निमित्तज्ञाः ॥ ६७ ॥

इसके पश्चात् उस पतंगपुंगव राजहंसने मलयाचय पर्वतको देखा जो मलयाचल पर्व आकाशसे हाथीके वच्चेके सदृश आनेवाले मेघोंसे व्याप्त था तथा लकड़वग्घा और सर्पों प्रच्छन्न वड़े एवं छोटे वृक्षोंसे आच्छन्न था ॥ ६७ ॥

स ययौ धुतपक्षतिः क्षणं क्षणमूर्द्ध्वायनदुर्विभावनः ।
विततीकृतनिश्चलच्छदः क्षणमालोककदत्तकौतुकः ॥ ६८ ॥

स इति । स हंसः क्षणं धुतपक्षतिः कम्पितपक्षमूलः क्षणं ऊर्द्ध्वायनेन ऊर्द्ध्वगमनेन दुर्विभावनो दुष्करावधारणो दुर्लक्ष्य इत्यर्थः । विततीकृतौ विस्तारीकृतौ निश्चलौ छदौ पक्षौ यस्य सः तथा क्षणमालोककानां द्रष्टॄणां दत्तकौतुकः सन् ययौ । स्वभावोक्तिः॥६८

उपर्युक्त शुभ शकुनोंको देखनेके पश्चात् वह राजहंस अपने पंखोंके मूलभागोंको ( पक्ष मूलोंको ) कभी कंपाता हुआ, कभी ऊर्ध्वगमनसे दुर्लक्षित होता हुआ, कभी अपने पंखोंको विस्तृत करके निश्चल गतिसे जाता हुआ, लोगोंको—देखने वालोंको—आश्चर्यान्वित करा हुआ ( कुंडिन नगरकी ओर ) उड़ चला ॥ ६८ ॥

तनुदीधितिधारया रयाद्गतया लोकविलोकनामसौ ।
छदहेम कषन्निवालसत् कषपाषाणनिभे नभस्तले ॥ ६९ ॥

तन्विति । असौ हंसो रयाद्धेतोः उत्पन्नयेति शेषः । लोकस्य आलोकिजनस्य परीक्षकजनस्य च विलोकनां दर्शनं गतया कौतुकाद्वर्णपरीक्षां च विलोक्यमानयेत्यर्थः। तनोः शरीरस्य तन्वा सूक्ष्मया च दीधितिधारया रश्मिरेखया निमित्तेन कषपाषाणनिभे निकषोपलसन्निभे नभस्तले छदहेम निजपक्षसुवर्णं कषन् घर्षन्निवालसत् अशोभतेत्युत्प्रेक्षा ॥ ६९ ॥

वह हंस तेजीसे उड़कर आकाशमें कुण्डिननगरकी ओर जाते हुए ऐसा दिखायी पड़ा जैसे किसीने कसौटीपर सोनेकी एक रेखा, सोनेको, जांचनेके लिए खींच दी हो । अर्थात्—नीले—नीले आकाशमें पीलेरंग का वह राजहंस कसौटीपर खींची हुई स्वर्णरेखासा दिखा ॥६९

विनमद्भिरधःस्थितैः खगैर्झटिति श्येननिपातशङ्किभिः ।

स निरैक्षि दृशैकयोपरि स्यदसाकारिपतत्रपद्धतिः ॥ ७० ॥

विनमद्भिरिति । स्यदेन वेगेन सांकारिणी सामिति शब्दं कुर्वाणा पतत्रिपद्धतिः पक्षिसरणिर्यस्य स हंसः श्येननिपातं शङ्कत इति तच्छङ्किभिः अतएव विनमद्भिर्विलीयमानैरधःस्थितैः खगैः झटिति द्राक् एकया दृशा उपरि निरैक्षि निरीक्षितः कर्मणि लुङ् । स्वभावोक्तिः ॥ ७० ॥

झांकारित शब्दके साथ पक्षियोंके मार्गसे आकाश में अत्यन्त ऊंचे जाते हुए उस राजहंसको, उससे नीचे उड़ने वाले पक्षियोंने, यह शङ्का करते हुए ऊपरकी ओर देखा कि–कहीं पक्षियोंको मारनेवाला वाज पक्षी तो ऊपर नहीं जा रहा है ॥ ७० ॥

दद्दशे न जनेन यन्नसौ भुवि तच्छायमवेक्ष्य तत्क्षणात्
दिवि दिक्षु वितीर्णचक्षुषां पृथुवेगद्रुतमुक्तदृक्पथः ॥ ॥ ७१ ॥

ददृश इति । यन् गच्छन् इणो लटः शत्रादेशः असौ हंसः भुवि तच्छायं तस्य हंसस्य च्छायां विभाषासेनेत्यादिना नपुंसकत्वम् । अवेक्ष्य तत् क्षणात् प्रथमं दिशि पश्चात् दिक्षु च वितीर्णचक्षुषा दत्तदृष्टिना जनेन पृथुवेगेन द्रुतं शीघ्रं मुक्तदृक्पथः सन् न ददृशे न दृष्टः क्षणमात्रेण दृष्टिपथमतिक्रान्त इत्यर्थः ॥ ७१ ॥

वेगसे जाते हुए उस राजहंसकी छायाको देखकर लोगोंने आकाशमें तथा इधर–उधर सब दिशाओंमें दृष्टि फेकी किन्तु, वह राजहंस इतनी तेजीसे जा रहा था कि लोगोंकी दृष्टि उसपर न पड़ीं ॥ ७१ ॥

न वनं पथि शिश्रियेऽमुना क्वचिदप्युच्चतरद्रुचारुतम् ।
न स गोत्रजमन्ववादि वा गतिवेगप्रसरद्रुचा रुतम् ॥ ७२ ॥

नेति । गतिवेगेन प्रसरद्रुचा प्रसर्परोजसा अमुना हंसेन क्वचिदपि उच्चतराणां अत्युन्नतानां द्रूणां द्रुमाणां चारुता रम्यता यस्मिंस्तत् वनं न शिश्रिये । सगोत्रजं बन्धुजन्यं रुतं कूजितं वा नान्ववादि नानूदितं मध्यमार्गे अध्वश्रमापनोदनं बन्धुसम्भाषणादिकमपि न कृतमिति सुहृत्कार्यानुसन्धानपरोक्तिः पलाशी द्रुद्रुमागमा इत्यमरः ॥७२॥

अति तेजीसे उड़कर जाते हुए उस राजहंसने न तो ऊंचे तथा सुन्दर वृक्षोंके ऊपर बैठकर वनमे विश्रान्ति ली और न अपने बन्धु–बान्धवोंकी वाणियों को सुनकर उनकी वाणियोंका अनुमोदन किया । अर्थात्–मित्रकार्यमे संलग्न वह कहीं न रुका ॥ ७२ ॥

अथ भीमभुजेन पालिता नगरी मञ्जुरसौ धराजिता ।
पतगस्य जगाम दृक्पथं हरशैलोपमसौधराजिता ॥ ७३ ॥

अथेति । धराजिता भूमिजयिना सत्सु द्विषेत्यादिना क्विपि तुक्, भीमस्य भीमभूपस्य भुजेन पालिता हिमशैलोपमैः सौधैः राजिता मञ्जुर्मनोज्ञा असौ पूर्वोक्ता नगरी कुण्डिनपुरी पतगस्य हंसस्य दृक्पथं जगाम स तां ददर्शेत्यर्थः । अत्र यमकाख्यानुप्रासस्य हिमशैलोपमेति उपमया च संसृष्टिः ॥ ७३ ॥



इसी प्रकार वेगसे उड़ते आगे जानेपर उसे समस्त पृथ्वीतलमें सुन्दर एवं उत्कृष्ट, तथा

महाराज भीम के द्वारा शासित सुन्दर कुण्डिन नगर दृष्टिगत हुआ जिसकी अट्टालिका कैलास–हिमालयके ऊंचे भवनोंके समान थी ॥ ७३ ॥

दयितं प्रति यत्र सन्तता रतिहासा इव रेजिरे भुवः ।
स्फटिकोपलविग्रहा गृहाः शशभृद्भित्तनिरङ्कभित्तयः ॥ ७४ ॥

तां वर्णयति दयितमिति । यत्र नगर्यां स्फटिकोपलविग्रहाः स्फटिकमयशरीरा इत्यर्थः । अतएव शशभृद्भित्तनिरङ्कभित्तयः शशाङ्कशकलनिष्कलङ्कानि कुड्यानि येषान्ते । भित्तं शकलखण्डे वेत्यमरः, भिदेः क्विप्प्रत्ययः । भित्तं शकलमित्यादि निपातनाद्रदाभ्यामित्यादिना निष्ठानत्वभावः गृहाः दयितं भीमं प्रति सन्ततं भुवः भूमेः नायिकायाः रतिहासा केलिहासा इव रेजिरे इत्युत्प्रेक्षा ॥ ७४ ॥

[ अब नगरीका वर्णन करते हैं ]

उस नगरीके गृह स्फटिकमणि निर्मित हैं और उन गृहोंकी दीवारोंमें स्वच्छ निष्कलङ्क चन्द्रके टुकड़ोंके सदृश मणियाँ जड़ी हुई हैं । जिन्हें देखनेसे ऐसा प्रतीत होता है कि पृथ्वीरूपी दयिता अपने पति महाराज भीमपर निरन्तर रतिहास कर रही हो ॥ ७४ ॥

नृपनीलमणीगृहत्विषामुपधेर्यत्र भयेन भास्वतः ।
शरणागमुवास वासरेऽप्यसदावृत्त्युदयत्तमं तमः ॥ ७५ ॥

नृपेति । यत्र नगर्यां तमोऽन्धकारः भास्वतो भास्करात् भयेन नृपस्य ये नीलमणीनां गृहाः तेषां त्विषः तासां उपधेश्छलादित्यपह्नवभेदः । रत्नं मणिर्द्वयोरित्यमरः । कृदिकारादक्तिनः इति ङीष् । शरणागं शरणं गृहं रक्षितारमन्वागतं शरणं गृहरक्षित्रोरित्यमरः । वासरे दिवसेऽप्यसदावृत्ति अपुनरावृत्ति किञ्चोदयत्तमसुद्यत्तमं सदुवास ॥ ७५ ॥

उस नगरीमें बने नील मणिके राजसदनोंकी छायाके आश्रयमें जाकर, सूर्यसे भयान्वित अन्धकार शरण लेता है और पुनः वहांसे लौटता नहीं है अर्थात्–वहीं रह जाता है । नील मणिका प्रकाश दिनमें अन्धकारसा रहता है ॥ ७५ ॥

सितदीप्रमणिप्रकल्पिते यदगारे हसदङ्करोदसि ।
निखिलान्निशि पूर्णिमा तिथीनुपतस्थेऽतिथिरेकिका तिथिः ॥ ७६ ॥

सितेति । सितैः दीप्रैश्च मणिभिः प्रकल्पिते उज्ज्वलस्फटिकनिर्मिते हसदङ्करोदसि विलसदङ्करोदस्के द्यावापृथिवीव्यापिनीत्यर्थः । यदगारे यस्या नगर्या गृहेष्वित्यर्थः जातावेकवचनं निशि निखिलान् तिथीनेकिका एकाकिनी एकैवेत्यर्थः । एकादाकिनिच्चासहाय इति चकारात् कप्रत्ययः । प्रत्ययस्थात् कात् पूर्वस्येतीकारः । पूर्णिमा तिथीनेकातिथिः । तदाद्यास्तिथयोरित्यमरः । अतिथिः सन् उपतस्थे अतिथिर्भूत्वासङ्गतेत्यर्थः उपाद्देवपूजेत्यादिना सङ्गतिकरणे आत्मनेपदं स्फटिकभवनकान्तिनित्यकौमुदीयोगात् सर्वा अपि रात्रयो राकारात्रय इवासन्नित्यर्थोऽनेकेऽविरोधो निवेद्यः ॥ ७६ ॥



उस नगरीमें स्फटिकमणि निर्मित भवनोंकी धवलता से जो भवन पृथिवी से आकाश

तक ऊंचे हैं तथा पृथिवी और आकाशका मध्यभाग जहांपर दोनोंकी (पृथिवी और आकाशकी) सन्धि है वह भाग पृथिवी और आकाशरूपी प्रतिमाका हास्यस्वरूप ज्ञात होता है। जैसे मनुष्यका शरीर पैरसे लेकर शिरतक होता है और उसमें मुखभाग मध्योपरि भागमें स्थित है तद्वत् पृथिवी और आकाशरूपी प्रतिमा ( एक शरीर वाली ) की वह नगरी हास्यरूपा है अर्थात् उस नगरीमें स्फटिकमणिके बने बड़े-बड़े तथा ऊंचे-ऊंचे गृह हैं। जो अतिथि उस नगरीमें जाते हैं उन्हें सभी रात्रियां पूर्णचन्द्रसे परिपूर्ण ही ज्ञात होती—कोई भी रात्रि अपूर्णचन्द्रा नहीं ज्ञात होती। क्योंकि स्फटिक मणि रातमें चन्द्रकिरणसे चमकती है ॥७६॥

**सुदतीजनमज्जनार्पितैर्घुसृणैर्यत्र कषायिताशया ।**
**न निशाखिलयापि वापिका प्रससाद ग्रहिलेव मानिनी ॥ ७७ ॥**

सुदतीति । यत्र नगर्यां शोभना दन्ता यासान्ताः सुदत्यः स्त्रियः अत्रापि विधानाभावादत्रादेशश्चिन्त्य इति केचित् अग्रान्तशुद्धशुभ्रवृषवराहेभ्यश्चेति चकारात् सिद्धिरित्यन्ये सुदत्यादयः स्त्रीपु योगरूढाः स्त्रियां संज्ञायामिति दत्रादेशात् साधव इत्यपरे तदेतत्सर्वमभिसन्धायाह वामनः सुतत्यादयः प्रतिवेधया इति । ता एव जना लोकाः तेषां मज्जनादवगाहनादर्पितैः क्षालितैः घुसृणैः कुङ्कुमैः कषायिताशया सुरभिताभ्यन्तरा भोगचिह्नैः कलुषितहृदया च वाप्येव वापिका दीर्घिका ग्रहिला ग्रहोऽनुग्रहनिर्बन्धाविति विश्वः । तद्वती दीर्घरोपा पिच्छादित्वालिच् दिवादिः । मानिनीस्त्रीणामीर्षाकृतः कोपो मानोऽन्यासङ्गिनि प्रिये इत्युक्तलक्षणो मानः तद्वती नायिकेव अखिलया निशा निशया सर्वरात्रिप्रसादनेनेत्यर्थः । न प्रससाद प्रसन्नहृदया नाभूत् तादृक् क्षोभादिति भावः ॥ ७७ ॥

उस नगरीमें कई प्रमोद वाटिकाएं, क्रीडासरोवर हैं । जिनमें वहांकी अंगनाओंके स्नानसे केसर-रोरी आदि बहती है। वे वापियां केसरादिसे ऐसी लाल हो जाती हैं कि रात-रातभरमें उनकी लालिमाएं नहीं घटती—बराबर लाल रहती हैं। जैसे कोई स्त्री अपने पतिके ऊपर उस समय रातभर लाल ( क्रुद्ध ) रह जाती है जिस समय वह अपने पतिमें अन्यांगनाओंके साथ रमण चिह्न पा लेती है। अर्थात्—जैसे कोई स्त्री अपने पतिके शरीरपर लगे अन्य रमणीसंयोगसे केसर आदि रमणचिह्नसे अति क्रोधित होती है तथा उसपर रातभर क्रोधित ही रह जाती है तद्वत् वहांकी वापियां भी केसरादिसे रात-रातभर लाल ही रहती हैं—निर्मल नहीं होतीं ॥ ७७ ॥

**क्षणनीरवया यया निशि श्रितवप्रावलियोगपट्टया ।**
**मणिवेश्ममयं स्म निर्म्मलं किमपि ज्योतिरवाह्यमीक्ष्यते ॥ ७८ ॥**

क्षणेति । निशि निशीथे क्षणं नीरवया एकत्र सुप्तजनात्वादन्यत्र ध्यानस्तिमितत्वान्निःशब्दया श्रितः आप्तः वप्रावलिः योगपट्ट इव अन्यत्र वप्रावलिरिव योगपट्टो यया सा तथोक्ता यया नगर्या मणिवेश्ममयं तद्रूपं निर्म्मलं अवाह्यमन्तर्वर्ति किमपि

अवाङ्मनसगोचरं ज्योतिः प्रभा आत्मज्योतिश्च ईच्यते सेव्यते स्म । अत्र प्रस्तुतनगरी विशेषसाम्यादप्रस्तुतयोगिनीप्रतीतेः समासोक्तिः ॥ ७८ ॥

उस नगरीमें रत्न जटित गृह बने हैं तथा उन गृहोंमें और मार्गोंमें दीप जलते हैं आधी रातमें जब सब लोग सो जाते हैं तो वह नगरी शान्तिकी प्रतिमारूपमें, उस योगीसी दीखती है, जो योगी पवित्र वस्त्रको धारण कर शुद्धभावसे आन्तरिक ज्योतिका ध्यान करता है।

विललास जलाशयोदरे क्वचन द्यौरनुबिम्बितेव या ।
परिखाकपटस्फुटस्फुरत् प्रतिबिम्बानवलम्बिताम्बुनि ॥ ७९ ॥

विललासेति । या नगरी परिखायाः कपटेन व्याजेन स्फुटं परितो व्यक्तं तथा स्फुरता प्रतिबिम्बेनावलम्बितं मध्ये चागृह्यमाणं चाम्बु यस्मिन् तस्मिन् प्रतिबिम्बाक्रान्तमम्बु परितः स्फुरति प्रतिबिम्बदेशे न स्फुरति तेनैव प्रतिबिम्बादिति भावः । क्वचन कुत्रचिज्जलाशयोदरे ह्रदमध्ये कस्यचित् ह्रदस्य मध्य इत्यर्थः । अनुबिम्बिता प्रतिबिम्बिता द्यौरमरावतीव विललासेत्युत्प्रेक्षा ॥ ७९ ॥

स्वर्गके समान देदीप्यमाना वह नगरी किसी जलाशयसे प्रतिबिम्बित हो रही थी। जिस जगह उसका प्रतिबिम्ब जलमें नहीं पड़ता था उस जगह जल दिखायी पड़ता था और जिस जगह प्रतिबिम्ब पड़ता था उस जगह जल नहीं दिखाता था। अर्थात्–उस नगरीके चारों तरफ जल की खाइयां थीं।

इस श्लोकसे ऐसा भी अर्थ निकलता है कि उस नगरीके जलाशयोंके भीतर स्वर्गकी छाया दिखायी देतीं थी। अर्थात् वहांका जल इतना स्वच्छ था कि दूरकी वस्तु भी दृष्टिगत होती थी ॥ ७९ ॥

व्रजते दिवि यद्गृहावली चलचेलाञ्चलदण्डताडनाः ।
व्यतरन्नरुणाय विश्रमं सृजते हेलिहयालिकालनाम् ॥ ८० ॥

व्रजत इति । यस्यां नगर्यां गृहावलीषु चलाः चञ्चलाः चेलाञ्चलाः पताकाग्राणि ता एव दण्डास्तैः ताडनाः कशाघाता इत्यर्थः । ताः कर्त्र्यो दिवि व्रजते तं गच्छते हेलिहयालेः सूर्याश्वपङ्क्तेः हेलिरालिङ्गने रवाविति वैजयन्ती । कालनां चोदनां सृजते कुर्व्वते अरुणाय सूर्यसारथये विश्रमं स्वयं तत्कार्यकरणाद्विश्रान्तिं नोदात्तोपदेशेत्यादिना घञि वृद्धिप्रतिषेधः । व्यतरन् ददुः । अत्र हेलिहयालेश्चेलाञ्चलदण्डताडनासम्बन्धेऽपि तत्सम्बन्धोक्तेरतिशयोक्तिभेदः तेन गृहाणामर्कमण्डलपर्य्यन्तमौन्नत्यं व्यज्यत इति अलङ्कारेण वस्तुध्वनिः ॥ ८० ॥

उस नगरीके विशाल भवनोंके ऊपर लगी हुई चञ्चल पताकाएँ, आकाशमार्गसे जानेवाले सूर्यके घोड़ोंको हांकनेमें चाबुकका काम दे रही थीं तथा सूर्यके सारथि को घोड़ोंको हांकनेमें विश्रान्ति देख रही थीं। अर्थात्–उस नगरीके भवन विस्तीर्ण तथा ऊँचे थे ॥ ८० ॥



क्षितिगर्भधरान्वरालयैस्तलमध्योपरि पूरिणां पृथक् ।

जगतां खलु याखिलाद्भुताजनि सारैर्निजचिह्नधारिभिः ॥ ८१ ॥

क्षितीति। तलमध्योपरि अधोमध्योर्द्ध्वदेशान् पूरयन्तीति तत्पूरिणां जगतां पातालभूमिस्वर्गाणां पृथगसङ्कीर्णं यानि निजानि प्रतिनियतानि निजचिह्नानि निध्यन्नपानस्रक्चन्दनादिलिङ्गानि धारयन्तीति तद्धारिभिः तथोक्तैः सारैरुत्कृष्टैः क्षितिकुहरे धरायां भूपृष्ठे अम्बरे आकाशे च ये आलया गृहाः तैः भूम्यन्तर्बहिःशिरोगृहैरित्यर्थः। या नगरी अखिला कृत्स्ना अद्भुता चित्रा अजनि जाता। दीपजनेत्यादिना जनेः कर्त्तरि लुङ् च्लेश्चिणादेशः। अत्र क्षितिगर्भादीनां तलमध्योपरि जगत्सु सतां तच्चिह्नानाञ्च यथासंख्यसम्बन्धात् यथासंख्यालङ्कारः। एतेन त्रैलोक्यवैभवं गम्यते ॥ ८१ ॥

उस नगरीमें तीन खण्डवाले भवन, पाताल, मृत्यु और स्वर्ग लोकके समान शोभित थे। —जैसे पाताललोकमें कोश रहता है तो उन भवनोंके अधःभागोंमें कोश रहता था। जैसे—मृत्युलोकमें अन्नराशि रहती है वैसे उन भवनोंके मध्य भागोंमें अन्न रहता था। जैसे—स्वर्गमें माला—फूल, गन्ध—पान, कर्पूर रहते हैं वैसे ही उन भवनोंके उपरि भागोंमें माला—फूल, गन्ध—पान, कर्पूर रहते थे। अतः वह नगरी अनूपा वस्तु धारिणी थी। अर्थात्—सभी वस्तुओंसे परिव्याप्त वह नगरी थी ॥ ८१ ॥

दधदम्बुदनीलकण्ठतां वहदत्यच्छसुधोज्ज्वलं वपुः।
कथमृच्छतु यत्र नाम न क्षितिभृन्मन्दिरमिन्दुमौलिताम् ॥ ८२ ॥

दधदिति। यत्र नगर्यामम्बुदैरम्बुदवन्नीलः कण्ठः शिखरोपकण्ठः गलश्च यस्य तस्य भावं तत्तां कण्ठो गले सन्निधान इति विश्वः। दधत् अच्छया सुधया लेपनद्रव्येण च सुधावदमृतवच्चोज्ज्वलं वपुर्वहत् सुधालेपोऽमृतं सुधेत्यमरः। क्षितिभृन्मन्दिरं राजभवनमिन्दुमौलितामिन्दुमण्डलपर्यन्तशिखरत्वं कथं नाम न ऋच्छतु गच्छत्वेवेत्यर्थः। राजभवनस्य तादृगौन्नत्यं युक्तमिति भावः। अन्यत्र नीलकण्ठस्य इन्दुमौलित्वमीश्वरत्वं च युक्तमिति भावः। अत्र विशेषणविशेष्याणां श्लिष्टानामभिधायाः प्रकृतार्थमात्रनियन्त्रणात् प्रकृतेश्वरप्रतीतेः ध्वनिरेव ॥ ८२ ॥

उस नगरीमें राजमन्दिर स्वच्छ सफेद था तथा उसके चारों ओर नीले मेघ थे और ऊपर चन्द्रमा था अतः उपर्युक्त चिह्नोंको धारण करने वाला वह राजमन्दिर क्यों न शिवकी प्रतिमा कहा जाय, शिवजी भी सफेद भस्म शरीरमें लगाते हैं और उनका गला विष पोनेसे नीला है तथा उनके शिर पर चन्द्रशोभित है ॥ ८२ ॥

बहुरूपकशालभञ्जिकामुखचन्द्रेषु कलङ्करङ्कवः।
यदनेककसौधकन्धराहरिभिः कुक्षिगतीकृता इव ॥ ८३ ॥

बह्विति। बहुरूपकाः भूयिष्ठसौन्दर्याः शैषिकः कप्रत्ययः। तेषु शालभञ्जिकानां कृत्रिमपुत्रिकाणां मुखचन्द्रेषु कलङ्करङ्कवः चन्द्रत्वात् सम्भाविताः कलङ्कमृगाः ते यस्यां नगर्यामनेककेषां बहूनां सौधानां कन्धरासु कण्ठप्रदेशेषु ये हरयः सिंहाः तैः कुक्षि-

गतीकृता इव ग्रस्ताः किमित्युत्प्रेक्षा मुखचन्द्राणां निष्कलङ्कत्वनिमित्तात् अन्यथा क चन्द्रे निष्कलङ्कतेति भावः ॥ ८३ ॥

उस नगरीके असंख्यों भवनोंमें प्रस्तरादिकी पुतलियाँ ( खिलौने ) निष्कलंकित चन्द्रमुखी बने हैं तथा उन्हीं भवनोंके स्कन्धप्रदेशों में प्रस्तरादिके सिंह भी अनेकों बने हैं। अतः उन निष्कलंक चन्द्रमुखोंको देखकर ऐसी प्रतीति होती है कि इनके कलंकरूपी हरिणोंको सिंह लील गये—अन्यथा चन्द्रमामें तो सदा मृगचिह्न रहता है। वे प्रस्तरकी पुतलियाँ निष्कलंकित चन्द्रमुखी कहाँसे हो गयीं ॥ ८३ ॥

बलिसद्म दिवं स तथ्यवागुपरि स्माह दिवोऽपि नारदः ।
अधराय कृता ययेव सा विपरीताजनि भूविभूषया ॥ ८४ ॥

बलीति । स प्रसिद्धः तथ्यवाक् सत्यवचनः नारदः बलिसद्मदिवं पातालस्वर्गं दिवो मेरुस्वर्गादप्युपरिस्थितामुत्कृष्टाञ्चाह स्म उक्तवान् । अथेदानीं भूविभूषया यया नगर्या अधरा न्यूना अधस्ताच्च कृतेवेत्युत्प्रेक्षा सा बलिसद्मद्यौर्विपरीता नारदोक्तविपरीता अजनि सर्वोपरिस्थितायाः पुनरधःस्थितिः वैपरीत्यम् ॥ ८४ ॥

विष्णुपुराणमें प्रसिद्ध देवर्षि सत्यवक्ता नारदजीकी उक्ति है कि, पातालके राजा बलिका स्वर्गरूपी पाताल प्रदेश स्वर्गसे भी उत्कृष्ट है। परन्तु, समस्त पृथ्वीकी भूषणायमान उस नगरीने पाताल प्रदेशको भी सुन्दरतामें जीत लिया है अतः वह नगरी स्वर्ग और पाताल दोनोंसे उच्च है। अतः यह नारदोक्ति असत्यसी है ॥ ८४ ॥

प्रतिहट्टपथे घरट्टजात् पथिकाह्वानदसक्तुसौरभैः ।
कलहान्न घनान् यदुत्थितादधुनाप्युज्झति घर्घरस्वरः ॥ ८५ ॥

प्रतीति । पन्थानं गच्छन्तीति पथिकाः तेषामाह्वानं ददातीति तथोक्तमाह्वयिकम् अध्वानं गच्छतामाकर्षकमित्यर्थः । शक्तूनां सौरभं सुगन्धो यस्मिन् प्रतिघट्टे प्रत्यापणपथे । अव्ययं विभक्तीत्यादिना वीप्सायामव्ययीभावः । तृतीयासप्तम्योर्बहुलमिति सप्तम्या अमभावः । घरट्टाः गोधूमचूर्णग्रावाणः तज्जात् यस्या नगर्याः उत्थितात् कलहात् घर्घरस्वनः निर्झरस्वरः कण्ठध्वनिः घनान् मेघान् अधुनापि नोज्झति न त्यजति सर्व्वदा सर्वहट्टेषु घरट्टा मेघध्वानं ध्वनन्तीति भावः । अत्र घनानां घरट्टकलहासम्बन्धेऽपि सम्बन्धोक्तेरतिशयोक्तिः तथा च घर्घरस्वनस्य तद्धेतुकत्वोत्प्रेक्षा व्यञ्जकाप्रयोगात् गम्येति सङ्करः ॥ ८५ ॥

उस नगरीमें सत्तूको पीसनेवाले जांते ( चक्कियाँ ) प्रति बाजारमें चलते हैं जिनकी ध्वनियां मेघोंकी गड़गड़ाहटके सदृश है। उन जांतोंमें पीसे जानेवाले सत्तुओंसे सुगन्धि उड़ती है उस सुगन्धसे वहांके बाजारके प्रतिस्थल परिव्याप्त हैं तथा ऐसा ज्ञात होता है कि जांतोंकी गड़गड़ाहट और सत्तूकी सुगन्ध पथिकोंको लखाकर बुला रही हो। अर्थात्—वहाँ सत्तू अधिक प्रयुक्त होता है जिससे जांतें अधिक चला करते हैं—स्त्रियोंकी स्वास्थ्य रक्षा

जांता चलानेसे रहती है अतः वहाँ जांता चलाये जाते हैं स्त्रियाँ नीरोग रहती हैं ॥ ८५ ॥

**वरणः कनकस्य मानिनीं दिवमङ्कादमराद्रिरागताम्।**
**घनरत्नकवाटपक्षतिः परिरभ्यानुनयन्नुवास याम् ॥ ८६ ॥**

वरण इति। कनकस्य सम्बन्धी वरणः तद्विकारः प्राकारः स एवामराद्रिर्मेरुः यां नगरीमेव मानिनीं कोपसम्पन्नामत एव अङ्कान्निजोत्सङ्गादागतां भूलोकं प्राप्तां दिवममरावतीं घने निविडे रत्नानां कवाटे रत्नमयकवाटे एव पक्षती पक्षमूले यस्य स सन् परिरभ्य उपगूह्य मेरोः पक्षवत्त्वात्पक्षतिरूपत्वमनुसरन् अनुवर्त्तमानः उवास। कामिनः प्रणयकुपितां प्रेयसीमाप्रसादमनुगच्छन्तीति भावः। रूपकालङ्कारः स्फुट एव तेन चेयं नगरी कुतश्चित् कारणादागता द्यौरेव वरणश्च स्वर्णाद्रिरेवेत्युत्प्रेक्षा व्यज्यते ॥८६॥

उस नगरीमें नगरके परकोटे सुवर्णके बने हैं तथा नगर द्वारोंके किवाड़ोंमें रत्न जड़े हैं जिन्हें देखनेसे ऐसा प्रतीत होता है कि स्वर्ग ही सुवर्णके पर्वत 'मेरु' रूपमें रत्नोंके पंखोंको लगाकर आ गया है। अर्थात्—वह नगरी ऐसी ज्ञात होती थी कि, "जैसे कोई रमणी अपने पतिपर कोप करके उसकी गोदसे उठकर दूसरी जगह जा बैठे और उसे उसी जगह मनाने उसका पति आया हो" इस श्लोकसे ज्ञात होता है कि, कुण्डन नगरी ही मानों स्वर्गकी अमरावती नगरी है और वह वहाँसे अपने पति 'मेरु' पर कोप करके चली आयी अतः उसे मनाने मेरु पर्वत यहाँ आया और जब कोपवती स्त्री नहीं गयी तो वह भी उसके प्रसादनार्थ वहीं रह गया ॥ ८६ ॥

**अनलैः परिवेषमेत्य या ज्वलदर्कोपलवप्रजन्मभिः।**
**उदयं लयमन्तरा रवेरवहद्बाणपुरीपरार्द्ध्यताम् ॥ ८७ ॥**

अनलैरिति। या नगरी रवेरुदयं लयमस्तमयं चान्तरा तयोर्मध्यकाल इत्यर्थः। अन्तरान्तरेण युक्त इति द्वितीया। ज्वलतामर्कांशुसम्पर्कात् प्रज्वलतामर्कोपलानां वप्राजन्म येषान्तैः सूर्य्यकान्तैः प्राकारजन्यैः अनलैः परिवेषमेत्य परिवेष्टनं प्राप्य बाणपूर्याः बाणासुरनगर्याः शोणितपुरस्य परार्द्ध्यतां श्रेष्ठतामवहत् अत्रान्यधर्मस्यान्येन सम्बन्धासंभवात्तादृशीं परार्द्ध्यतामिति सादृश्याक्षेपान्निदर्शनालङ्कारः ॥ ८७ ॥

वह नगरी बाणपुरीसे भी उत्कृष्ट है। विष्णुपुराणके अनुसार बाणासुरकी नगरी शोणितपुरीके चारों ओर आग जलती रहती थी जिससे बाणासुर पर कोई आक्रमण न कर सके। इस नगरीके चारों ओर भी सूर्योदयसे सूर्यास्त तक आग चारों तरफ जला करती है क्योंकि उस नगरीके भवन सूर्यकान्तमणिके बने हैं और सूर्यकान्तमणि सूर्यके प्रकाशमें आग उत्पन्न करती है ॥ ८७ ॥

**बहुकम्बुमणिर्वराटिकागणनाटत्करकर्कटोत्करः।**
**हिमवालुकयाच्छवालुकः पटु दध्वान यदापणार्णवः ॥ ८८ ॥**



बह्विति। बहवः कम्बवः शङ्खा मणयश्च यस्मिन् सः वराटिकागणनाय कपर्दिका-

संख्यानाय अटन्तः तिर्यक् प्रचरन्तः कराः पाणय एव कर्कटोत्कराः कुलीरसंघाः यस्मि सः हिमवालुकया कर्पूरेण अच्छवालुकः स्वच्छसिकतः यस्या पुरः आपणो विपणिरेवा र्णवः पट्टधीरं दध्वान ननाद कपर्दो वराटिकेति हलायुधः । शङ्खः स्यात् कम्बुरस्त्रिया मित्यमरः । सिताभ्रो हिमवालुका, स्यात्कुलीरः कर्कटक इति चामरः ॥ ८८ ॥

उस नगरीमें अनेकों शंख तथा मणियां हैं और वराटिकाओंके गिननेके लिए अने कछुए रूपी व्यापारियोंके हाथ हैं तथा कर्पूरकी स्वच्छ चूर्णरूपी पाउडर बालूके सदृश है ए व्यापारियों तथा ग्राहकोंसे खूब हल्ला समुद्रकी ध्वनिके समान होता है अतः उस नगरी बाजार समुद्रके समान मालूम होते हैं ॥ ८८ ॥

यदगारघटाट्टकुट्टिमस्रवदिन्दूपलतुन्दिलापया ।
मुमुचे न पतिव्रतौचिती प्रतिचन्द्रोदयमभ्रगङ्गया ॥ ८९ ॥

यदिति । यस्याः नगर्याः अगारघटासु गृहपङ्क्तिषु अट्टानामट्टालिकानां कुट्टिमे निबद्धभूमिषु कुट्टिमोऽस्त्री निबद्धा भूरित्यमरः । स्रवद्भिरिन्दुसम्पर्कात् स्यन्दमानै रिन्दूपलैश्चन्द्रकान्तैः हेतुभिः तुन्दिलाः प्रवृद्धा आपो यस्याः तथा तुन्दादिभ्य इलच् ऋक्पू पूरीत्यादिना समासान्तः । अभ्रगङ्गाया मन्दाकिन्या मन्दाकिनी वियद्गङ्गेत्यमरः चन्द्रोदये चन्द्रोदये प्रतिचन्द्रोदयं वीप्सायामव्ययीभावः । पतिव्रतानामौचित्ये औचित्यं ब्राह्मणादित्वाद्गुणवचनेत्यादिना ष्यञ्प्रत्ययः षिद्गौरादिभ्यश्चेति ङीष् स च मातरि षिच्चेति षित्वादेव सिद्धे मातामहशब्दस्य गौरादिपाठेनानित्यत्वज्ञापन द्वैकल्पिकः अतएव वामनः ष्यञः षित्कार्य्यं बहुलमिति स्त्रीनपुंसकयोर्भावक्रिययोः ष्य क्वचिच्च वुञ् औचित्यमौचिती मैत्र्यं मैत्री वुञ् प्रागुदाहृतमित्यमरश्च । न मुमुचे तत्यजे भर्तुः समुद्रस्य चन्द्रोदये वृद्धिदर्शनात्तस्या अपि तथा वृद्धिरुचिता, "आर्ता मुदिते हृष्टा प्रोषिते मलिना कृशा । मृते हि म्रियते या स्त्री सा स्त्री ज्ञेया पतिव्रता।" इति स्मरणादिति भावः । अत्राभ्रगङ्गायाः यदगारेत्यादिना विशेषणार्थासम्बन्धे सम्बन्धोक्तेरतिशयोक्तिः तथा च यदगाराणामतीन्दुमण्डलमौन्नत्यं गम्यते तदुत्थापि चेयमस्याःपातिव्रत्यधर्मापरित्यागोत्प्रेक्षेति सङ्करः सा च व्यञ्जकाप्रयोगात् गम्या ॥८९

उस नगरीके भवनकी अटारियां चन्द्रकान्त मणियोंकी बनी हैं जिससे नित्य चन्द्रोदय पर जलकी धारा बहती हैं उन जलधाराओंसे स्वर्गकी मन्दाकिनी नदी बढ़ जाती है अपने पातिव्रत धर्मका पालन करती है । चन्द्रोदयके होने पर समुद्र बढ़ता है समुद्र नदियों पति है अतः पतिकी अनुगामिनी होना पत्नी का कर्त्तव्य है इसीसे मन्दाकिनी नदी नित्य चन्द्रोदय पर बढ़ जाती है ॥ ८९ ॥

रुचयोस्तमितस्य भास्वतः स्खलिता यत्र निरालयाः खलु ।
अनुसायमभूद्विलेपनापणकश्मीरजगन्धवीश्मः ॥ ९० ॥



रुचय इति । यत्र नगर्यामनुसायं प्रतिसायं वीप्सायामव्ययीभावः । विलेपना

पणेषु सुगन्धद्रव्यनिषद्यासु कश्मीरजानि कुंकुमान्येव पण्यानि पणनीयद्रव्याणि तेषां वीथयः श्रेणयः अस्तमितस्यास्तङ्गतस्य भास्वतः सम्बन्धिन्यः स्खलिताः अस्तमयक्षोभात् च्युताः अत एव निरालया निराश्रया रुचयः प्रभाः अमुः खलु कथञ्चित्प्रच्युताः सायन्तनार्कत्विष इव भान्ति स्मेत्यर्थः । कुंकुमराशीनां तदा तत्सावर्ण्यादियमुत्प्रेक्षा व्यञ्जकाप्रयोगाद्गम्या भातेर्लुङि झेर्जुसादेशः ॥ ९० ॥

उस नगरीकी तैल आदि सुगन्धियोंकी दूकानोंपर नित्य सायंकाल कुंकुम आदि लाल पदार्थोंकी राशियां देख पड़ती हैं। वे राशियां आश्रयहीन अस्त होनेके क्षोभसे गिरनेवाली सूर्यकी लाल २ किरणें ही हैं क्या ? —अर्थात् वहां सायंकाल खूब सुगन्धित वस्तुएँ और कुंकुम अङ्गनाओंके प्रसाधनार्थ प्राप्त होते हैं॥ ९० ॥

वितत वणिजापणेऽखिलं पणितुं यत्र जनेन वीक्ष्यते ।
मुनिनेव मृकण्डुसूनुना जगतीवस्तु पुरोदरे हरेः ॥ ९१ ॥

विततमिति । यत्र नगर्यां वणिजा वणिग्जनेन पणितुं व्यवहर्तुमापणे पण्यवीथ्यां विततं प्रसारितमखिलं जगत्यां लोके स्थितं वस्तु पदार्थजातं पुरा पूर्वं हरेर्विष्णोरुदरे मृकण्डुसूनुना मुनिना मार्कण्डेयेनेव जनेन लोकेन वीक्ष्यते विष्णूदरमिव समस्तवस्त्वाकरोऽयमवभासत इत्यर्थः । पुरा किल मार्कण्डेयो हरेरुदरं प्रविश्य विश्वं तत्राद्राक्षीदिति कथयन्ति ॥ ९१ ॥

उस नगरीमें व्यापारियोंने बजारमें विश्वकी समस्त वस्तुएं विक्रयार्थ फैलायी हैं—अर्थात् उस नगरीमें संसारकी समस्त वस्तुओंके वैसे दर्शन होते हैं जैसे मृकण्डपुत्र मार्कण्डेय मुनिने समस्त विश्वको विष्णुभगवान्के पेटमें देखा था ॥ ९१ ॥

सममेणमदैर्यदापणे तुलयन् सौरभलोभनिश्चलम् ।
पणिता न जनारवैरवैदपि कूजन्तमलिं मलीमसम् ॥ ९२ ॥

सममिति । यस्या नगर्या आपणे सौरभलोभनिश्चलं गन्धग्रहणनिष्पन्दं ततः क्रियया दुर्बोधमित्यर्थः । मलीमसं मलिनं सर्वाङ्गनीलमित्यर्थः । अन्यथा पीतमध्यस्यालेः पीतिम्नैव व्यवच्छेदात् अतो गुणतोऽपि दुर्ग्रहमित्यर्थः । ज्योत्स्नातमिस्रेत्यादिना निपातः । अलिं भृङ्गं एणमदैः सम कस्तूरीभिः सह तुलयन् तोलयन् पणिता विक्रेता कूजन्तमपि जनानामारावैः कलकलैः नावैत् शब्दतोऽपि न ज्ञातवान् इत्यर्थः । इह निश्चलस्यालेः गुञ्जनं कविना प्रौढवादेनोक्तमित्यनुसन्धेयं अत्रालेर्नत्यादेणमदोक्तेः सामान्यालङ्कारः । सामान्यं गुणसामान्ये यत्र वस्त्वन्तरैकतेति लक्षणात् । तेन भ्रान्तिमदलङ्कारो व्यज्यते ॥ ९२ ॥

उस नगरीमें जनसमूहके कोलाहलमें क्रेतागण कस्तूरीको व्यापारियोंसे खरीदते हैं और व्यापारी लोग अनजानमें उन्हें कस्तूरीके स्थलमें भ्रमरोंको दे देते हैं जिन्हें क्रेता—विक्रेता दोनों नहीं ज्ञात कर पाते—पीछे घर जाकर ज्ञात करते हैं ॥ ९२ ॥

रविकान्तमयेन सेतुना सकलाहर्ज्वलनाहितोष्मणा ।
शिशिरे निशि गच्छतां पुरा चरणौ यत्र दुनोति नो हिमम् ॥ ९३ ॥

रविकान्तेति । यत्र नगर्यां सकलाहः कृत्स्नमहः राजाहःसखिभ्यष्टच् । रात्राह्नाहाः पुंसीति पुंलिङ्गता अत्यन्तसंयोगे द्वितीया योगविभागात्समासः । ज्वलने तपनकराभिपातात्प्रज्वलनेन आहितोष्मणा जनितोष्मणा जनितोष्णेन रविकान्तमयेन सेतुना सेतुसदृशेनाध्वना सूर्यकान्तकुट्टिमाध्वनेत्यर्थः । गच्छतां सञ्चरतां चारिणां चरणानित्यर्थः । स्तनादीनां द्वित्वविशिष्टा जातिः प्रायेणेति जातौ द्विवचनम् । शिशिरे शिशिरर्तौ तत्रापि निशि हिमं पुरा नो दुनोति नापीडयत् यावत्पुरानिपातयोर्लट् । अत्र सेतोरुष्मासम्बन्धेऽपि तत्सम्बन्धोक्तेरतिशयोक्तिः तन्नोत्तरस्याः पूर्वसापेक्षत्वात् सङ्करः ॥ ९३ ॥

उस नगरीमें सूर्यकान्त मणिका पुल बना हुआ है जो दिनभर सूर्यकी किरणोंसे गरम रहकर रातको भी गरम रहता है । अतः रातमें उस पुलपरसे जानेमें मनुष्योंको शीतकालमें जाड़ा नहीं सताता है ॥ ९३ ॥

विधुदीधितिजेन यत्पथं पयसा नैषधशीलशीतलम् ।
शशिकान्तमयं तपागमे कलितीव्रस्तपति स्म नातपः ॥ ९४ ॥

विध्विति । विधुदीधितिजेन इन्दुकरसम्पर्कजन्येन पयसा सलिलेन नैषधस्य नलस्य शीलं वृत्तं स्वभावो वा तद्वच्छीतलं शशिकान्तमयं यत्पथं यस्या नगर्याः पन्थानं तपागमे ग्रीष्मप्रवेशे कलितीव्रः कलिकालवच्चण्डः आतपः न तपति स्म नलकथायाः कलिनाशकत्वादिति भावः । अत्र नगरपथस्य इन्दूपलपयःसम्बन्धेऽप्यतिशयोक्तिः तत्सापेक्षत्वादुपमयोः सङ्करः ॥ ९४ ॥

इस नगरीमें चन्द्रकान्त मणियोंके फर्श मार्गमें जड़े हुए हैं जो रातमें शीतल रहकर दिनमें भी शीतल रहते हैं अतः पथिकोंको उनपर ग्रीष्मकालमें चलनेमें वैसे ही कष्ट नहीं होता जैसे कलियुगमें नैषधके ( नलके ) शीलवृत्तश्रवणसे लोगोंको कष्ट नहीं होता । अर्थात् वे चन्द्रकान्तमणि निर्मित मार्ग लोगोंके सन्तापको उसी प्रकार हरण करते हैं । जिस प्रकार कलियुगके सन्तापको नैषधका शील-स्वभाव हरण कर लेता है ॥ ९४ ॥

परिखावलयच्छलेन या न परेषां ग्रहणस्य गोचरा ।
फणिभाषितभाष्यफक्किका विषमा कुण्डलनामवापिता ॥ ९५ ॥

परिखेति । परिखावलयच्छलेन परिखावेष्टनव्याजेन कुण्डलनां मण्डलाकारोंमवापिता परेषां शत्रूणां ग्रहणस्याक्रमणस्य अन्यत्र अन्येषां ग्रहणस्य ज्ञानस्य गोचरा अविषया या नगरी विषमा दुर्बोधा फणिभाषितभाष्यफक्किका पतञ्जलिप्रणीतमहाभाष्यस्थकुण्डलिग्रन्थः तद्वदिति शेषः । अत्र नगर्याः कुण्डलिग्रन्थत्वेनोत्प्रेक्षा सा च परिखावलयच्छलेनेति अपह्नवोत्थापितत्वात् सापह्नवा व्यञ्जकाप्रयोगाद्गम्या ॥ ९५ ॥

उस नगरीमें चारो तरफ़ जलकी खाइयां है अतः वह नगरी कुण्डलाकार रूपमें है और शत्रुओंसे उसीरीति से दुर्ल्लंङ्घ्य है जिस रीतिसे महाभाष्यके कुण्डलिग्रन्थ लोगोंसे दुर्ल्लङ्घ्य हैं ॥ ९५ ॥

**मुखपाणिपदाक्ष्णि पङ्कजै रचिताङ्गेष्वपरेषु चम्पकैः ।**
**स्वयमादित यत्र भीमजा स्मरपूजाकुसुमस्रजः श्रियम् ॥ ९६ ॥**

मुखेति । यत्र नगर्यां मुखञ्च पाणी च पदे च अक्षिणी च यस्मिन् तस्मिन् प्राण्यङ्गत्वाद्द्वन्द्वैकवद्भावः पङ्कजैः रचिता सृष्टा अपरेषु मुखादिभ्यतिरिक्तेष्वङ्गेषु चम्पकैश्चम्पकपुष्पैः रचिता सर्वत्र सादृश्याद्व्यपदेशः भीमजा भैमी स्वयं स्मरपूजाकुसुमस्रजः श्रियं शोभामादित आत्तवती । ददातेर्लुङि स्थाघ्वोरिच्चेर्तीत्वं ह्रस्वादङ्गादिति सलोपः । अत्र अन्यश्रियोऽन्यथा सम्भवात् श्रियमिव श्रियमिति सदृश्याक्षेपान्निदर्शनाभेदः तथा तदङ्गानां पङ्कजाद्यभेदोक्तेरतिशयोक्तिः तदुत्थापिता चेयं निदर्शनेति सङ्करः ॥९६॥

उस नगरीमें कमलके समान मुख, हाथ, पैर और आंखें तथा चम्पक पुष्पोंके सदृश शरीरके अन्य अवयवोंसे कुमारी दमयन्ती स्वयं कामदेवकी पूजाके लिए मालारूप शोभाको धारण किये हुए है ॥ ९६ ॥

**जघनस्तनभारगौरवाद्वियदालम्ब्य विहर्तुमक्षमाः ।**
**ध्रुवमप्सरसोऽवतीर्य यां शतमध्यासत तत्सखीजनः ॥ ९७ ॥**

जघनेति । जघनानि च स्तनौ च जघनस्तनं प्राण्यङ्गत्वाद्द्वन्द्वैकवद्भावः तदेव भारः तस्य गौरवात् गुरुत्वाद्वियदालम्ब्य विहर्तुमक्षमाः शतं शतसंख्याकाः विंशत्याद्याः सदैकत्वे संख्याः संख्येयसंख्ययोरित्यमरः । अप्सरसोऽवतीर्य स्वर्गादागत्य तत्सखीजनः सत्यः जातावेकवचनं यां नगरीमध्यासत अध्यतिष्ठन् अधिशीङ्स्थासां कर्मेति कर्मत्वं ध्रुवमित्युत्प्रेक्षा । अप्सरःकल्पाः शतं सख्य एनामुपासत इत्यर्थः ॥९७॥

उस नगरीमें सैकड़ो अप्सराएं अपने जघनस्थलों तथा कुचोंके भारसे स्वर्गमें विचरण करनेमें असमर्थ होकर आ गयी जो उस कुमारी दमयन्तीकी सखीरूपमें वहां रहती है अर्थात् वह नगरी स्वर्गसे भी अधिक सुख देने वाली रमणियोंसे व्याप्त है ॥ ९७ ॥

**स्थितिशालिसमस्तवर्णतां न कथं चित्रमयी बिभर्तु या ।**
**स्वरभेदमुपैतु या कथं कलितानल्पमुखारवा न वा ॥ ९८ ॥**

स्थितीति । चित्रमयी आश्चर्यप्रचुरा आलेख्यप्रचुरा च आलेख्याश्चर्ययोश्चित्रमित्यमरः । या नगरी स्थित्या मर्यादया स्थायित्वेन च शालन्ते ये ते समस्ता वर्णा ब्राह्मणादयः शुक्लादयश्च यस्याः तस्या भावस्तत्तां वर्णो द्विजादौ शुक्लादावित्यमरः । कथं न बिभर्तु बिभर्त्येवेत्यर्थः । कलितः प्राप्तः अनल्पानां बहूनां मुखानामारवो बहुमुखानां ब्रह्ममुख-षण्मुखानां च आरवः शब्दो यस्याः सा या पुरी स्वरस्य ध्वनेर्भेदं नानात्वं स्वः स्वर्गाद्भेदं च कथं वा नोपैतु उपैत्येवेत्यर्थः । उभयत्रापि सति कारणे कार्यं भवेदे-

वेति भावः अत्र केवलप्रकृतश्लेषालङ्कारः उभयोरप्यर्थयोः प्रकृतत्वात् । किन्तु पू नाले फलद्वयवदेकस्मिन्नेव शब्दे अर्थद्वयप्रतीतेरर्थश्लेषः प्रथमार्थे । द्वितीये तु जतु छवदेकवद्भूतशब्दद्वयादर्थद्वयप्रतीतेः शब्दश्लेषः ॥ ६८ ॥

वह नगरी नीचे लिखे गुणोंसे स्वर्गके समान क्यों न मालूम पड़े ! उस नगरीमें अने स्थायी रंग वाले चित्र हैं अथवा उस नगरीमें सभी वर्णके मनुष्य रहते हैं । उस नगरी अनेकों प्रकारके स्वर भेद हैं अथवा ब्राह्मणादि द्विजगण वेद–पद–घनादिको पढ़ते हैं । स्व भी अनेकों रंग हैं अनेकों देवगण हैं तथा ब्रह्माजी चारों मुखों से वेद वेदांग पढ़ते हैं अ वह नगरी स्वर्गतुल्या है ॥ ९८ ॥

**स्वरुचारुणया पताकया दिनमर्केण समीयुषोत्तृषः ।**
**लिलिहुर्बहुधा सुधाकरं निशि माणिक्यमया यदालयाः ॥ ९९ ॥**

स्वरुचेति । माणिक्यमयाः पद्मरागमयाः यदालयाः यस्यां नगर्यां गृहाः दिनं दि अत्यन्तसंयोगे द्वितीया । समीयुषा सङ्गतेन अर्केण हेतुना उत्तृषः अर्कसम्पर्कादुत्पन्न पासाः सन्तः स्वरुचा स्वप्रभया अरुणया आरुण्यं प्राप्तयेति तद्गुणालङ्कारः तद्गु स्वगुणत्यागादन्योत्कृष्टगुणाहृतिरिति लक्षणात् पताकया रसनायमानयेति भा सुधाकरं बहुधा लिलिहुः आस्वादयामासुरित्यर्थः अह्नि सन्तप्ता निशि शीतोपच कुर्वन्तीति भावः । अत्र गृहाणां सन्तापनिमित्तः सुधाकरलेहनात्मकशीतोपचा उत्प्रेक्ष्यते सा चोक्ततद्गुणोत्थेति सङ्करः व्यञ्जकाप्रयोगाद्गम्या ॥ ९९ ॥

उस नगरीमें अनेकों मणियोंके भवन बने हैं जो दिनमें सूर्यकी तपनसे तप्त होकर, प्य हो जाते हैं अतः वे रातको अपनी अटारियोंपर लगी अपनी कान्तिसे लाल–लाल ध्वजाओं चन्द्रकी सुधा पीते हैं ॥ ९९ ॥

**लिलिहे स्वरुचा पताकया निशि जिह्वानिभया सुधाकरम् ।**
**श्रितमर्ककरैः पिपासु यन्नृपसद्मामलपद्मरागजम् ॥ १०० ॥**

अथानयैव भङ्ग्या राजभवनं वर्णयति लिलिह इति । अमल पद्मरागजं य नगर्यां नृपसद्म राजभवनं अर्ककरैः श्रितमतिसामीप्यादभिव्याप्तं श्रयतेः कर्मणि श्रिणातेः पक्वार्थादिति केचित् । तदा ह्रस्वश्चिन्त्यः प्रकृत्यन्तरं मृग्यमित्यास्तां त अतएव पिपासु तृषितं सत् पिबतेः सन्नन्तादुप्रत्ययः । स्वकीया रूपस्यान्त स्वरुचा तद्रूषितयेत्यर्थः । अत एव जिह्वानिभया पताकया सुधाकरं लिलिहे आस्व दयामास । लिहेः कर्त्तरि लिट् । स्वरितत्वादात्मनेपदं अलङ्कारश्च पूर्ववत् जिह्वानि येत्युपमा सङ्करश्च विशेषः ॥ १०० ॥

उस नगरीमें स्वच्छ पद्मराग मणिके राजभवन बने हैं जो सूर्यकी किरणोंसे दिनमें होकर रातमें अपनी प्रभापुंजित ध्वजा रूपी जीभके अग्र भागसे चन्द्रके अमृतको पीते हैं ॥१०



**अमृतद्युतिलक्ष्म पीतया मिलितं यद्वलभीपताकया ।**

वलयायितशेषशायिनस्सखितामादित पीतवाससः ॥ १०१ ॥

अमृतेति । पीतया पीतवर्णया यस्या नगर्याः वलभ्यां कूटागारन्तु वलभिरित्यमरः । पताकया मिलितं सामीप्यात्सङ्गतममृतद्युतिलक्ष्म चन्द्रलाञ्छनं वलयायिते वलयीभूते शेषे शेत इति तच्छायिनः पीतवाससः पीताम्बरस्य विष्णोः सखितां सदृशताम् आदित अग्रहीदित्युपमालङ्कारः ॥ १०१ ॥

उस नगरांके भवनोंके कूटागारों के ऊपर लगी हुई विशाल पीली पताकाओंके समीप लाञ्छनयुक्त चन्द्रमण्डल की शोभा पीताम्बरधारी कृष्णके समान होती है—कृष्ण मालूम पड़ते हैं । अर्थात्–जैसे भगवान् कृष्ण कालेरंगके हैं और पीला वस्त्र धारण कर कुण्डलीके आकारमें शेपनाग पर सोते हैं वैसे ही कूटागारों की पीली पताकाएं चन्द्रके काले लाञ्छनसे योगित होकर चन्द्रमण्डलमें, जो कुण्डलांके आकारमें हैं, शोभित होती हैं अर्थात्–विशाल कूटागारोंकी पताकाएं चन्द्रमण्डलतक परिव्याप्त हैं ॥ १०१ ॥

अश्रान्तश्रुतिपाठपूतरसनाविर्भूतभूरिस्तवा-
जिह्मब्रह्ममुखौघविघ्नितनवस्वर्गक्रियाकेलिना ।
पूर्वं गाधिसुतेन सामिघटिता मुक्ता नु मन्दाकिनी
यत्प्रासाददुकूलवल्लिरनिलान्दोलैरखेलद्दिवि ॥ १०२ ॥

अश्रान्तेति । यस्याः नगर्याः प्रासादे दुकूलं वल्लिरिव दुकूलवल्लिः दुकूलमयी पताकेत्यर्थः । अश्रान्तेन श्रुतिपाठेन नित्यवेदपाठेन पूताभ्यः पवित्राभ्यः रसनाभ्यो जिह्वाभ्यः आविर्भूतेषु भूरिस्तवेषु अनेकस्तोत्रेषु अजिह्मेन अकुण्ठेन ब्रह्मणो मुखानामोघेन हेतुना विघ्निता सञ्जातविघ्ना नवस्वर्गक्रिया नूतनस्वर्गसृष्टिरेव केलिः लीला यस्य तेन गाधिसुतेन विश्वामित्रेण पूर्वं ब्रह्मप्रार्थनात्पूर्वं सामि घटिता अर्धसृष्टा सामि त्वर्द्धे जुगुप्सन इत्यमरः। मुक्ता पश्चान्मुक्ता मन्दाकिनी नु आकाशगङ्गा किमनिलस्य कर्तुरान्दोलनैश्चलनैर्दिवि आकाशे अखेलत् विजहारेत्युत्प्रेक्षा एषा कथा त्रिशङ्कूपाख्याने द्रष्टव्या शार्दूलविक्रीडितवृत्तं सूर्याश्वैर्मसजास्ततः सगुरवः शार्दूलविक्रीडितमिति लक्षणात् ॥ १०२ ॥

उस नगरीके प्रासादोंके ऊपर फहराती हुई पताकाएं जो आंधीके झोकोंसे आकाशमें विस्तीर्णतासे उड़ती हुई खेलती हैं वे ऐसी मालूम पड़ती हैं मानो विश्वामित्र द्वारा निर्मितकी हुई आधी मन्दाकिनी ही है क्या–जिस समय विश्वामित्र त्रिशंकुके लिये ब्रह्माजी पर कुपित होकर दूसरी सृष्टि रच रहे थे। उस समय उन्होंने वह आधी नदी मन्दाकिनी बनायी है क्या । दूसरी सृष्टि बनानेसे रोकनेके लिए उन विश्वामित्रकी ब्रह्माजीने निरन्तर वेदपाठसे पवित्र जीभोंसे निःसृत अनेकों अकुण्ठित ( सरल ) अपने चारों मुखोंसे प्रार्थनापूर्वक स्तुति की थी ॥ १०२ ॥

यदतिविमलनीलवेश्मरश्मिभ्रमरितभाश्शुचिसौधवस्त्रवल्लिः ।
अलभत शमनस्वसुः शिशुत्वं दिवसकराङ्कतले चला लुठन्ती ॥ १०३ ॥

यदिति । यस्या नगर्याः अतिविमलैर्नीलवेश्मनः इन्द्रनीलनिकेतनस्य रश्मि भ्रमरिता भ्रमरीकृता भ्रमरशब्दात्तत्करोतीति ण्यन्तात् कर्मणि क्तः वल्ल्याश्च भ्र भ्रौव्यमिति भावः । तथाभूता भाः छाया यस्याः सा श्यामीकृतप्रभेत्यर्थः । अत्र तद्गुणालङ्कारः शुचिः स्वभावतः शुभ्रा सौधस्य वस्त्रमेव वल्लिः पताकेत्यर्थः । रू समासः । भ्रमरितभा इति रूपकादेव साधकात् दिवसकरस्य सूर्यस्य अङ्क समीपदेशे उत्सङ्गप्रदेशे च चला चपला लुठन्ती परिवर्त्तमाना सती शमनस्वसु मुनायाः शिशुत्वं शैशवमलभत बालयमुनेव बभावित्यर्थः । बालिकाश्च पितुरङ्के न्तीति भावः । अत्रान्यस्य शैशवेनान्यसम्बन्धासम्भवेऽपि तत्सदृशमिति सादृश्य पान्निदर्शना पूर्वोक्ततद्गुणरूपकाभ्यां सङ्कीर्णा ॥ १०३ ॥

उस नगरीमें नीले रत्नोंके भवन बने हैं जिनकी प्रभाएँ वहां भ्रमरित हो रही हैं उन भवनोंके ऊपर शुभ्र वस्त्रोंकी पताकाएं फहरा रही हैं अतः उन्हें देखकर ऐसा प्रतीत है कि, यमकी भगिनी बालिका यमुना अपने पिता दिनकर—सूर्यकी गोदमें पड़ी हुई है ।

स्वप्राणेश्वरनर्महर्म्यकटकातिथ्यग्रहायोत्सुकं
पाथोदं निजकेलिसौधशिखरादारुह्य यत्कामिनी ।
साक्षादप्सरसो विमानकलितव्योमान एवाभव-
द्यत्र प्राप निमेषमभ्रतरसा यान्ती रसादध्वनि ॥ १०४ ॥

स्वेति । यत्कामिनी यन्नगराङ्गना विमानेन कलितं क्रान्तं व्योम याभिस्ताः सा दप्सरसो दिव्याङ्गनैवाभवत् । स्त्रियां बहुष्वप्सरस इत्यभिधानादेकत्वेऽपि बहुवच योगः कृतः यद्यस्मान्निजकेलिसौधशिखरादपादानात् स्वप्राणेश्वरस्य नर्महर्म्यं क्री सौधं तस्य कटकान्नितम्बादातिथ्यस्य ग्रहाय स्वीकाराय तत्र विश्रमार्थमित्यर्थः । उ कमुद्युक्तं गच्छन्तमित्यर्थः । पाथोदं मेघमारुह्य रसाद्रागाद् यान्ती गच्छन्ती अ अभ्रतरसा मेघवेगेन हेतुना निमेषं न प्राप । अत्र नगरामराङ्गनयोर्भेदेऽपि अनिमे घारोहणव्योमयानैः सैव इत्यभेदोक्तेरतिशयोक्तिभेदः । शार्दूलविक्रीडितं वृत्तम् ॥

उस नगरीमें अंगनाएं अपने भवनोंकी अटारियोंसे ऊपरकी ओर अपने प्राणेश्वरोंके गृहोंमें, जिन क्रीडागृहोंके चारों ओर मेघगण विश्रामार्थ ठहरे रहते हैं जाती हुई प्राणेश्वरोंके साथ मिलनेकी उत्सुकतामें अपने नेत्रके पलकोंको न गिराती हुई—एक टक दे हुई ऊपरकी ओर जाती हुई साक्षात् मेघके ऊपर आकाश मार्गसे जाती हुई इन्द्रकी अप्स के तुल्य ज्ञात होती हैं ॥ १०४ ॥

वैदर्भीकेलिशैले मरकतशिखरादुत्थितैरंशुदर्भै-
र्ब्रह्माण्डाघातभग्नस्यदजमदतया ह्रीधृतावाङ्मुखत्वैः ।
कस्या नोत्तानगाया दिवि सुरसुरभेरास्यदेशं गताग्रै-



र्यद्ग्रासप्रदानव्रतसुकृतमविश्रान्तमुज्जृम्भते स्म ॥ १०५ ॥

वैदर्भीति । उत्ताना वै देवगवा वहन्तीति श्रुत्यर्थमाश्रित्याह । वैदर्भीकेलिशैले मरकतशिखरादुत्थितैः अथ ब्रह्माण्डाघातेन भग्नो स्यदजमदो वेगगर्वो येषां तत्तया ह्रिया धृतं अवाङ्मुखत्वं यैस्तैरधोमुखैः अतएव दिवि उत्तानगाया ऊर्ध्वमुखाया इत्यर्थः । कस्याः सुरसुरभेः देवगव्या आस्यदेशं गताग्रैरंशुभिरेव दर्भैर्यस्या नगर्याः सम्बन्धि गोग्रासप्रदानव्रतसुकृतमविश्रान्तं नोज्जृम्भते स्म किन्तु सर्वस्य अपि ग्रासदानाद्युत्तत्सुकृतमेवोज्जृम्भितमित्यर्थः । अत्युक्तमालङ्कारोऽयमिति केचित् अंशुदर्भाणां ब्रह्माण्डाघाताद्यसम्बन्धेऽपि सम्बन्धोक्तेरतिशयोक्तिः भेदः । स्रग्धरावृत्तं म्रभ्नैर्यानां त्रयेण त्रिमुनियतियुता स्रग्धरा कीर्तितेयमिति लक्षणात् ॥ १०५ ॥

उस नगरीमें दमयन्तीका पन्नेका बना हुआ क्रीड़ा शैल है जिसकी किरणोंकी प्रभाएं उसमेंसे निकलकर ऊपर ब्रह्माण्डकी अन्तिम सीमा तक जाती हैं तथा और उसके आगे न जानेसे वे अधोमुखी होकर नीचेको क्रीड़ाशैलको ओर पुनः लौटती हैं। बीचमें देवगौको जिसका मुख सदा ऊपरकी ओर ही रहता है, अपनी किरणरूपी कुशके घासको उसके मुंहमें पर्याप्त रूपसे खिलाती हैं। इस रीतिसे वह नगरी देवगौको खिलानेका पुण्य प्राप्त करती है ॥१०५॥

विधुकरपरिरम्भादात्तनिष्यन्दपूर्णैः
शशिदृषदुपक्लृप्तैरालवालैस्तरूणाम् ।
विफलितजलसेकप्रक्रियागौरवेण
व्यरचि स हृतचित्तस्तत्र भैमीवनेन ॥ १०६ ॥

विध्विति । तत्र तस्यां नगर्यां शशिदृषदुपक्लृप्तैश्चन्द्रकान्तशिलाबद्धैः अत एव विधुकरपरिरम्भात् चन्द्रकिरणसम्पर्कात् हेतोः आत्तनिष्यन्दैः जलप्रस्रवणैरेव पूर्णैस्तरूणामालवालैर्विफलितं व्यर्थीकृतं जलसेकस्य प्रक्रियायां प्रकारे गौरवं भारो यस्य तेन भैमीवनेन स हंसो हृतचित्तो व्यरचि कर्मणि लुङ् । अत्रालवालानां चन्द्रकान्तनिष्यन्दासम्बन्धेऽपि सम्बन्धोक्तेरतिशयोक्तिभेदः । एतदारभ्य चतुःश्लोकपर्यन्तं मालिनीवृत्तं ननमयययुतेयं मालिनी भोगिलोकैरिति लक्षणात् ॥ १०६ ॥

उस नगरीके उस उपवन द्वारा वह राजहंस अति प्रमुदित कराया गया। अर्थात्—वह राजहंस उस उपवनको देखकर अति हर्षित हुआ। वहां पर चन्द्रकान्त मणियोंकी शिलाओंके फर्श बने हैं जो रातमें चन्द्रके सम्पर्कसे द्रवित होते हैं और उनमेंसे जल बहने लगता है उस जलसे पेड़ोंके आलवाल भर जाते हैं। अतः प्रातः सायं जलसेचनक्रिया वहाँ नहीं करनी पड़ती है ॥ १०६ ॥

अथ कनकपतत्रस्तत्र तां राजपुत्रीं
सदसि सदृशभासां विस्फुरन्तीं सखीनाम् ।
उडुपरिषदि मध्यस्थायिशीतांशुलेखा-
नुकरणपटुलक्ष्मीमक्षिलक्ष्यीचकार ॥ १०७ ॥

अथेति । अथ दर्शनानन्तरं कनकपतत्रः स्वर्णपक्षी तत्र वने सदृशभासां आत्म-तुल्यलावण्यानां सखीनां सदसि विस्फुरन्तीं स्फुरतिस्फुलत्योर्निर्निविभ्य इति पत्वं उडुपरिषदि तारकासमाजे मध्यस्थायिन्याः शीतांशुलेखायाश्चन्द्रकलायाः अनुकरणे पटुः समर्था लक्ष्मीः शोभा यस्याः सा इत्युपमालङ्कारः । तां राजपुत्रीं अचिलक्ष्यं चकार अद्राक्षीदित्यर्थः ॥ १०७ ॥

ततः उस राजहंसने जिसके सुवर्णके पंख थे उस राजपुत्री दमयन्तीको अपने सदृश कान्ति-वयवाली सखियोंकी सभामें देखा। उसकी शोभा उस समय ऐसी हो रही थी जैसी तारागणोंकी सभामें चन्द्रलेखाकी शोभा होती है। मानो वह दमयन्ती तारागणोंके मध्य विराजमान चन्द्रलेखाकी शोभाके अनुकरणमें अति प्रवीणा हो॥ १०७॥

भ्रमणरयविकीर्णस्वर्णभासा खगेन
क्वचन पतनयोग्यं देशमन्विष्यताधः ।
मुखविधुमदसीयं सेवितुं लम्बमानः
शशिपरिधिरिवोच्चैर्मण्डलस्तेन तेने ॥ १०८ ॥

भ्रमणेति । अधो भूतले क्वचन कुत्रचित्पतनयोग्यं देशं स्थानं अन्विष्यता गवेषमाणेन अतएव भ्रमणरयेण विकीर्णा स्वर्णस्य भा दीप्तिर्यस्य तेन खगेन अमुष्या अयं अदसीयं वृद्धाच्छः स्यदादीनि चेति वृद्धिसंज्ञा मुखविधुं मुखेन्दुं सेवितुं लम्बमानः स्रंसमानः शशिपरिधिः चन्द्रपरिवेष इव उच्चैरुपरि मण्डलो वलयः तेने वितेने, तनोतेः कर्मणि लिट् । उत्प्रेक्षास्वभावोक्त्योः सङ्करः ॥ १०८ ॥

तदनन्तर उस राजहंसने उस राजकन्या दमयन्तीके मुखरूपी चन्द्रकी परिक्रमा कर अपने ठहरनेके लिए स्थानको खोजते हुए अपनी मण्डलाकार (चक्करदार) चालसे उस मुखरूपी चन्द्रपर मण्डल बना दिया। चन्द्रमाके उदय होनेपर उसका भी मण्डल बनता है। पक्षियों का स्वभाव है कि वे नीचे उतरनेके समय चक्कर लगा कर उतरते हैं॥ १०८॥

अनुभवति शचीत्थं सा घृताचीमुखाभि-
र्न सह सहचरीभिर्नन्दनानन्दमुच्चैः ।
इति मतिरुदयासीत्पक्षिणः प्रेक्ष्य भैमीं
विपिनभुवि सखीभिस्सार्धमाबद्धखेलाम् ॥ १०९ ॥

अनुभवतीति । विपिनभुवि वनप्रदेशे सखीभिः सहचरीभिः सख्यशिश्वीति भाषायामिति निपातनात् ङीप् । सार्द्धं आबद्धखेलां अनुबद्धक्रीडां क्रीडा खेला कूर्दनमित्यमरः । भैमीं प्रेक्ष्य पक्षिणः सा प्रसिद्धा शची इन्द्राणी घृताचीमुखाभिः सहचरीभिः सह इत्थमुच्चैरुत्कृष्टं नन्दनानन्दं नन्दनसुखं नानुभवतीति मतिः बुद्धिः उदयासीदुत्थिता । अत्र प्रेक्ष्य मतिरिति मननक्रियापेक्षया समानकर्तृकत्वात्

ञ्चाल्त्वाच्च प्रेदयेति क्त्वानिर्देशोपपत्तिः तावन्मात्रस्यैव तत्प्रत्ययोत्पत्तौ प्रयोजकत्वात्, प्राधान्यन्त्वप्रयोजकमिति न कश्चिद्विरोधः। अत्रोपमानादुपमेयस्याधिक्योक्तेर्व्यतिरेकालङ्कारः, भेदप्रधानसाधर्म्यमुपमानोपमेययोः। आधिक्याद्ल्पकथनाद्व्यतिरेकः स उच्यते॥ इति लक्षणात्॥ १०९॥

तदुपरान्त उस राजहंसने उस उपवनमें सखियोंके साथ क्रीड़ा करती हुई उस राजकुमारी दमयन्तीको देखकर इस बातका अनुभव किया कि वह राजकुमारी उन सखियोंके साथ क्रीड़ा करती हुई नन्दन वनमें घृताची प्रभृति स्वर्गको अप्सराओंसे भी अधिक आनन्द प्राप्त कर रही हैं॥ १०९॥

श्रीहर्षं कविराजराजिमुकुटालङ्कारहीरस्सुतं
श्रीहीरस्सुषुवे जितेन्द्रियचयं मामल्लदेवी च यम्।
द्वैतीयीकतया मितोऽयमगमत्तस्य प्रबन्धे महा-
काव्ये चारुणि नैषधीयचरिते सर्गो निसर्गोज्ज्वलः॥ ११०॥

श्रीहर्षमित्यादि। व्याख्यातम्। द्वितीय एव द्वैतीयीकः द्वितीयादीकक् स्वार्थे वक्तव्य इतीकक् द्वैतीयीकतया मितो द्वितीयत्वेन गणित द्वितीयः इत्यर्थः अगमत्॥

इति पदवाक्यप्रमाणपारावारपारीणमहोपाध्यायकोलाचल–मल्लिनाथसूरिविरचितायां जीवातुसमाख्यायां नैषधटीकायां द्वितीयः सर्गः समाप्तः।

---

इस श्लोक की व्याख्या प्रथम सर्ग के समान समझें॥ ११०॥

इस रीतिसे नैषधचरितकी "प्रबोधिनी" हिन्दी टीकामें द्वितीय सर्ग समाप्त हुआ।

---

# तृतीयः सर्गः

आकुञ्चिताभ्यामथ पक्षतिभ्यां नभोविभागात्तरसाऽवतीर्य ।
निवेशदेशाततधूतपक्षः पपात भूमावुपभैमि हंसः ॥ १ ॥

**आकुञ्चिताभ्यामिति । अथ मण्डलीकरणानन्तरं हंसः । आकुञ्चिताभ्यां पक्षतिभ्यां पक्षमूलाभ्यां नभोविभागादाकाशदेशात्तरसा वेगेनावतीर्य निवेशदेशे उपनिवेशस्थ आततौ विस्तारितौ धूतौ कम्पितौ च पक्षौ येन सः तथा सन्नुपभैमि भैम्याः समी सामीप्येऽव्ययीभावः नपुंसकं ह्रस्वत्वं च, भूमौ पपात । स्वभावोक्तिरलङ्कारः ॥ १ ॥**

कुमारी दमयन्तीके मुखेन्दुपर मण्डल बनानेके पश्चात् वह राजहंस अपने पंखोंको सं चित करके आकाश प्रदेशसे वेगसे झपट्टा मारकर कुमारी दमयन्तीके समीप पृथ्वीतलपर उपवनमें उतरा और अपने पंखोंको बार-बार वहांकी भूमिपर फड़फड़ाने लगा—कुमारी अपनी ओर आकृष्ट करनेके लिए, तथा पक्षियोंकी प्रकृति भी दूरसे आकर विराम करने पंखों को फड़फड़ाने की होती है ॥ १ ॥

आकस्मिकः पक्षपुटाहतायाः क्षितेस्तदा यः स्वन उच्चचार ।
द्रागन्यविन्यस्तदृशः स तस्याः संभ्रान्तमन्तःकरणञ्चकार ॥ २ ॥

**आकस्मिक इति । तदा पतनसमये पक्षपुटाहतायाः क्षितेः । अकस्माद्भवः आक स्मिकः अदृष्टहेतुको निर्हेतुक इत्यर्थः । यः स्वनो ध्वनिरुच्चचार उत्थितः स स्वनः अन्य विन्यस्तसदृशः विषयान्तरनिविष्टदृष्टेस्तस्याः भैम्याः अन्तःकरणं द्राक् झटि सम्भ्रान्तं ससंभ्रमं चकार । अकाण्डे सम्भावितशब्दश्रवणाच्चमत्कृतचित्ताभूदित्यर्थः स्वभावोक्तिः ॥ २ ॥**

तदा उस उपवन भूमिपर राजहंसके पंखोंकी ( उस फड़फड़ाहटसे उत्पन्न ) आकस्मि ध्वनिने कुमारी दमयन्तीकी अन्यपदार्थगत ईक्षण वृत्तिको सम्भ्रमितकर अपनी ओर आ कर लिया और उसके अन्तःकरणमें उत्सुकता उत्पन्न कर दी । अर्थात्—कुमारी दमयन् उसको उत्सुकतासे देखने लगी । अकस्मात् किसी शब्दको श्रवणकर लोग उस ओर दे ही हैं ॥ २ ॥

नेत्राणि वैदर्भसुतासखीनां विमुक्ततत्तद्विषयग्रहाणि ।
प्रापुस्तमेकं निरुपाख्यरूपं ब्रह्मेव चेतांसि यतव्रतानाम् ॥ ३ ॥

**नेत्राणीति । विदर्भाणां राजा वैदर्भः । तस्य सुतायाः भैम्याः सखीनां नेत्र विमुक्तास्तत्तद्विषयग्रहाः तत्तदर्थग्रहणानि अन्यत्र तत्तद्विषयासङ्गो यैस्तानि सन्ति ए मेकचरम् अद्वितीयञ्च नोपाख्यायत इति निरुपाख्यमवाच्यं रूपमाकारः, स्व स्व च यस्य तं सुरोर्वचनं हंसं तत्पदार्थभूतक ... ब्रह्मवादीनां योगिनां चेतांसि परात्मानमिव प्रापुः अत्यादरेणाद्राक्षुरित्यर्थः ॥ ३ ॥**

विदर्भराजपुत्री कुमारी दमयन्तीको सखियोंके नेत्रोंने अन्य पदार्थोंकी ओर अवलोकन करना त्यागकर केवल एक उस अवर्णनीय आकृतिवाले राजहंसको देखना वैसे प्रारम्भ किया, जैसे कोई योगी अपने अन्तःकरणमें विराजमान ब्रह्मकी प्राप्तिके हेतु केवल उसीकी ओर आकृष्ट होता है और अन्य सांसारिक विषयोंकी ओर विरक्त हो जाता है ॥ ३ ॥

**हंसं तनौ सन्निहितं चरन्तं मुनेर्मनोवृत्तिरिव स्विकायाम् ।**
**ग्रहीतुकामादरिणा शयेन यत्नादसौ निश्चलतां जगाहे ॥ ४ ॥**

हंसमिति । असौ दमयन्ती मुनेर्मनोवृत्तिरिव स्विकायां स्वकीयायां प्रत्ययस्थात् पूर्वस्येतीकारः । तनौ शरीरान्तिके अन्यत्र तदभ्यन्तरे सन्निहितमासन्नमाविर्भूतं चरन्तं सञ्चरन्तं वर्त्तमानं च हंसं मरालं परमात्मानं च हंसो विहङ्गभेदे च परमात्मनि मत्सर इति विश्वः।अदरिणा निर्भीकेण शयेन पाणिना दरो स्त्रियां भये श्वभ्रे; पञ्चशाखः शयः पाणिरित्यमरः । अन्यत्र आदरिणा आदरवता आशयेन चित्तेन ग्रहीतुकामा आदरात् कर्त्तुकामा च यत्नात् निश्चलतां निश्चलाङ्गत्वं जगाहे जगाम ॥ ४ ॥

कुमारी दमयन्ती उस राजहंसको जो उसके शरीरके समीप सञ्चरण कर रहा था । अपने निःशंक हाथोंसे पकड़नेके लिए अति सावधानीसे निश्चलांगी होकर उसी प्रकार स्थित हो गयी। जिस प्रकार मुनियोंकी चित्तवृत्ति योगसे उद्बुद्ध अपने शरीरके अभ्यन्तरमें विचरण करनेवाले परम तत्त्वको प्राप्त करने के लिए स्थिर ( निश्चलाङ्ग ) हो जाती है। अर्थात्—वह उसे नेत्र गड़ागड़ा कर देखने लगीं ॥ ४ ॥

**तामिङ्गितैरप्यनुमाय मायामयं न धैर्याद्वियदुत्पपात ।**
**तत्पाणिमात्मोपरिपातुकं तु मोघं वितेने प्लुतिलाघवेन ॥ ५ ॥**

तामिति । अयं हंसस्तां पूर्वोक्तां मायां कपटं इङ्गितैश्चेष्टितैरनुमाय निश्चित्यापि धैर्यात् स्थैर्यमास्थाय ल्यब्लोपे पञ्चमी । वियदाकाशं प्रति नोत्पपात नोत्पतितवान् आत्मन उपरि पातुकम्पतयालुं लषपतेत्यादिना उकञ् प्रत्ययः । तस्याः पाणिं तु प्लुतिलाघवेन उत्पतनकौशलेन मोघं वितेने विफलयत्नम् अकरोत् आशाञ्च जनयति न तु पाणौ लगतीत्यर्थः ॥ ५ ॥

वह राजहंस कुमारी दमयन्तीकी ( अपनेको ) पकड़नेकी चेष्टाओं तथा माया जालको (झुककर निश्चलांग रहना—आदि ) जान कर भी धीरज धारण करके आकाशमें न उड़ा और अपने उत्पतन कौशलसे दमयन्तीके हाथोंको भी अपने ऊपर न स्पर्शित होने दिया—तथा कुमारीके उपायोंको विफल कर दिया । अर्थात् कुमारी दमयन्तीको आशा तो कर दी कि 'इस बार पकड़ लूंगी' परन्तु अपने उड़नेकी सुन्दर कलासे वह धीरे-धीरे उड़ने पर भी उसके हाथ न लगा ॥ ५ ॥

**व्यर्थीकृतं पत्ररथेन तेन तथाऽवसाय व्यवसायमस्याः ।**
**परस्परामर्पितहस्ततालं तत्कालमालीभिरहस्यतालम् ॥ ६ ॥**

व्यर्थीकृतमिति । अस्याः भैम्याः व्यवसायं हंसग्रहणोद्योगं तेन पत्ररथेन पक्षिणा व्यर्थीकृतं तथावसाय ज्ञात्वा तत्कालं तस्मिन् काले अत्यन्तसंयोगे द्वितीया । स एव कालो यस्येति बहुव्रीहौ क्रियाविशेषणं वा परस्परां परस्परस्यामित्यर्थः । कर्मव्यतीहारे सर्वनाम्नो द्विर्भावः समासवच्च बहुलमिति बहुलग्रहणादसमासवद्भावे पूर्वपदस्य प्रथमैकवचने कस्कादित्वाद्विसर्जनीयस्य सत्वं उत्तरपदस्य यथायोगं द्वितीयाद्येकवचनं स्त्रीनपुंसकयोरुत्तरपदस्थाया विभक्तेराम्भावो वक्तव्य इति विकल्पादामादेशः । अपि हस्ततालं दत्तहस्तताडनं यथा तथा आलीभिः सखीभिरलं अत्यर्थं अहस्यत हसितं भावे लङ् ॥ ६ ॥

उस कुमारी दमयन्तीके प्रयत्नोंको उस राजहंस द्वारा विफलित हुए देखकर उसी समय परस्पर हस्तोंसे तालियां बजाकर उसकी वे सब सखियां हंस पड़ीं ॥ ६ ॥

उच्चाटनीयः करतालिकानां दानादिदानीं भवतीभिरेषः ।
यान्वेति मां द्रुह्यति मह्यमेव सात्रेत्युपालम्भि तयालिवर्गः ॥ ७ ॥

उच्चाटनीय इति । हे सख्यः ! भवतीभिरेष हंसः करतालिकानां दानादन्योन्यं हस्तताडनकरणादुच्चाटनीयः निष्कासनीयः किमिति काकुः नोच्चाटनीय एवेत्यर्थः । अत्र आसु मध्ये या मामन्वेति सा मह्यमेव द्रुह्यति मां जिघांसतीत्यर्थः । क्रुधद्रुहे-त्यादिना सम्प्रदानत्वात् चतुर्थी । इतीत्थं तया भैम्या आलिवर्गः सखीसंघः उपा-लम्भि अशापि शापेनैव निवारित इत्यर्थः ॥ ७ ॥

इस ताली पीटने पर कुमारी दयमन्ती ने क्रोधित होकर उपालम्भ ( उलहना ) देते हुए सखियोंसे कहा—"हे सखियो ! तुम्हीं लोगोंने तालियां पीटकर इस हंसको भगा दिया अब जो कोई तुम लोगों में से मेरे पीछे आवेगा वह मेरे साथ शत्रुता करेगा ।" ॥ ७॥

धृताल्पकोपा हसिते सखीनां छायेव भास्वन्तमभिप्रयातुः ।
श्यामाथ हंसस्य करानवाप्तेर्मन्दाक्षलक्ष्या लगति स्म पश्चात् ॥ ८ ॥

धृतेति । अथ सखीनिवारणानन्तरं सखीनां हसिते हासनिमित्ते धृताल्पकोपा तासु ईषत्कोपा इत्यर्थः । भास्वन्तमभिप्रयातुः सूर्याभिमुखं गच्छतः छाया अनातप-रेखेव श्यामा यौवनमध्यस्था, श्यामा यौवनमध्यस्था इत्युत्पलमालायां । अन्यत्र श्यामा नीला हंसस्य कर्मणि षष्ठी । करेण हस्तेन अनवाप्तेरग्रहणाद्धेतोर्मन्दाक्षं ह्रीलज्जा लक्ष्या उपलक्ष्या हीणा सतीत्यर्थः । अन्य हंसस्य सूर्य्यस्य करानवाप्तेः अंशुसंस्प-र्शाभावात् मन्दाक्षैरपटुदृष्टिभिर्लक्ष्या ग्राह्या तैः छाया लक्ष्यते न प्रकाश इति भावः । पश्चाल्लगति स्म पृष्ठे लग्नाभूत् प्राप्त्याशया तमन्वगात् रविश्वेतच्छदौ हंसौ; बलि-हस्तांशवः करा इति चामरः ॥ ८ ॥

सखियोंको निवारित करनेके पश्चात् श्यामा ( युवती ) दमयन्ती अपनी सखियों पर कुछ क्रोधित होकर तथा उस राजहंस को हाथसे न प्राप्त करनेके कारण कुछ लज्जित होकर

इस प्रकार राजहंसके पीछे पीछे चली, जिस प्रकार सूर्याभिमुखो होकर कोई व्यक्ति चलता है और उसकी छाया भी पीछे पीछे चलती है ॥ ८ ॥

शस्ता न हंसाभिमुखी तवेयं यात्रेति ताभिश्छलहस्यमाना।
साह स्म नैवाशकुनीभवेन्मे भाविप्रियावेदक एष हंसः॥ ९॥

शस्तेति। तवेयं हंसस्य श्वेतच्छदस्य सूर्यस्य चाभिमुखी यात्रा गमनं न शस्ता न प्रशस्ता श्रेयस्करी न शास्त्रविरोधात् श्रमसन्तापदृष्टदोषाच्चेति भावः। इतीत्थन्ताभिः छलेन व्याजोक्त्या हस्यमाना सती भाविप्रियावेदको मङ्गलमूर्त्तित्वादागामिशुभ-सूचकः एष हंसो मे मम नाशकुनीभवेदेव किन्तु शकुनमेव भवेदित्यर्थः। अपत्ती न भवेदिति च गम्यते शकुनन्तु शुभाशंसा निमित्ते शकुनः पुमानिति विश्वः। अभूत तद्भावे च्विः विध्यादिसूत्रेण प्रार्थने लिङ्। इत्याहस्म अवोचत् ब्रुवः पञ्चानामित्याहा-देशः एतेन तदीययात्रानिषेधोक्तदोषः परिहृतो वेदितव्यः ॥ ९ ॥

राजहंसके पीछे-पीछे चलनेवाली कुमारी दमयन्तीको उसकी सखियोंने हंसते हुए श्लेष वाक्योंसे उस राजहंसके पीछे जानेसे रोकते हुए कहा—"हे दमयन्ती। हंस (सूर्य) के अभिमुख होकर यात्रा करना शास्त्रानुसार अश्रेयस्कर है।" अर्थात्—आपका यह हंसानुसरण ठीक नहीं। इसपर कुमारी दमयन्तीने उत्तर देते हुए कहा—"यह हंस (पक्षी) आगामी बातोंके लिए शुभदायी है। अतः इसका अनुसरण उचित है। शास्त्रानु-सार हंसकी आंखोंका दर्शन यात्रामें शुभप्रद होता है और यह मङ्गल मूर्त्तिवाला भी है—स्वर्णपक्षी है ॥ ९ ॥

हंसोऽप्यसौ हंसगतेस्सुदत्याः पुरःपुरश्चारु चलन् बभासे।
वैलक्ष्यहेतोर्गतिमेतदीयामग्रेऽनुकृत्योपहसन्निवोच्चैः॥ १०॥

एवं दमयन्ती व्यापारमुक्त्वा सम्प्रति हंसस्य व्यापारमाह हंसोऽपीति। असौ हंसोऽपि हंसस्य गतिरिव गतिर्यस्यास्तस्याः सुदत्याः शोभनदन्तायाः भैम्याः सुदती व्याख्याता। पुरःपुरः वीप्सायां द्विर्भावः। अग्रे समन्तात्, चारु चलन् रम्यं गच्छन् सन् वैलक्ष्यमेव हेतुस्तस्य वैलक्ष्यहेतोः अहो मामयमतिविडम्बयतीति तस्या अपि विस्मयजननार्थमित्यर्थः। विलक्षो विस्मयान्वित इत्यमरः। षष्ठी हेतुप्रयोग इति षष्ठी एतदीयाकृतिमनुकृत्य अभिनीय उच्चैरुपहसन्निवेत्युत्प्रेक्षा बभासे बभौ। लोके परि-हासकाः तच्चेष्टाद्यनुकरणेन परान् विलक्षयन्ति ॥ १० ॥

(उपर्युक्त रीतिसे राजहंसके विषयमें कहकर अब कुमारी दमयन्तीके विषयमें कहते हैं—)

हंसकी गतिसे चलनेवाली तथा सुन्दर दांतोंवाली उस कुमारी दमयन्तीके आगे-आगे सुन्दर चालसे चलता हुआ वह राजहंस ऐसा मालूम पड़ता था। जैसे—वह राजहंस उसी कुमारी की चालसे आगे-आगे चलकर उसे विस्मयान्वित करता हुआ प्रगाढ़ उपहास कर रहा हो।" संसारमें दर्शकोंको आश्चर्यान्वित करनेके लिए बहुरूपिये उन्हींके रूप बनाकर

उनकी चाल–ढ़ालोंसे आश्चर्यान्वित करते ही हैं। तद्वत् राजहंसने भी उसे आश्चर्यान्वित किया। अर्थात्—वह कुमारी दमयन्ती राजहंसानुगामिनी थी॥ १०॥

**पदे पदे भाविनि भाविनी तं यथा करप्राप्यमवैति नूनम्।**
**तथा सखेलं चलता लतासु प्रतार्य तेनाचकृषे कृशाङ्गी॥ ११॥**

पदे पद इति। भावयन्तीति भाविनी हंसग्रहणमेव मनसा भावयन्ती कृशाङ्गी भैमी भाविनि भविष्यत्यनन्तर इत्यर्थः। भविष्यति गम्यादय इति साधुः पदे पदे तं हंसं यथा करप्राप्यं कराग्राह्यं नूनं निश्चितमवैति प्रत्येति तथा सखेलं चलता गच्छता तेन हंसेन प्रतार्य वञ्चयित्वा लतासु आचकृषे आकृष्टा एकान्तं नीतेत्यर्थः॥ ११॥

वह कृशाङ्गी कुमारी दमयन्ती उस राजहंसके आगामी (प्रति पदकी) गतिपर निश्चय पूर्वक विश्वास करती थी कि "अबकी इसको पकड़ लूँगी" परन्तु, पकड़ नहीं पाती थी। इसी प्रकार पीछे-पीछे लाते हुए राजहंसने उसे ठगकर लीलापूर्वक एक लताके समीप ला दिया। अर्थात् उसे एकान्तमें वह ले आया॥ ११॥

**रुषा निषिद्धालिजनां यदैनां छायाद्वितीयां कलयाञ्चकार।**
**तदा श्रमाम्भःकणभूषिताङ्गीं स कीरवन्मानुषवागवादीत्॥ १२॥**

रुषेति। रुषा निषिद्धालिजनां निवारितसखीजनां एनां यदा छाया एव द्वितीया यस्यास्तामेकाकिनीं कलयांचकार विवेद तदा श्रमाम्भःकणभूषिताङ्गीं स्वेदाम्बुलव परिष्कृतशरीरां स्विन्नगात्रान्तां स हंसः कीरवत् शुकवन्मनुष्यस्येव वाग्यस्य स सन्नवादीत्॥ १२॥

जब राजहंसने कुमारी दमयन्तीको छायामात्र साथिनी-(एकाकिनी) समझ लिया। क्योंकि उसने क्रोधसे अपनी सखियोंको आनेको मना कर दिया था अतः वे लोग नहीं आ रही थीं। तब सुग्गेके समान मनुष्य वाणीसे उस कुमारी दमयन्तीसे बोलने लगा जो परिश्रमजनित जलकण रूपी मोतियोंसे सुसज्जित हो रही थी॥ १२॥

**अये कियद्यावदुपैषि दूरं व्यर्थं परिश्राम्यसि वा किमर्थम्।**
**उदेति ते भीरपि किन्नु बाले विलोकयन्त्या न घना वनालीः॥ १३॥**

अय इति। अये बाले! व्यर्थं कियद्दूरं यावदुपैषि उपैष्यसि? यावत्पुरानिपातयोर्लट्। किमर्थं परिश्राम्यसि वा? घनाः सान्द्राः वनालीर्वनपंक्तीर्विलोकयन्त्यास्ते भीरपि नोदेति किन्नु? ॥ १३॥

अये, बाले! क्यों व्यर्थ इतनी दूर आयीं? क्यों परिश्रम कर रही हैं? इस घनी वनपंक्तिको देखकर आपको भय भी नहीं उत्पन्न होता क्या? ॥ १३॥

**वृथार्पयन्तीमपथे पदं त्वां मरुल्ललत्पल्लवपाणिकम्पैः।**
**आलीव पश्य प्रतिषेधतीयं कपोतहुङ्कारगिरा वनाली॥ १४॥**



वृथेति। वृथा व्यर्थमेव न पन्था अपथं ऋक्पूरित्यादिना समासान्तः अः, अपथे

नपुंसकं तस्मिन्नपथे दुर्मार्गे अकृत्ये च पदं पादं व्यवसायं च अर्पयन्तीं पदं व्यवसित्राणस्थानलक्ष्माङ्घ्रिवस्तुष्वित्यमरः। मरुता ललन् चलन् पल्लव एव पाणिस्तस्य कम्पैः कपोतहुङ्कारगिरा च वनालिः आलीव सखीव प्रतिषेधति निवारयति पश्य इति वाक्यार्थः कर्म। यथा लोके अमार्गप्रवृत्तं सुहृज्जनः पाणिना वाचा च वारयति तद्वदित्यर्थः। अतएव पल्लवपाणीत्यादौ रूपकाश्रयणं तत्सङ्कीर्णा वनाल्यालीवेत्युपमा ॥ १४ ॥

हे कुमारी ! व्यर्थ ही ( अपथमें पदको अर्पण करनेवाली आपको, यह वनश्रेणी पवन द्वारा चञ्चलायमान अपने पल्लवरूपी हाथोंको कंपाकर तुम्हारी सखीरूपमें होकर, कबूतरोंकी वाणियोंसे निवारित कर रही है ॥ १४॥

धार्यः कथंकारमहं भवत्या वियद्विहारी वसुधैकगत्या ।
अहो शिशुत्वं तव खण्डितं न स्मरस्य सख्या वयसाप्यनेन ॥ १५ ॥

धार्य इति। एकत्रैव गतिर्यस्यास्तया एकगत्या वसुधायामेकगत्या भूमात्रचारिण्येत्यर्थः। शिवभागवतवत्समासः। भवत्या वियद्विहारी खेचरोऽहं कथङ्कारं कथमित्यर्थः। अन्यथैवं कथमित्थंसु सिद्धाप्रयोगश्चेदिति कथंशब्दोपपदात्करोतेर्णमुल्। धार्यो धर्तुं ग्रहीतुं शक्य इत्यर्थः। शकि लिङ् चेति चकाराच्छक्यार्थे कृत्यप्रत्ययः। अनेन स्मरस्य सख्या सखिना तदुद्दीपकेन वयसा यौवनेन सखिशब्दस्य भाषितपुंस्कत्वात् पुंवद्भावः। न खण्डितं न निवर्त्तितं अहो विरुद्धवयसोरेकत्र समावेशादाश्चर्यमित्यर्थः। अत्राधार्यत्वस्य वसुधागतिवियद्विहारपदार्थहेतुकत्वादेकः काव्यलिङ्गभेदस्तथा शैशवाखण्डनस्य पूर्ववाक्यार्थहेतुकत्वादपर इति सजातीयसङ्करः ॥ १५ ॥

हे कुमारी ! केवल पृथिवीपर ही विचरण करनेवाली आपके द्वारा मैं नभचर कैसे पकड़ा जा सकता हूं। आश्चर्य है कि, आपकी शिशुता इस कामदेवकी मित्रवाली वयमें नहीं दूर हुई है। अर्थात् —आपकी, तरुणावस्थाके समयमें भी, शिशुता नहीं गयी। १५॥

सहस्रपत्रासनपत्रहंसवंशस्य पत्राणि पतत्रिणः स्मः ।
अस्मादृशां चाटुरसामृतानि स्वर्लोकलोकेतरदुर्लभानि ॥ १६ ॥

अथ प्रस्तुतोपयोगितया निजान्वयं निवेदयति सहस्रेति। सहस्रपत्रासनस्य कमलासनस्य पत्रहंसा वाहनहंसाः तेषां वंशस्य कुलस्य वेणोश्च पत्राणि वाहनानि पर्णानि च वंशो वेणौ कुले वर्गे, पत्रं स्याद्वाहने पर्णे इति च विश्वः। पतत्रिणः स्मः ब्रह्मवाहनहंसवंश्याः वयमित्यर्थः। अस्मानिव पश्यन्तीति अस्मादृशामस्मद्विधानान्यदादिष्वित्यादिना दृशेः क्विन् चाटुषु सुभाषितेषु ये रसाः शृङ्गारादयः त एव अमृतानि स्वर्लोके लोका जनाः लोकस्तु भुवने जन इत्यमरः। तेभ्यः इतरैर्मनुष्यैर्दुर्लभानि लब्धुमशक्यानीत्यर्थः ॥ १६ ॥



हे कुमारी ! कमलासनवाले ब्रह्माजीके वाहनभूत राजहंस पक्षियोंके वंशमें मैं उत्पन्न

हुआ हूँ । मेरे ऐसे पक्षियोंके सुभाषित अमृतोपम रसयुक्त वचनोंके आनन्दको स्वर्गलोकमें न रहनेवाले मनुष्य नहीं प्राप्त कर सकते हैं ॥ १६ ॥

स्वर्गापगाहेममृणालिनीनां नालामृणालाग्रभुजो भजामः ।
अन्नानुरूपां तनुरूपऋद्धिं कार्यं निदानाद्धि गुणानधीते ॥ १७ ॥

अथ स्वाकारस्य कनकमयत्वे कारणमाह स्वर्गेति । स्वर्गापगा स्वर्णदी तस्या हेममृडालिन्यस्तासां या नालाः काण्डाः यानि मृडालानि कन्दाश्च अत्र नालामृणालशब्दस्य शब्दानुशासनं केषां शब्दानामितिवत्समासे गुणभूतेन सम्बन्धः सोढव्यः नाला नालमथास्त्रियामित्यमरवचनान्नालेति स्त्रीलिङ्गनिर्देशः न च तत्रापि सन्देहः । तद् व्याख्यानेषु देशान्तरकोशेषु च स्त्रीलिङ्गपाठस्यैव दर्शनात् तथा च दशमे सर्गे प्रयोक्ष्यते मृदुत्वमप्रौढमृणालनालया इति, नाला स्याद्बिसकन्द इति विश्वः तेषामग्राणि भुञ्जत इति तद्भुजः वयमिति शेषः । अन्नानुरूपामाहारसदृशीन्तनोः शरीरस्य रूपऋद्धिं वर्णसमृद्धिं ऋत्यक इति प्रकृतिभावः भजामः प्राप्ता स्म इत्यर्थः । तथा हि कार्यं जन्यं द्रव्यं निदानादुपादानात् आख्यातोपयोग इत्यपादानता गुणान् रूपादिविशेषगुणान् अधीते प्राप्नोतीत्यर्थः । प्राप्तिविशेषवाचिनस्तत्सामान्यलक्षणात् प्रायेण आहारपरिणतिविशेषपूर्विकाः प्राणिनां कायकान्तय इति भावः । सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासः ॥ १७ ॥

हे कुमारी ! स्वर्गकी नदीमें उत्पन्न होनेवाली सुवर्ण कमलिनियोंके नाल और बिसतन्तुओंको भक्षण करनेवाले हम हैं । अतः आहार सदृशी ( जैसा भोजन वैसा वर्ण ) मेरी सुवर्णमयी देह है । क्योंकि जन्मने वाला जन्मदाताके गुणोंको अवश्य ग्रहण किये रहता है ॥

धातुर्नियोगादिह नैषधीयं लीलासरस्सेवितुमागतेषु ।
हैमेषु हंसेष्वहमेक एव भ्रमामि भूलोकविलोकनोत्कः ॥ १८ ॥

अथात्मनः क्ष्मालोकसञ्चरणे कारणमाह धातुरिति । धातुर्ब्रह्मणो नियोगादादेशादिह भूलोके नैषधीयं नलीयं लीलासरः सेवितुं क्रीडासरसि विहर्तुमित्यर्थः । आगतेषु हैमेषु हेमविकारेषु । विकारार्थेऽण् प्रत्ययः । नस्तद्धित इति टिलोपः । हंसेषु मध्ये अहमेक एव भूलोकविलोकने उत्कः उत्सुकः सन् दुर्मना विमना अन्तर्मनाः स्यादुत्क उन्मना इत्यमरः । उच्छब्दात्कन् प्रत्ययान्तो निपातः भ्रमामि पर्यटामि ॥ १८ ॥

हे कुमारी ! ब्रह्माजीके आदेशसे इस भूलोकमें नैषधीय लीला तड़ागमें विहार करनेके लिए आये हुए सुवर्णके राजहंसोंमें एक मैं ही पृथ्वीपर्यटनकी उत्कटाभिलाषासे उत्सुक होकर इस लोकमें पर्यटन कर रहा हूँ ॥ १८ ॥

विधेः कदाचिद् भ्रमणीविलासे श्रमातुरेभ्यस्स्वमहत्तरेभ्यः ।
स्कन्धस्य विश्रान्तिमदां तदाहं श्राम्यामि नाविश्रमविश्वगोऽपि ॥ १९ ॥



अनवरतभ्रमणेऽपि श्रमजये कारणमाह विधेरिति । कदाचिद्विधेः ब्रह्मणो

भ्रमणीविलासे भुवनभ्रमणविनोदे श्रमातुरेभ्यः अवसन्नेभ्यः स्वमहत्तरेभ्यः स्वकुलवृद्धेभ्यः स्कन्धस्यांसस्य स्कन्धो भुजशिरोऽसो स्त्रीत्यमरः। विश्रान्तिमदां प्रादाम्, स्वयमेक एवाहमित्यर्थः। ददातेर्लुङि गातिस्थेत्यादिना सिचो लुक्। तदादि तत्प्रभृति अविश्रममनवरतं नोदात्तोपदेशेत्यादिना श्रमेर्घञि वृद्धिप्रतिषेधः विश्वगो विश्वं गच्छन्नपि अन्यत्रापि दृश्यत इति गमेर्डप्रत्ययः। न श्राम्यामि न खिद्ये॥ १९॥

एकदा लोकोंमें भ्रमणविनोदार्थं जाते हुए ब्रह्माजीके वाहनभूत एक पूज्य राजहंसको जो श्रमसे आतुर हो गये थे मैंने विश्रान्ति दी थी। तबसे मैं विश्वभरमें पर्यटन करनेपर भी नहीं थकता हूं। अर्थात्—ब्रह्माजीके प्रसादसे तथा उन अपने पूज्य राजहंसके आशीर्वादसे, जो उन्होंने मुझे दिया था, मैं विश्वमें अनवरत घूम सकता हूं॥ १९॥

बन्धाय दिव्ये न तिरश्चि कश्चित्पाशादिरासादितपौरुषस्स्यात्।
एकं विना मादृशि तं नरस्य स्वर्भोगभाग्यं विरलोदयस्य॥ २०॥

अथ व्याधादिबन्धनमपि न मेऽस्तीत्याह बन्धायेति। मादृशि दिव्ये तिरश्चि विषये विरलोदयस्य दुर्लभजन्मनो नरस्य मर्त्यस्य प्रायेणैवंविधो नास्तीत्यर्थः। अन्यत्र विरो विगतरेफः स चासौ लोदयो लोदयवांश्च मत्वर्थीयोऽकारः। तस्य रेफस्थानाधिष्ठितलकारस्य नलस्येत्यर्थः। शब्दधर्मोऽर्थं उपचर्यते, भुज्यत इति भोगः सुखं स्वर्गभोगस्य स्वर्गसुखस्य भाग्यं तत्प्रापकादृष्टमित्यर्थः। स्वप्राप्तेस्तत्प्रापकत्वादिति भावः। तदेकं विना कश्चित् पाशादिः पाशाद्युपायः। बन्धाय बन्धनार्थमासादितपौरुषः प्राप्तिव्यापारो न स्यात् स्वर्भोगभाग्यैकसुलभा वयं नोपायान्तरसाध्या इत्यर्थः। अस्मादृक् संसर्गादन्यः को नाम स्वर्गपदार्थ इति भावः॥ २०॥

हे कुमारी! मेरे ऐसे दैवी पक्षीको मर्त्यलोकका कोई भी प्राणी नहीं पकड़ सकता है। केवल एक वही पकड़ सकता है जो स्वर्गके सुखोंको पृथिवीपर भोगता हो। इस श्लोकमें 'विरलोदयस्य' 'नरस्य' पदोंसे "नलस्य" नलका अर्थ प्रकट होता है। अर्थात्—विगत हो गया है 'र' जिस पदमेंसे तथा उदय हो गया है 'ल' जिस पदमें वह विरलोदय पद कहा जाता है 'नरस्य' इस पदमें 'र' को विगत करनेसे 'ल' को रखनेसे 'नलस्य' पद बन जाता है॥ २०॥

इष्टेन पूर्तेन नलस्य वश्यास्स्वर्भोगमत्रापि सृजन्त्यमर्त्याः।
महीरुहो दोहदसेकशक्तेराकालिकं कोरकमुद्गिरन्ति॥ २१॥

तच्च भाग्यं नलस्यैवास्तीत्याह इष्टेनेति। इष्टेन यागेन पूर्तेन खातादिकर्मणा च। त्रिष्वथ क्रतुकर्मेष्टं पूर्तं खातादिकर्मणीत्यमरः। वश्याः वशङ्गता इति प्राग्दीव्यतीयो यत्प्रत्ययः। अमर्त्या देवा नलस्यात्रापि भूलोके स्वर्भोगं सृजन्ति स्वर्गसुखं सम्पादयन्तीत्यर्थः। ननु देवाश्च कथं लोकान्तरकायान्तरभोग्यं स्वर्गमिदानीं सृजन्तीत्याशंकां दृष्टान्तेन परिहरति। महीरुहो वृक्षाः दोहदस्य अकालप्रसवोत्पादनद्रव्यस्य सेकस्य जल-

सेकस्य शक्तेः सामर्थ्यात् समानकालावाद्यन्तौ उत्पत्तिविनाशावस्येत्याकालिकः उत्पत्त्यनन्तरविनाशीत्यर्थः । आकालिकडाद्यन्तवचन इति समानकालशब्दस्याकालशब्दादेशे ठञ्प्रत्ययान्तो निपातः । प्रकृते स्वकालभवं कोरकमुद्गिरन्तीत्यर्थः । "तरुगुल्मलतादीनामकाले कुशलैः कृतम् । पुष्पाद्युत्पादकं द्रव्यं दोहदं स्यात्तु तत्क्रिये"ति शब्दार्णवे। दोहदवशाद्द्रुमा इव देवता अपि उत्कटपुण्यवशाददेशकालेऽपि फलं प्रयच्छन्तीत्यर्थः। दृष्टान्तालङ्कारः ॥ २१ ॥

हे कुमारी ! महाराज नलके यज्ञ–यागादि कर्मोंके पुण्यसे देवतागण वशीभूत होकर उन्हें इस लोकमें अप्राप्य स्वर्ग सुख वैसे ही दे रहे हैं जैसे—वृक्षगण दोहदसेकक्रिया ( धूपादि पुष्प वृद्धि क्रिया ) द्वारा अकालमें ही फल-फूल देने लगते हैं । जैसे वृक्षगण खूब निपुणतासे धूपादि देनेसे बिना मौसममें फल–फूल उत्पन्न करने लगते हैं तद्वत् देवगणोंने भी पृथ्वीपर अप्राप्य स्वर्गसुख यज्ञ-यागादिके पुण्यसे नलको दिया ॥ २१ ॥

सुवर्णशैलादवतीर्य तूर्णं स्वर्वाहिनीवारिकणावकीर्णैः ।
तं वीजयामः स्मरकेलिकाले पक्षैर्नृपं चामरबद्धसख्यैः ॥ २२ ॥

स्वभोगमेवाह सुवर्णेति । सुवर्णशैलान्मेरोस्तूर्णमवतीर्य अवरुह्य स्वर्वाहिनीवारिकणावकीर्णैः मन्दाकिनीजलबिन्दुसम्पृक्तैः चामरेषु बद्धसख्यैस्तत्सदृशैः पक्षैः पतत्रैः स्मरकेलिकाले त नृपं वीजयामः तादृक्पत्त्रवीजनैः सुरतश्रान्तिमपनुदाम इत्यर्थः ॥२२॥

हे कुमारी ! मैं स्वर्णशैल मेरुसे शीघ्र ही उतरकर मन्दाकिनीके जलकणोंसे व्याप्त चामरोंके समान अपने पंखोंसे उन महाराज नलकी सेवा उनके कामकेलि समयमें करता हूं अर्थात्-कामकेलिके समय में उन्हें अपने सुवर्णके पङ्खोंसे हवा करता हूं ॥ २२ ॥

क्रियेत चेत्साधुविभक्तिचिन्ता व्यक्तिस्तदा सा प्रथमाभिधेया ।
या स्वौजसां साधयितुं विलासैस्तावत्क्षमानामपदं बहु स्यात् ॥२३॥

क्रियेतेति । साधु विभक्तिचिन्ता सज्जनविभागविचारः क्रियेत चेत्सा नलाभिधाना व्यक्तिः मूर्तिः प्रथमाभिधेया प्रथमं परिगणनीया कुतः या व्यक्तिः स्वौजसां विलासैर्व्याप्तिभिः तावद्बहु तथा प्रभूतं नास्ति नामो नतिर्यस्येति अनाममनम्रं पदं परराष्ट्रं साधयितुं स्वायत्तीकर्तुं क्षमा समर्था स्यात् । अन्यत्र साधुविभक्तिचिन्ता सत्यविभक्तिविचारः क्रियेत चेत् तदा सा प्रथमा व्यक्तिः अभिधेया विचार्य्या, या स्वौजसां सु औ जस् इत्येतेषां प्रत्ययानां विलासैः विस्तारैस्तावद्बहु अनेकं नामपदं सुबन्तपद वृक्ष इत्यादिकं पदं साधयितुं निष्पादयितुं क्षमा । अत्राभिधायाः प्रकृतार्थमात्रनियन्त्रितत्वाल्लक्षणायाश्चानुपपत्त्यभावेनाभावादप्रकृतार्थप्रतीतिर्ध्वनिरेव ॥२३॥

हे कुमारी ! यदि कोई व्यक्ति पृथ्वी पर के सुजनोंके परिगणन का विचार करे तो वह, अपने शौर्यके प्रभावसे विश्वके समस्त राष्ट्रों पर शासन करनेवाले उन महाराज नलको सर्वप्रथम परिगणित करेंगे। यथा सु, औ, जस् इत्यादि २१ विभक्तियोंमें 'सु' का परिगणन प्रथम होता है तद्वत् उनका भी परिगणन प्रथम ही होगा ॥ २३ ॥

राजा स यज्वा विबुधव्रजत्रा कृत्वाध्वराज्योपमयेव राज्यम्।
भुङ्क्ते श्रितश्रोत्रियसात्कृतश्रीः पूर्वं त्वहो शेषमशेषमन्त्यम् ॥ २४ ॥

राजेति। यज्वा तु विधिनेष्टवान् सुयजोर्ङ्वनिप् श्रिताः आश्रिताः ये श्रोत्रियाः छान्दसा अधीतवेदा इत्यर्थः। श्रोत्रियच्छान्दसौ समावित्यमरः। श्रोत्रिश्छन्दोऽधीत इति निपातः। तत्सात्कृता दानेन तदधीना कृता श्रीः सम्पद्येन सः राजा नलः अध्वरेषु यदाज्यन्तदुपमया तत्सादृश्येनैव तद्वदेवेत्यर्थः। राज्यं विबुधा देवा विद्वांसश्च तद्व्रजत्रा दानेन तत्सङ्घाधीनं कृत्वा देये त्रा चेति चकारादितरत्र साति-प्रत्ययश्च तद्धितश्चासर्वविभक्तिरित्यव्ययत्वं पूर्वं पूर्वनिर्दिष्टमध्वराज्यं शेषं हुतशेषं भुंक्ते अन्त्यं पश्चान्निर्दिष्टं राज्यन्त्वशेषं कृत्स्नमखण्डं भुंक्ते अहो उपयुक्तादन्यः शेषः पूर्वस्याशेषस्य तथात्वं अन्त्यस्य अशेषत्वं कथं विरोधादित्याश्चर्यम्, अतएव विरोधाभासोऽलङ्कारः अखण्डमिति परिहारः ॥ २४ ॥

हे कुमारी! विधिसे यज्ञकर्त्ता महाराज नलने अपने आश्रित वेदपाठी विप्रोंके हाथमें यज्ञ-हवन सामग्री करके तथा विद्वान् लोगोंके आधीन अपने राज्य कर्मोंको करके प्रथम कहे हुए यज्ञ-हवनावशिष्ट ( शेष ) प्रसादको ग्रहण किया तथा पुनः समस्त ( अशेष ) राज्यको ग्रहण किया। इस श्लोकमें विरोधाभासालङ्कारसे यह बतलाया जाता है कि, जो वस्तु प्रथम ग्रहण की गयी उसका शेष कैसा तथा जो पीछे ग्रहण की गयी उसका अशेष कैसा। परन्तु शेष और अशेष पदोंके अर्थ दो-दो होते हैं। यथा—शेष = "अन्त, और "बचा हुआ"। अशेष = 'समस्त' और "अन्तका नहीं" अर्थात्-प्रथमका" ॥ २४ ॥

दारिद्र्यदारिद्रविणौघवर्षैरमोघमेघव्रतमर्थिसार्थे।
सन्तुष्टमिष्टानि तमिष्टदेवं नाथन्ति के नाम न लोकनाथम् ॥ २५ ॥

दारिद्र्येति। दारिद्र्यं दारयति निवर्तयतीति तस्य दारिद्र्यदारिणो द्रविणौघस्य धनराशेर्वर्षैरर्थिसार्थे विषये अमोघमेघव्रतं वर्षुकत्वलक्षणं यस्य तं सन्तुष्टं दानहृष्टं इष्टदेवं यज्ञाराधितसुरलोकनाथं तं नलं के नाम इष्टानि न नाथन्ति न याचन्ते सर्वेऽपि नाथन्त्येवेत्यर्थः। नाथतेर्याच्ञार्थस्य दुहादित्वात् द्विकर्मकत्वम् ॥ २५ ॥

हे कुमारी! धनार्थियोंको धनवर्षा करके उनके दारिद्र्योंको दूर करनेमें मेघवर्षणके सदृश सफल व्रतवाले तथा ईप्सितार्थ देनेवाले, लोकनाथ उन महाराज नलसे अपने इष्टोंके साधनार्थ कौन नहीं याचना करते हैं अपितु सभी करते हैं। अर्थात् वे महाराज नल लोकमें सबसे बड़े व्यक्ति होते हुए सबसे बड़े त्यागी भी हैं ॥ २५ ॥

अस्मात्किल श्रोत्रसुधां विधाय रम्भा चिरं भामतुलां नलस्य।
तत्रानुरक्ता तमनाप्य भेजे तन्नामगन्धान्नलकूबरं सा ॥ २६ ॥

अस्मदिति। सा प्रसिद्धा रम्भा नलस्यातुलमनुपमां भां सौन्दर्यमस्मत् मत्तः श्रोत्रसुधां विधाय कर्णे अमृतं कृत्वा रसादाकर्ण्येत्यर्थः। तत्र तस्मिन्नले अनुरक्ता

सती तं नलमनाप्य अप्राप्य आङ्पूर्वादाप्नोतेः क्त्वो ल्यबादेशः नञ्समासः। अन्यथा स्वसमासे ल्यबादेशो न स्यात् तन्नामगन्धात्तस्य नलस्य नामाक्षरसंस्पर्शाद्धेतोर्नलकूबरं कुबेरात्मजं भेजे किल तादृक्तस्य सौन्दर्यमिति भावः॥ २६॥

हे कुमारी! स्वर्गकी निवासिनी प्रसिद्ध रम्भा नामक अप्सराने मेरे द्वारा महाराज नलकी अनुपम शोभा का वर्णन प्रचुररूपेण कर्णामृत करके अनुरक्त होकर उन नल महाराजसे उद्वाह करने की इच्छा की। किन्तु, जब वह उन्हें न प्राप्त कर सकी तो उनके नामसे मिलते जुलते नामधारी कुबेर पुत्र नलकूबरसे उद्वाह किया॥ २६॥

**स्वर्लोकमस्माभिरितः प्रयातैः केलीषु तद्गानगुणान्निपीय।**
**हा हेति गायन् यदशोचि तेन नाम्नैव हाहा हरिगायनोऽभूत्॥ २७॥**

स्वर्लोकमिति। केलीषु विनोदगोष्ठीषु तस्य नलस्य कर्तुर्गाने गुणान्निपीय इतः अस्माल्लोकात् स्वर्लोकं प्रयातैरस्माभिर्हरिगायनः इन्द्रगायको गन्धर्वः ण्युट् चेति गायतेः शिल्पिनि ण्युट्प्रत्ययः। गायन् यद्यस्मात् हाहेत्यशोचि ततस्तेनैव कारणेन नाम्ना हाहा अभूत् आलापाक्षरानुकारादिति भावः। हाहाहूहूश्चैवमाद्या गन्धर्वास्त्रिदिवौकसामित्यमरः। आलापाक्षरानुकारनिमित्तोऽयमाकारान्तः पुंसि चेति केचित्। हाहा खेदे हूहू हर्षे गन्धर्वेऽमू अनव्यय इति विश्वः। अव्ययमेवेति भोजः। अत्र शोकनिमित्तासम्बन्धेऽपि सम्बन्धादतिशयोक्तिः तथा च गन्धर्वातिशायि गानमस्येति वस्तु व्यज्यते॥ २७॥

हे कुमारी! इस लोक की विनोदगोष्ठीमें उन महाराज नलकी गायन पटुता को देखकर, मैंने (इस लोकसे जाकर) स्वर्गमें इन्द्र की विनोदगोष्ठीमें गानेवाले इन्द्रगायकों के गानों पर घृणा करके 'हा' 'हा' कहा—। अर्थात्—महाराज नलके गानोंके समक्ष तुम्हारे गाने फीके हैं। बस, उसी दिनसे उन इन्द्रगायकोंके नाम 'हा' 'हा' पड़ गये॥ २७॥

**शृण्वन् सदारस्तदुदारभावं हृष्यन्मुहुर्लोम पुलोमजायाः।**
**पुण्येन नालोकत नाकपालः प्रमोदबाष्पावृतनेत्रमालः॥ २८॥**

शृण्वन्निति। नाकपाल इन्द्रः सदारः सवधूकः तस्य नलस्य उदारभावमौदार्यं शृण्वन्नत एव प्रमोदबाष्पैरानन्दाश्रुभिरावृतनेत्रमालस्तिरोहितदृष्टिव्रजः सन् पुलोमजायाः शच्याः मुहुर्हृष्यन्नलानुरागादुल्लसल्लोमरोमाञ्चं पुण्येन शच्या भाग्येन नालोकत नापश्यत् अन्यथा मानसव्यभिचारापराधाद्दण्ड्यैवेत्यर्थः॥ २८॥

हे कुमारी! स्वर्गके स्वामी इन्द्रने अपनी भार्या इन्द्राणी सहित उन महाराज नलके उदारभावोंको सुना और सुनते ही आनन्दातिरेकसे उनके सहस्रों नेत्रोंमें हर्षाश्रु आ गये जिससे उनके नेत्र ढक गये। यह बड़े सौभाग्य की बात इन्द्राणीके पुण्यसे हो गयी। क्योंकि, महाराज नलके उदारभावों को सुनकर इन्द्राणी को भी हर्षातिरेकसे रोमाञ्च हो गया था। उस रोमाञ्च को वे इन्द्र (उस समय) न देख सके—अन्यथा वे इन्द्राणी को मानसव्यभिचारिणी कह देते॥ २८॥

सापीश्वरे शृण्वति तद्गुणौघान् प्रसह्य चेतो हरतोऽर्धशम्भुः ।
अभूदपर्णाङ्गुलिरुद्धकर्णा कदा न कण्डूयनकैतवेन ॥ २९ ॥

सेति । ईश्वरे हरे प्रसह्य चेतो हरतो बलान्मनोहारिणस्तस्य नलस्य गुणौघान् शृण्वति सति सा प्रसिद्धा अर्धं शम्भोरर्धशम्भुः शम्भोरर्धाङ्गभूतेत्यर्थः । तथा चापसरणमशक्यमिति भावः अपर्णा पार्वत्यपि कदा कण्डूयनकैतवेन कण्डूनोदनव्याजेन अङ्गुल्या रुद्धः पिहितः कर्णो यया सा नाभूत् अभूदेवेत्यर्थः । अन्यथा चित्तचलनादिति भावः ॥ २९ ॥

हे कुमारी ! भगवान् शिवकी अर्धांगिनी पार्वतीजीने कान खुजलानेके बहाने अपनी अंगुली उस समय कानमें डाल ली जिस समय भगवान् शिवका चित्त उन महाराज नलकी गुणभरी गाथाको सुनने की ओर आकर्षित हो रहा था । यदि पारवतीजी ऐसा न करतीं तो चित्त चाञ्चल्यका दोष उनमें आ जाता । शिवके अर्धांग होनेके कारण वे वहाँसे हट नहीं सकती थीं ॥ २९ ॥

अलं सजन् धर्मविधौ विधाता रुणद्धि मौनस्य मिषेण वाणीम् ।
तत्कण्ठमालिङ्ग्य रसस्य तृप्तां न वेद तां वेदजडस्स वक्राम् ॥ ३० ॥

अलमिति । विधाता ब्रह्मा अलमत्यन्तं धर्म्मविधौ सुकृताचरणे सजन् धर्मासक्तः सन्नित्यर्थः । वाणीं स्वभार्य्यां वाग्देवीं वर्णात्मिकाञ्च मौनस्य वाग्यमनव्रतस्य मिषेण रुणद्धि नलकथाप्रसङ्गान्निरुन्धे तस्या उभय्या अपि तदासङ्गभयादिति भावः । किन्तु वेदजडः छान्दसः विधाता तामुभयीमपि वाणीं तस्य नलस्य कण्ठं ग्रीवामालिङ्ग्य मुखमाश्रित्य च रसस्य तृप्तां तद्रागसन्तुष्टामन्यत्र शृङ्गारादिरसपुष्टाञ्च सम्बन्धसामान्ये षष्ठी पूरणगुणेत्यादिना षष्ठीनिषेधादेव ज्ञापकादिति केचित् । वक्रां प्रतिकूलकारिणीं वक्रोक्त्यलङ्कारयुक्ताञ्च न वेद न वेत्ति विदो लटो वेति णलादेशः अशक्यरक्षाः स्त्रिय इति भावः । अत्र प्रस्तुतवाग्देवीकथनादप्रस्तुतवर्णात्मकवाणीवृत्तान्तप्रतीतेः प्रागुक्तरीत्या ध्वनिरेवेत्यनुसन्धेयम् ॥ ३० ॥

हे कुमारी ! ब्रह्माजी पूजनके समय मौन रहने लगे और जब मौन रहने लगे तो उनके मुखसे वाणी बाहर नहीं निकली । इसी पर कवि हर्ष कहते हैं कि, ब्रह्माजीका पूजन के बहाने मौन रहकर अपनी भार्या ( वाणी ) को रोके रहना वृथा है । क्योंकि, शृङ्गारादि नव रसोंसे परिपूर्ण वक्रोक्ति अलंकारवाली वाणी उन महाराज नलके गलेमें लिपटी हुई थी । यह बात वेदज्ञानी ब्रह्माजी जानते ही न थे । अर्थात्—ब्रह्माजीने सरस्वतीजीको मौन रहकर अपने पास रोकना चाहा परन्तु नल पर अनुराग करनेवाली सरस्वतीजी नलके गलेमें चिपकी रहती थीं यह बात वेदज्ञानी ब्रह्माजी न जान सके । स्त्रियोंकी सुरक्षा अशक्य है ॥ ३० ॥

श्रियस्तदालिङ्गनभूर्न भूता व्रतक्षतिः कापि पतिव्रतायाः ।

समस्तभूतात्मतया न भूतं तद्भर्तुरीर्ष्याकलुषाऽणुनापि ॥ ३१ ॥

श्रिय इति । पतिव्रतायाः श्रियः श्रीदेव्याः तद्भर्तुर्विष्णोः समस्तभूतात्मतया सर्वभूतात्मकत्वेन नलस्यापि विष्णुरूपत्वेनेत्यर्थः तदालिङ्गनभूर्नलाश्लेषभवा कापि व्रतक्षतिः पातिव्रतभङ्गो न भूता नाभूत् अतएव तद्भर्तुर्विष्णोश्च ईर्ष्यया नलालिङ्गनसुखाक्षमया यत्कलुषं कालुष्यं मनःक्षोभः दुःखादित्वेन अस्य धर्मधर्मिवचनत्वादत एव क्षीरस्वामी शस्तं चाथ त्रिषु द्रव्ये पापं पुण्यं सुखादि चेत्यत्र आदिशब्दाच्छ्रेयःकलुषशिवभद्रादय इति उभयवचनेषु संजग्राह तस्याणुना लेशेनापि न भूतं नाभावि नपुंसके भावे क्तः । अत्र शच्यादिचित्तचाञ्चल्योक्तेर्नलसौन्दर्ये तात्पर्याज्ञानौचित्यदोषः ॥ ३१ ॥

हे कुमारी ! प्रतिव्रता' लक्ष्मीजीने सर्वप्राणियोंमें निवास करनेवाले अपने पति विष्णु भगवान्को ज्ञातकर महाराज नलका आलिङ्गन किया तो उनका पातिव्रत्य भंग नहीं हुआ तथा महाराज नलके साथ आलिंगन करते देखकर उनके पति विष्णुको न ईर्ष्या ही हुई और न उन लक्ष्मीजी और विष्णुभगवान्के चित्तोंमें परस्पर कालुष्य ही पैदा हुआ । अर्थात् विष्णु अंशावतार महाराज नल हैं ॥ ३१ ॥

धिक् तं विधेः पाणिमजातलज्जं निर्माति यः पर्वणि पूर्णमिन्दुम् ।
मन्ये स विज्ञः स्मृततन्मुखश्रीः कृतार्धमौज्झद्भवमूर्ध्नि यस्तम् ॥ ३२ ॥

धिगिति । तमजातलज्जन्निस्त्रपं विधेः पाणिं धिक् यः पाणिः स्मृततन्मुखश्रीरपि पर्वणि जातावेकवचनं पर्वस्वित्यर्थः । पूर्णमिन्दुं निर्माति अद्यापीति भावः स विज्ञः अभिज्ञ इति मन्ये यः पाणिः स्मृततन्मुखश्रीः सन् तमिन्दुं कृतः अर्द्धं एकदेशो यस्य तं कृतार्द्धमर्द्धनिर्मितमेव भवमूर्ध्नि हरशिरसि औज्झत् अतिसौन्दर्यमस्यास्यमिति भावः

हे कुमारी ! उस ब्रह्मदेवके निर्लज्ज हाथको धिक्कार है जिसने महाराज नलके मुखश्रीके विद्यमान रहते हुए पूर्णिमाके चन्द्रकी उत्पत्ति की । अथवा सम्भव है, ज्ञाततः वा अज्ञाततः उस पूर्ण चन्द्रको बनाते समय उन्हें उन महाराज नलके मुखश्री की स्मृति आ गयी। शायद इसीलिए उन्होंने उक्त पूर्णचन्द्रको, जो आधा बन चुका था, शिवके शिरपर बास करनेके लिए फेंक दिया—रोषमें आकर सभी लोग ऐसा करते भी हैं ॥ ३२ ॥

निलीयते ह्रीविधुरः स्वजैत्रं श्रुत्वा विधुस्तस्य मुखं मुखान्नः ।
सूरे समुद्रस्य कदापि पूरे कदाचिदभ्रभ्रमदभ्रगर्भे ॥ ३३ ॥

निलीयत इति । विधुश्चन्द्रः स्वस्य जैत्रं तृजन्तात्प्रज्ञादित्वात् स्वार्थेऽण् प्रत्ययः। तस्य नलस्य मुखं नोऽस्माकं मुखाच्छ्रुत्वा ह्रीविधुरः लज्जाविधुरः सन् कदापि सूरे सूर्ये दर्शेष्वित्यर्थः कदापि समुद्रस्य पूरे प्रवाहे तदुत्पन्नत्वात् कदाचिदभ्रभ्रमदभ्रगर्भे आकाशे सञ्चरमाणमेघोदरे निलीयते अन्तर्धत्ते न कदाचिदप्रतः स्थातुमुत्सहत इति भावः । अत्र विधोः स्वाभाविकसूर्यादिप्रवेशे पराजयप्रयुक्तह्रीनिलीनत्वोत्प्रेक्षा व्यञ्जकाप्रयोगाद् गम्या ॥ ३३ ॥

हे कुमारी! जब मेरे मुखसे चन्द्रमाने यह ज्ञातकर लिया कि उन महाराज नलका मुख उससे सुन्दरतर है तो वह लज्जान्वित होकर कभी सूर्यमें, कभी समुद्रके पूरमें और कभी आकाशमें घूमनेवाले मेघोंमें छिपा करता है। लज्जासे लोग ऐसा करते ही हैं॥ ३३॥

संज्ञाप्य नस्स्वध्वजभृत्यवर्गान् दैत्यारिरत्यब्जनलास्यनुत्यै।
तत्संकुचन्नाभिसरोजपीताद्धातुर्विलज्जं रमते रमायाम्॥ ३४॥

संज्ञाप्येति। दैत्यारिः विष्णुः स्वध्वजस्य गरुडस्य पक्षिराजस्य भृत्यवर्गान्नोऽस्मान् अतिक्रान्त अब्जमत्यब्जमब्जविजयीत्यर्थः। अत्यादयः क्रान्ताद्यर्थे द्वितीययेति समासः। तस्य नलास्यस्य नुत्यै स्तोत्राय स्तवः स्तोत्रं स्तुतिर्नुतिरित्यमरः। संज्ञाप्य तत्सङ्कुचता तया नुत्या निमीलता नाभिसरोजेन पीतात्तिरोहिताद्धातुर्ब्रह्मणो विलज्जं यथा तथा रमायां रमते। अत्र विष्णोरुक्तव्यापारासम्बन्धेऽपि सम्बन्धोक्तेरतिशयोक्तिः॥ ३४॥

हे कुमारी! भगवान् विष्णु अपने वाहनभूत गरुड़के सेवकों को—हम लोगोंको—उन कमलविजयी महाराज नलकी स्तुतिका संकेत कर देते हैं और हम लोगोंके द्वारा महाराज नलकी स्तुति श्रवणकर ब्रह्माजीको उत्पन्न करनेवाला विष्णुका नाभिकमल मुकुलित हो जाता है। उसके मुकुलित होनेसे ब्रह्माजी उसमें छिप जाते हैं। फिर विष्णु भगवान् अपनी भार्या लक्ष्मीके साथ लज्जा रहित होकर रमण करते हैं। अर्थात्—जैसे कोई अपनेको दूसरे द्वारा सुनकर मुकुलित होता है वैसे ही कमल भी अपनेको नलके मुखसे पराजित ज्ञातकर मुकुलित हो गया॥ ३४॥

रेखाभिरास्ये गणनादिवास्य द्वात्रिंशता दन्तमयीभिरन्तः।
चतुर्दशाष्टादश चात्र विद्या द्वेधापि सन्तीति शशंस वेधाः॥ ३५॥

रेखाभिरिति। अस्य नलस्य आस्ये दन्तमयीभिर्दन्तरूपाभिर्द्वात्रिंशता रेखाभिर्गणनात्संख्यानाच्चतुर्दश चाष्टादश च विद्या द्वेधा अपि अत्र आस्ये सन्ति सम्भवन्त्येतेति वेधाः शशंसेवेत्युत्प्रेक्षा "अङ्गानि वेदाश्चत्वारो मीमांसान्यायविस्तरः। पुराणं धर्मशास्त्रञ्च विद्या ह्येताश्चतुर्दश॥ आयुर्वेदो धनुर्वेदो गान्धर्वश्चेत्यनुक्रमात्। अर्थशास्त्रं परं तस्माद्विद्या ह्यष्टादश स्मृताः॥" इति॥ ३५॥

हे कुमारी! ब्रह्माजीने उन महाराज नलके मुखमें ३२ दांतोंकी दो रेखाओंको गिनकर मानो यह उद्घोषित किया है कि, महाराज नलके मुखके भीतर १४ और १८ विद्याएं एक साथ रहती हैं॥ ३५॥

श्रियौ नरेन्द्रस्य निरीक्ष्य तस्य स्मरामरेन्द्रावपि न स्मरामः।
वासेन सम्यक् क्षमयोश्च तस्मिन् बुद्धौ न दध्मः खलु शेषबुद्धौ॥ ३६॥

श्रियाविति। तस्य नरेन्द्रस्य श्रियौ सौन्दर्यसम्पदौ निरीक्ष्य शोभासम्पत्तिपद्मासु लक्ष्मीः श्रीरिति शाश्वतः। स्मरामरेन्द्रावपि न स्मरामः किं च तस्मिन्नरेन्द्रे क्षमयोः क्षितिक्षान्त्योः "क्षितिक्षान्त्योः क्षमे"त्यमरः। सम्यग्वासेन निर्बाधस्थित्या शेषबुद्धौ फणिपतिबुद्धदेवौ चित्ते न दध्मः न धारयामः खलु। अत्र द्वयोरपि श्रियोः द्वयोरपि क्षमयोः

प्रकृतत्वात् केवलप्रकृतश्लेषः । एतेन सौन्दर्यादिगुणैः स्मरादिभ्योऽप्यधिक इति व्यति-
रेको व्यज्यते । श्लेषयथासंख्ययोः सङ्करः ॥ ३६ ॥

हे कुमारी ! उन महाराज नलकी शोभा और लक्ष्मीको देखकर मैं कामदेव और देवेन्द्रको
स्मरण नहीं करता । अर्थात्—सबसे सुन्दर कामदेव है और सबसे अधिक धनवान् इन्द्र
किन्तु, महाराज नलके समीप दोनों वस्तुएं उनसे अधिक हैं । उन महाराज नलकी शान्ति
और पृथ्वीधारण शक्तिको देखकर मैं पृथ्वी धारणकर्त्ता शेषराज तथा शान्तिके अवतार बुद्ध
भगवान्को भी चित्तमें धरता नहीं हूँ । अर्थात्—सबसे अधिक शान्ति बुद्ध भगवान्में
तथा सबसे अधिक पृथ्वीका भार शेषनागपर है परन्तु, महाराज इन दोनोंसे अधिक शान्ति
और पृथ्वीको धारे हुए हैं ॥ ३६ ॥

विना पतत्रं विनतातनूजैस्समीरणैरीक्षणलक्षणीयैः ।
मनोभिरासीदनणुप्रमाणैर्न निर्जिता दिक्कतमा तदश्वैः ॥ ३७ ॥

विनेति । पतत्रं विना स्थितैरिति शेषः । विनतातनूजैः वैनतेयैः अपक्षताक्ष्यैरि-
त्यर्थः । ईक्षणलक्षणीयैः समीरणैश्चाक्षुषवायुभिः अनणुप्रमाणैः अणुपरिमाणं मन इति
तार्किकाः तद्विपरीतैर्महापरिमाणैर्मनोभिर्वैनतेयादिसमानवेगैरित्यर्थः । एवंविधैः
तदश्वैः कतमा दिक् न लङ्घितासीत् सर्वापि लङ्घितैवासीदित्यर्थः । अत्राश्वानां
विशिष्टवैनतेयादित्वेन निरूपणाद्रूपकालङ्कारः ॥ ३७ ॥

हे कुमारी ! उन महाराज नलके घोड़ोंने किन-किन दिशाओंका उल्लंघन नहीं किया
अपितु, सभी दिशाओंका उल्लंघन किया है—उन घोड़ोंने पंखोंके विना, पंखवाले गरुड़की
गतिसे तथा नेत्रोंसे दिखनेवाले पवनकी गतिसे एवं अणु प्रमाणभूत मनकी गतिसे सभी
दिशाओंको उल्लंघित कर दिया । तात्पर्य यह है कि, गरुड़ पंखोंको धारणकर जिस चालसे
जाता है उसी चालसे ये घोड़े विना पंखोंके जाते हैं । मनुष्य दृष्टि से अलक्षित पवन जिस
चालसे दौड़ता है उसी चालसे ये घोड़े लक्षित पवनकी भांति दौड़ते हैं । अणु प्रमाण
मन जिस गति से क्षणमें करोड़ों कोस दूरकी बातें कल्पित करके सम्मुख कर लेता है उसी
गतिसे ये घोड़े महापरिमाणभूत होकर करोड़ों कोस क्षणभर में दौड़ जाते हैं । उन महा-
राज नल के घोड़े विना पंखके पक्षी, दिखानेवाले पवन और अनणु प्रमाणभूत चित्तके
सदृश हैं ॥ ३७ ॥

संग्रामभूमीषु भवत्यरीणामस्त्रैर्नदीमातृकतां गतासु ।
तद्बाणधारापवनाशनानां राजव्रजीयैरसुभिस्सुभि म् ॥ ३८ ॥

संग्रामेति । अरीणामस्त्रैरसृग्भिर्नद्येव माता यासां तास्तत्ता नदीमातृकता नद्य-
म्बुसम्पन्नशस्याढ्यता देशो नद्यम्बुवृष्ट्यम्बुसम्पन्नव्रीहिपालितः । स्यान्नदीमातृको
देवमातृकश्च यथाक्रममित्यमरः । नद्यतश्चेति कप् त्वतलोर्गुणवचनस्येति पुंवद्भावः ।
गतासु संग्रामभूमीषु तस्य नलस्य बाणधारा बाणपरम्परास्ता एव पवनाशनानां

राघवजीयैः राजसंघसम्बन्धिभिः घृद्धाच्छः। असुभिः प्राणवायुभिः सुभिक्षम्। भिक्षाणां समृद्धिर्भवति समृद्धावव्ययीभावः। नदीमातृकदेशेषु सुभिक्षं भवतीति भावः। रूपकालङ्कारः ३८॥

हे कुमारी! शत्रुओं के रुधिररूपी नदीके कारण उपजाऊ संग्रामभूमि,उन महाराज नलके द्वारा छोड़े गये तेज बाणरूपी सर्पोंको, उन्हीं तेज बाणोंसे निकाले गये शत्रुओंके प्राणरूपी पवनोंको खूब पिलाकर सुभिक्षवती (फलवती) है॥ ३८॥

यशो यदस्याजनि संयुगेषु कण्डूलभावं भजता भुजेन।
हेतोर्गुणादेव दिगापगाली कूलंकषत्वं व्यसनं तदीयम्॥ ३९॥

यश इति। संयुगेषु समरेषु कण्डूलभावं कण्डूलत्वं सिध्मादिभ्यश्चेति मत्वर्थीयो लच्। भजता अस्य भुजेन यद्यशः अजनि जनितं जनेर्ण्यन्तात्कर्मणि लुङ्। तदीयं तस्य यशःसम्बन्धि दिशः एव आपगाः नद्यः तासां आलिः राजिः तस्याः कूलङ्कषतीति कूलङ्कषं शिवभागवतवत्समासः, सर्वकूलेत्यादिना खचि मुमागमः तस्य भावस्तत्वं तत्र व्यसनमासक्तिः हेतोः कारणस्य भुजस्य गुणादेव कण्डूलत्वादागतमिति शेषः। यशसो दिक्कूलकषणानुमितायाः कण्डूलतायाः तत्कारणकण्डूलभुजगुणपूर्वंत्वमुत्प्रेक्ष्यते॥ ३९॥

हे कुमारी! उन महाराज नलने संग्राममें अपने बाहुको खुजलाते हुए जो यश उत्पन्न किया। वह यश दिशारूपी नदियोंके तटों में अपनेको खुजलाता हुआ फिरता है। यह खुजलाना उसने अपने उत्पन्नकर्त्ता नलके बाहु से प्राप्त किया है। जैसे—किसीको खुजली हो जानेसे वह कहीं पत्थर आदिपर खुजलाता है तथा उस खुजलीका अंश जिसे लग जाता है वह भी खुजलाने लगता है वैसे ही यहां भी संग्रामरूपी खुजली से अपनी बांहको खुजलाते हुए महाराज नलने जो यश प्राप्त किया उसमें खुजलीका गुण आया और वह अपनी खुजली चारों दिशाओंरूपी नदियोंके तटोंपर खुजलाकर दूर करने लगा। नलकी यशःपताका चारों ओर फैल गयी थी॥ ३९॥

यदि त्रिलोकी गणनापरा स्यात्तस्याः समाप्तिर्यदि नायुषः स्यात्।
पारेपरार्धं गणितं यदि स्याद्गणेयनिःशेषगुणोऽपि स स्यात्॥४०॥

यदीति। किं बहुना, त्रयाणां लोकानां समाहारस्त्रिलोकी तद्धितार्थेत्यादिना समाहारे द्विगुः अकारान्तोत्तरपदो द्विगुः स्त्रियां भाष्यते, द्विगोरिति ङीप्। गणनापरा नलगुणसंख्यानतत्परा स्याद्यदि तस्याः त्रिलोक्याः आयुषः समाप्तिर्न स्याद्यदि अमरत्वं यदि स्यादित्यर्थः। परार्द्धस्य चरमसंख्यायाः पारे पारेपरार्द्धं पारे मध्ये षष्ठ्या वेति अव्ययीभावः। गणितं स्यात्परार्द्धात्परतोऽपि यदि संख्या स्यादित्यर्थः। तदा स नलोऽपि गणेया गणितुं शक्याः निःशेषा निखिला गुणा यस्य स स्यात् गणेय इति औणादिक एयप्रत्ययः। अत्र गुणानां गणेयत्वासम्बन्धेऽपि सम्बन्धाभिधानादतिशयोक्तिः॥ ४०॥

हे भैमि ! यदि तीनों लोक महाराज नलके गुणों को गिननेमें तत्पर हो जायें और उनका जीवन नियत अवधिमें समाप्त न होकर दीर्घायुष्वाले हो जायें तथा वे लोग बराबर गणना लगे रहें तब नलके गुणोंका परिगणन समाप्त हो सकता है। अर्थात्—नलके अपरिमित गुणोंका परिगणन हो नहीं सकता क्योंकि नियतकालसे अधिक दिनों लोकोंकी अवधि होना असम्भव है ॥ ४० ॥

अवारितद्वारतया तिरश्चामन्तःपुरे तस्य निविश्य राज्ञः ।
गतेषु रम्येष्वधिकं विशेषमध्यापयामः परमाणुमध्याः ॥ ४१ ॥

एवं नलगुणाननुवर्ण्य गूढाभिसन्धिनात्मनस्तदन्तःपुरेऽपि परिचयं दर्शयन् अवारितेत्यादि । तिरश्चां पक्षिणां अवारितद्वारतया अप्रतिषिद्धप्रवेशतयेत्यर्थः । तस्य राज्ञो नलस्यान्तःपुरे निविश्य अवस्थाय परमाणुमध्यास्तदङ्गनाः रम्येषु गतेषु अधिकमपूर्वं विशेषं भेदमध्यापयामः अभ्यासयामः दुहादित्वाद्द्विकर्मत्वम् ॥४१॥

( सम्प्रति नलगुणोंके वर्णनानन्तर उनके अन्तःपुरका वर्णन करता है— )

हे राजकन्ये ! पक्षियोंकी गति सर्वत्र होती है अतः महाराज नलके अन्तःपुरमें भी मेरी गति है। वहां जानेकी मुझे रुकावट नहीं है। उन महाराज नलकी अन्तःपुरकी पतली कमरवाली सुन्दरियोंको रमणीय और माधुर्य गतिसे साहित्यादि शृङ्गारादि नवरसोंकी शिक्षा देता हूं ॥ ४१ ॥

पीयूषधारानधराभिरन्तस्तासां रसोदन्वति मज्जयामः ।
रम्भादिसौभाग्यरहःकथाभिः काव्येन काव्यं सृजताहताभिः ॥ ४२ ॥

पीयूषेति । किं च पीयूषधाराभ्यः अनधराभिरन्यूनाभिरमृतसमानाभिः काव्यं सृजता स्वयं प्रबन्धकर्त्रा कवेरपत्यं पुमान् काव्यः तेन शुक्रो दैत्यगुरुः काव्य इत्यमरः। कुर्वादिभ्यो ण्य इति ण्यप्रत्ययः। आहताभिस्तस्यापि विस्मयकरीभिरित्यर्थः। रम्भादीनां दिव्यस्त्रीणां सौभाग्यं पतिवाल्लभ्यं तत्प्रयुक्ताभिः रहःकथाभिः रहस्यवृत्तान्तकथनाभिस्तासां नलान्तःपुरस्त्रीणामन्तरन्तःकरणं रसोदन्वति शृङ्गाररससागरे मज्जयामः अवगाहयामः ॥ ४२ ॥

हे राजकुमारी ! शुक्राचार्यसे आदृत, अमृतधारा तुल्य काव्यों को रचकर मैं अन्तःपुरकी उन रमणियोंके चित्तोंको रम्भाप्रभृति स्वर्गाङ्गनाओंकी पति-प्राप्तिकी रहस्यभरी कथाओंसे शृङ्गाररस पूर्ण कथासागरमें नहलाता हूं। अमृतधाराओंसे अलघु अर्थात् अमृतधाराके तुल्य काव्योंको रचकर जिन काव्योंको शुक्राचार्यने आदृत किया है ॥ ४२ ॥

काभिर्न तत्राभिनवस्मराज्ञाविश्वासनिक्षेपवणिक्क्रियेऽहम् ।
जिह्रेति यन्नैव कुतोऽपि तिर्यक्कश्चित्तिरश्चस्त्रपते न तेन ॥ ४३ ॥

काभिरिति । किञ्च यद्यस्मात् तिर्यक् पक्षी कुतोऽपि जनान्न जिह्रेति न लज्जते ह्रीलज्जायामिति धातोर्लट् श्लाविति द्विर्भावः। तिरश्चोऽपि कश्चिज्जनो न त्रपते

[क्रियते] तेन कारणेन तत्रान्तःपुरे काभिस्त्रीभिरहमभिवना अपूर्वा स्मराज्ञा रतिरहस्य-[वृ]त्तान्तः सैव विश्वासनिक्षेपो विश्वासेन गोप्यार्थः। तस्य वणिक् गोप्ता न क्रियेन [कृ]तोऽस्मि। सर्वासामप्यहमेव विस्रम्भकथापात्रमस्मीत्यर्थः ॥ ४३ ॥

हे नृपसुते! महाराज नलके अन्तःपुरकी किन स्त्रियोंकी नूतन कामकथा को मैंने विश्वस्त [ह]ोकर नहीं सुना है—अपितु सबकी कामकथा मैंने सुनी है। जैसे—पक्षी किसी से लज्जा [न]हीं करते हैं वैसे मनुष्य भी पक्षियोंसे लज्जा नहीं करते हैं। जैसे वणिक् लोग आपसमें [ए]क दूसरेके माल असबाब रखकर परस्पर रुपयोंका लेनदेन करके व्यापार करते हैं। वैसे [म]ैं भी अपने विश्वास को उनके पास धरकर उन लोगों से उनकी नूतन कामकथाएं [स]ुनी हैं ॥ ४३ ॥

वार्ता च साऽसत्यपि नान्यमेति योगादरन्ध्रे हृदि यां निरुन्धे।
विरिञ्चिनानाननवादधौतसमाधिशास्त्रश्रुतिपूर्णकर्णः ॥ ४४ ॥

अथ स्वस्य एवंविधविश्वासहेतुत्वमाह वार्त्तेति। विरिञ्चेर्ब्रह्मणःनानाननैर्बहुमु-[खै]र्वादेन व्याख्यानेन धौतस्य शोधितस्य समाधिशास्त्रस्य संयमविद्यायाः श्रुत्या [श्र]वणेन पूर्णकर्णः चतुर्मुखाभ्यस्तवाङ्नियमनविद्य इत्यर्थः। अहमिति शेषः। योगात् [अ]रन्ध्रे निरवकाशे पूर्णे हृदि हृदये यां वार्त्तां निरुन्धे सा वार्त्ता लोकवार्त्ता किमुता-[र]हस्यवार्त्तेति भावः असत्यपि विनोदार्थं कथितापि किमुत सतीति भावः। असत्यपि [अ]न्यपुरुषान्तरं नैति न गच्छति। यथा ह्यसती दुश्चरी नीरन्ध्रस्थाने निरुद्धा नान्य-[मे]ति तद्वदिति भावः। अतोऽहमासां विश्वास्य इति पूर्वेणान्वयः। अत्र वार्त्तानिरो-[ध]स्य विरञ्चीत्यादिपदार्थहेतुकत्वात् काव्यलिङ्ग भेदः ॥ ४४ ॥

हे राजकन्यके! ब्रह्माजीके चारों मुखोंसे उपदेशित व्याख्यानोंसे परिपूर्ण योगशास्त्रादि [न]ियमोंसे सज्जित कर्णवाला, मैं अपने निरवकाश अन्तःकरणमें जो बात रोक लेता हूँ वह [ब]ात कभी विनोदमें भी अन्यों तक नहीं पहुंच सकती। अर्थात्—जो वात मैं सुनकर अपने [च]ित्तमें रख लेता हूं वह फिर कभी किसी से नहीं कहता। यह कला मैंने ब्रह्माजी के चारों [म]ुखोंसे दिये हुए भाषणोंको निरन्तर अपने कर्णोंमें योग शास्त्रकी समाधिके समान स्थिर [क]रके प्राप्त की है। जैसे ब्रह्माजीके उपदेशोंसे पवित्र योगशास्त्रको योगी लोग इतस्ततः [न]हीं कहते वैसे मैं भी इतस्ततः बकवाद नहीं करता। जैसे योगी समझकर बोलते हैं वैसे मैं [भ]ी समझकर बोलता हूँ। जैसे कुलटा स्त्री नीरन्ध्रस्थान में निरुद्ध होनेपर दूसरे पुरुषके [स]मीप नहीं जाती वैसे ही मेरे अन्तःकरणसे बात अन्यत्र नहीं जाती ॥ ४४ ॥

नलाश्रयेण त्रिदिवोपभोगं तवानवाप्यं लभते बतान्या।
कुमुद्वतीवेन्दुपरिग्रहेण ज्योत्स्नोत्सवं दुर्लभमम्बुजिन्याः ॥ ४५ ॥

अथ श्लोकद्वयेन [illegible] तवानवाप्यं त्वत्परि-[ग्र]हाभावात्त्वया दुरापं कृत्यानां कर्त्तरि वेति षष्ठी तृतीयार्थे। त्रिदिवः स्वर्गः पृषोद-

रादित्वात् साधुः । तस्य उपभोगं तादृग् भोगमित्यर्थः । तस्येन्द्रसदृशैश्वर्यंत्वाविति भावः । अम्बुजिन्या दुर्लभं इन्दुपरिग्रहाभावात्तया दुरापं ज्योत्स्नोत्सवं चन्द्रिकाभोगं इन्द्रोः कर्त्तुः परिग्रहेण कुमुदान्यस्यां सन्तीति कुमुद्वती कुमुदिनीव कुमुदनड्वेत-सेभ्यो ड्मतुप् मादुपधायाश्चेत्यादिना मकारस्य वकारः । नलस्य कर्त्तुराश्रयेण नल-स्वीकरणेन अन्या लभते बतेति खेदे । ईदृग्भोगोपेक्षिणीत्वं बुद्धिमान्द्यात् न शो-चसि इति भावः ॥ ४५ ॥

( अब दो श्लोकोंसे दमयन्तीके नलानुरागको उद्दीप्त करता है )

हे राजतनये ! यह बड़े दुःखकी बात है कि आपके द्वारा दुष्प्राप्य महाराज नलके साथ उनका आश्रय करके रहनेवाली अन्य अंगना उसी प्रकार स्वर्गीय आनन्दोपभोग लूट रही है जिस प्रकार अम्बुजिनियोंसे दुष्प्राप्य चन्द्रकी किरणोंका आनन्दोपभोग कुमुदिनियां करती हैं अर्थात्—जैसे रातको फूलनेवाली कुमुदिनियों को चन्द्रने अपनी स्त्रीरूपमें स्वीकारकर लिया है अतः वे उसकी सुन्दर किरणोंसे लाभ उठाती हैं। परन्तु, दिनमें विकसित होनेवाली अम्बुजिनियोंको चन्द्रने अपनी स्त्री रूपमें स्वीकार नहीं किया है। अतः वे उसकी किरणोंके सुखको नहीं प्राप्त कर सकती हैं ॥ ४५ ॥

**तन्नैषधानूढतया दुरापं शर्म त्वयास्मत्कृतचाटुजन्म ।**
**रसालवल्ल्या मधुपानुविद्धं सौभाग्यमप्राप्तवसन्तयेव ॥ ४६ ॥**

तदिति । किञ्च तत्प्रसिद्धमस्माभिः कृतेभ्यः प्रयुक्तेभ्यश्चाटुभ्यः प्रियवाक्येभ्यो जन्म यस्य तत्तज्जन्यमित्यर्थः । चाटुग्रहणं पूर्वोक्तनिजपक्षवीजनाद्युपलक्षणं शर्म सुखं त्वया अप्राप्तो वसन्तो यया तया वसन्तानधिष्ठितयेत्यर्थः । रसालवल्ल्या सहकार-श्रेण्या मधुपानुविद्धं सौभाग्यं रामणीयकमिव नैषधेन नलेन अनूढतया अपरिणीतत्वेन हेतुना दुरापन्तस्मात्ते नलपरिग्रहाय यत्नः कार्य्य इति भावः ॥ ४६ ॥

हे भीमसुते ! यदि आप महाराज नलके साथ परिणीता न होंगी तो आप मेरे द्वारा वर्णित मधुर नलस्तुतिसुखको उसी भांति न प्राप्त कर सकेंगी जिस भांति वसन्त के पहले फलने वाले आम्रकानन भौंरोंकी झंकारोंके सौभाग्य ( सुख ) को नहीं प्राप्त करते हैं। अतः महाराज नलके साथ परिणय करनेका प्रयत्न करें ॥ ४६ ॥

**तस्यैव वा यास्यसि किं न हस्तं दृष्टं विधेः केन मनः प्रविश्य ।**
**अजातपाणिग्रहणासि तावद्रूपस्वरूपातिशयाश्रयश्च ॥ ४७ ॥**

अथ पुनरस्या नलप्राप्त्याशां जनयन्नाह तस्येत्यादि । यद्वा तस्य नलस्यैव हस्तं किं न यास्यसि यास्यस्येवेत्यर्थः । केन विधेर्मन एव प्रविश्य दृष्टं विध्यानुकूल्यमपि सम्भावितमिति भावः । कुतस्तावदद्यापि अजातपाणिग्रहणा अकृतविवाहा असि तवायं विवाहविलम्बोऽपि नलपरिग्रहणार्थमेव किं न स्यादिति भावः । रूपं सौन्दर्यं स्वरूपं स्वभावः शीलमिति यावत् । तयोरतिशयः प्रकर्षस्तस्याश्रयश्चासि । योग्यगुणाश्रयत्वाच्च तद्धस्तमेव गमिष्यसीति भावः ॥ ४७ ॥

(अब नलप्राप्तिकी आशा उत्पन्न करते हुए कहता है:— )

हे तत्रभवति ! अथवा कौन जानता है कि, आपका विवाह उन नल महाराजके साथ न होगा। किसीने ब्रह्माजीके अन्तःकरणमें प्रविष्ट होकर देखा तो है नहीं कि, आपका विवाह कहां होगा कहां न होगा। हो सकता है आपका विवाह महाराज नलके साथ ही हो। क्योंकि, भाग्यवश आप अभी कुमारी हैं और रूप तथा स्वभावमें उन महाराजके आत्यन्तिक योग्य हैं ॥ ४७ ॥

**निशा शशाङ्कं शिवया गिरिशं श्रिया हरिं योजयतः प्रतीतः।**
**विधेरपि स्वारसिकः प्रयासः परस्परं योग्यसमागमाय ॥ ४८ ॥**

सत्यं विधिसङ्कल्पस्तु दुर्ज्ञेय इत्यत आह निशेति। निशा निशया पद्वन्नित्यादिना निशादेशः, शशाङ्कम्। शिवया गौर्या गिरीशं शिवं, श्रिया लक्ष्म्या हरिं च योजयतो विधेः प्रयासो यत्नोऽपि परस्परं योग्यसमागमाय योग्यसङ्घटनायैव स्वारसिकः स्वरसप्रवृत्तः प्रतीतः प्रसिद्धः ज्ञातः। निशाशशाङ्कादिदृष्टान्ताद्विधिसङ्कल्पोऽपि सुज्ञेय इति भावः ॥ ४८ ॥

हे नृपात्मजे ! ब्रह्माजी भी योग्यका सम्बन्ध तदनुरूप ही कराते हैं ये बातें स्पष्टतया हो जाती हैं। यथा—निशाका परिणय मृगलाञ्छनधारी चन्द्रके साथ, पार्वतीका उद्वाह गिरीशके साथ तथा लक्ष्मीका विवाह विष्णुके साथ उन्होंने कराया है। अतः आपका भी विवाह महाराज नल के साथ होगा ॥ ४८ ॥

**वेलातिगस्त्रैणगुणाब्धिवेणी न योगयोग्यासि नलेतरेण।**
**सन्दर्भ्यते दर्भगुणेन मल्लीमाला न मृद्वी भृशकर्कशेन ॥ ४९ ॥**

नलान्यसम्बन्धस्त्वयोग्य इत्याह वेलातिगेति। वेलामतिगच्छन्तीति वेलातिगा निःसीमाः स्त्रीणामिमे स्त्रैणाः गुणाः स्त्रीपुंसाभ्यां नञ्स्नञाविति वचनात् नञ्प्रत्ययः त एवाब्धिस्तस्य वेणी प्रवाहभूता त्वमिति शेषः। वेलाब्धिजलबन्धने काले सीम्नि च, वेणी तु केशबन्धे जलस्रुतौ इति वैजयन्ती। नलादितरेण योगयोग्या योगार्हा नासि, तथाहि मृद्वी मल्लीमाला भृशकर्कशेन दर्भगुणेन न संदर्भ्यते न सङ्गुम्फ्यते दृभग्रन्थ इति धातोः कर्मणि लट्। व्यतिरेकेण दृष्टान्तालङ्कारः ॥ ४९ ॥

हे महेन्द्रपुत्रि ! स्त्रीसौन्दर्यतटको पार कर जानेवाली सुन्दर स्त्रियोंके सौन्दर्य समुद्रकी आप वेणी स्वरूपा हैं अर्थात्—आप संसार की अपार सुन्दरियोंमें भी सुन्दरी हैं। अतः आप संसारमें अत्यन्त सुन्दरोमें सुन्दर महाराज नलको छोड़कर अन्यके साथ विवाह योग्य नहीं हैं। क्या संसारमें कोमल मल्लिका पुष्पोंको कठिन कुशकी रस्सीमें गूंथा जाता है ? कदापि नहीं। अतः आपका विवाह नैषधेशके ही साथ होगा ॥ ४९ ॥

**विधिं वधूसृष्टिमपृच्छमेव तद्यानयुग्यो नलकेलियोग्याम्।**



**त्वन्नामवर्णा इव कर्णपीता मयास्य संक्रीडति चक्रचक्रे ॥ ५० ॥**

विधिमिति । किं च विधिं ब्रह्माणं नलस्य केलेः क्रीडायाः योग्यामर्हां वधूस्त्रीनिर्म्माणं तस्य विधेर्यानस्य रथस्य युग्यो रथवोढा तत्र परिचित इत्यर्थः । तद्वहति रथयुगप्रासङ्गमिति यत्प्रत्ययः । अहमपृच्छमेव दुहादित्वाद् द्विकर्मकत्वं मया अस्य तद्यानस्य चक्रचक्रे रथाङ्गव्रजे संक्रीडति कूजति सति समोऽकूजन इति वक्तव्येऽपि कूजतेर्नात्मनेपदं त्वन्नामवर्णा इव मया कर्णेन पीताः गृहीताः न केवलं लिङ्गात् किन्त्वागमादपि ज्ञातोऽयमर्थ इत्यर्थः ॥ ५० ॥

हे कुमारी ! मैंने ब्रह्माजीके रथको चलाते हुए एकदा उनसे महाराज नलकी केलियोग्य वधूके निर्माण विषयमें पूछा था और उनके रथके पहियेकी कूजनमें आपके नामवाले अक्षर सुने थे । अर्थात्—ब्रह्माजीसे मैंने महाराज नलके विवाह योग्य वधूके लिए पूछा था तो उन्होंने आपके नामवाले अक्षरोंको कहा था किन्तु उनके रथके पहियेकी खड़खड़ाहटमें मैं स्पष्ट सुन नहीं सका ॥ ५० ॥

अन्येन पत्या त्वयि योजितायां विज्ञत्वकीर्त्या गतजन्मनो वा ।
जनापवादार्णवमुत्तरीतुं विधा विधातुः कतमा तरी स्यात् ॥ ५१ ॥

अन्येनेति । किं च अन्येन नलेतरेण पत्या त्वयि योजितायां घटितायां सत्यां विज्ञत्वकीर्त्या गतजन्मन; अभिज्ञत्वख्यात्यैव नीतायुषो विधातुर्वा जनापवादार्णवमुत्तरीतुं निस्तरीतुं घृतो वेति दीर्घः कतमा विधा कः प्रकारः तरी तरणिः स्यात् न कापीत्यर्थः । स्त्रियां नौस्तरणिः तरिः इत्यमरः । अतो दैवस्यापि स एव भर्तेति भावः ॥ ५१ ॥

हे राजपुत्रि ! आपका महाराज नलसे अतिरिक्त व्यक्ति के साथ विवाहका योग करनेमें ब्रह्माजीने यावदायु जो यश प्राप्त किया सो विनष्ट हो जायगा और वे ब्रह्माजी इस लोकापवाद रूपी समुद्रको पार करनेके लिए कौन सी नौका प्राप्त करेंगे । अर्थात्—यदि ब्रह्माजीने आपका विवाह नलसे अतिरिक्त व्यक्तिके साथ करनेको लिखा होगा तो उनकी जन्मभरकी कमाई हुई यह प्रसिद्धि "ब्रह्माजी योग्यके साथ योग्यका योग कराते हैं" नष्ट हो जायगी और लोग ब्रह्माजीको नाम धरेंगे कि "ब्रह्माजी अन्यायी हैं" और उस अन्यायका प्रतिकार ब्रह्माजी किस कामको करके हटावेंगे—कोई भी ऐसा काम नहीं जिससे ब्रह्माजी यह अपवाद दूर कर सकेंगे । अतः ब्रह्माजी ने इतनी बड़ी त्रुटि न की होगी और आपका विवाह महाराज नलके साथ ही लिखा होगा ॥ ५१ ॥

आस्तां तदप्रस्तुतचिन्तयालं मयासि तन्वि श्रमितातिवेलम् ।
सोऽहं तदागः परिमार्ष्टुकामस्तवेप्सितं किं विदधेऽभिधेहि ॥ ५२ ॥

इत्थमाशामुत्पाद्य अस्याश्चित्तवृत्तिपरिज्ञानाय प्रसङ्गान्तरेण निगमयति आस्तामिति । तत्पूर्वोक्तमास्तां तिष्ठतु अप्रस्तुतचिन्तया अलं तया साध्यं नास्तीत्यर्थः । गम्यमानसाधनक्रियापेक्षया करणत्वात्तृतीया अत एवाह न केवलं श्रूयमाणक्रियापेक्षया कारकोत्पत्तिः किन्तु गम्यमानक्रियापेक्षयाऽपि इति न्यासकारः । किन्तु हेतन्वि

कृशाङ्गि ! मया अतिवेलं अत्यर्थं श्रमिता खेदितासि श्रमेर्ण्यन्तात् कर्मणि क्तः । तत् श्रमणरूपमागोऽपराधं परिमाष्टुंकामः परिहर्तुकामः । तुं काममनसोरपीति मकारलोपः । सोऽहं किं त्वदीप्सितं तव मनोरथं विदधे कुर्वे अभिधेहि ब्रूहि ॥ ५२ ॥

( अब उसकी चित्तवृत्ति जानने के लिए कहता है:— )

हे भैमि ! अब अप्रस्तुत चिन्ताएं दूर की जायँ—वृथाकी चिन्ताओं से क्या लाभ ! हे कृशाङ्गि ! आप मेरे द्वारा अति दुःखी की गयी हैं—थकायी गयी हैं। अतः उस दुःख रूपी अपराधके क्षमार्थ में आपके किसी मनोरथको पूरा करना चाहता हूं । कृपया, कहिये आपका कौन सा मनोरथ मैं पूर्ण करूं ॥ ५२ ॥

इतीरयित्वा विरराम पत्री स राजपुत्रीहृदयं बुभुत्सुः ।
ह्रदे गभीरे हृदि चावगाढे शंसन्ति कार्यावतरं हि सन्तः ॥ ५३ ॥

इतीति । स पत्री हंसः इति ईरयित्वा राजपुत्र्या भैम्या हृदयं बुभुत्सुर्जिज्ञासुर्विरराम तूष्णीं बभूव व्याङ्परिभ्यो रम इति परस्मैपदं तथाहि सन्तः कार्यज्ञाः गभीरे अगाधे हृदि ह्रदे च अवगाढे प्रविश्य दृष्टे सति कार्यस्य स्नानादे रहस्योक्तेश्च अवतरं तीर्थं प्रस्तावं च शंसन्ति कथयन्ति अन्यथा अनर्थः स्यादिति भावः । अवतरो व्याख्यातः अर्थान्तरन्यासोऽलङ्कारः ॥ ५३ ॥

श्रीहर्ष कहते हैं कि—कुमारी दमयन्तीके हार्दिक भावोंको जाननेके निमित्त उपर्युक्त रीतिसे वह राजहंस दमयन्तीसे निवेदन करके मौन हो गया । सज्जन लोग अन्य सज्जनोंके तालावोंके समान गम्भीर चित्तोंकी वृत्तियोंको परिज्ञात करके तब उनसे अपने मनोभाव प्रकट करते हैं । अथवा सज्जन लोग सज्जनोंके चित्तोंके समान निर्मल तालाबोंको गम्भीरता देखकर तब उसमें स्नान आदिका जाने-आनेका मार्ग पूछते हैं बिना तालाब को देखे कुछ नहीं पूछते हैं । अन्यथा अनर्थकी सम्भावना होती है अर्थात्-दूसरोंकी चित्तवृत्ति जाने बिना कुछ कहना हानिकर होता है तथा बिना तालाब के देखे उसमें स्नान आदिके लिये पूछना हानिकर होता है ॥ ५३ ॥

किञ्चित्तिरश्चीनविलोलमौलिर्विचिन्त्य वाचं मनसा मुहूर्तम् ।
पतत्रिणं सा पृथिवीन्द्रपुत्री जगाद वक्त्रेण तृणीकृतेन्दुः ॥ ५४ ॥

किञ्चिदिति । किञ्चित्तिरश्चीना स्वाभावादीषत्साचीभूता विलोला आयासाद्विलुलिता मौलिः केशबन्धो यस्याः सा मौलयः संयताः कचा इत्यमरः । वक्त्रेण तृणीकृतेन्दुरधःकृतचन्द्रः । सा पृथिवीन्द्रपुत्री भैमी मुहूर्तमल्पकालं मनसा वाच्यं वचनीयं विचिन्त्य पर्यालोच्य पतत्रिणं जगाद ॥ ५४ ॥

ततः अपने केश कलापोंको कुछ तिरछा करती हुई और अपने मुखसे चन्द्रकी शोभा को तृणके सदृश फीकी करती हुई वे पृथिवीन्द्रपुत्री कुमारी दमयन्ती क्षणभर चित्तमें विचार करके उस राजहंससे बोलीं ॥ ५४ ॥

धिक्चापले वत्सिमवत्सलत्वं यत्प्रेरणादुत्तरलीभवन्त्या ॥
समीरसङ्गादिव नीरभङ्ग्या मया तटस्थस्त्वमुपद्रुतोऽसि ॥ ५५ ॥

धिगिति। चापले चपलकर्मणि युवादित्वादण् वत्सस्य भावः वत्सिमा शिशुत्वं पृथ्वादित्वादिमनिच तेन निमित्तेन वत्सलत्वं वात्सल्यं बाल्यत्वप्रयुक्तचापलमित्यर्थः। तद्धिक कुतः यस्य चापलवात्सल्यस्य प्रेरणादुत्तरलीभवन्त्या चपलायमानया समीरसङ्गाद्वाताहतेरुत्तरलीभवन्त्या नीरभङ्ग्या जलवीच्येव तटस्थः उदासीनः कूलं गतश्च त्वमुपद्रुतः पीडितोऽसि अतः अधर्महेतुत्वाद्बालचापलं सोढव्यमिति भावः ॥५५॥

हे राजहंस! चपल कर्ममें प्रवृत्त इस बाल चाञ्चल्य को धिक्कार है जिस चाञ्चल्यकर्म को करती हुई मेरे द्वारा आप ऐसे तटस्थ व्यक्ति उसी प्रकार उत्पीडित किये गये जिस प्रकार पवन संसर्ग से चाञ्चल्यमान जल तरङ्गें तटपर के व्यक्ति को उत्पीड़ित करती हैं। अर्थात्—आप ऐसे सुन्दर और भले पक्षीको जो मैं पकड़ने दौड़ी वह मेरा बालचाञ्चल्य था ॥ ५५ ॥

आदर्शतां स्वच्छतया प्रयासि सतां स तावत्खलु दर्शनीयः।
आगः पुरस्कुर्वति सागसं मां यस्यात्मनीदं प्रतिबिम्बितं ते ॥ ५६ ॥

आदर्शतामिति। स्वच्छतया नैर्मल्यगुणेन आदृश्यते पुरोगतवस्तुरूपमस्मिन्निति आदर्शो दर्पणस्तत्तां प्रयासि कुतः यस्य स्वच्छस्य ते तव सन्निधानि सागसं सापराधां मां पुरस्कुर्वति पूजयति अग्रे कुर्वाणे च आत्मनि बुद्धौ स्वरूपे च पुरस्कृतः पूजिते स्यादभियुक्तेऽग्रतः कृते। आत्मा यत्नो धृतिर्बुद्धिः स्वभावो ब्रह्मवर्ष्मणीति चामरः। इदं मदीयमागोऽपराधः प्रतिबिम्बितं प्रतिफलितं पुरोवर्त्ति धर्म्मिणामात्मनि संक्रमणादादर्शोऽसीत्यर्थः। ततः किमतः आह सः आदर्शः सतां साधूनां तावत्प्रथमं दर्शनीयः अथवा पूज्यश्चेति तावच्छब्दार्थः खलु रोचनं चन्दनं हेम मृदङ्गं दर्पणं मणिं। गुरुमग्निं तथा सूर्यं प्रातः पश्येत् सदा बुध इदि शास्त्रादिति भावः ॥ ५६ ॥

हे राजहंस! आपकी सुन्दर और स्वच्छता दर्पणके सदृश विमल है। जिसमें मेरे दोष स्पष्टतया प्रतिबिम्बित हो रहे हैं। इसपर भी आप अपने अपराधको मुझसे क्षमा कराने के लिये प्रार्थी हैं उससे आपकी सज्जनताकी पराकाष्ठा हो जाती है—आप सज्जनों में आदर्शरूप हैं। अर्थात्—आप इतने स्वच्छ हृदय वाले हैं कि मुझ अपराधिनी को केवल क्षमा ही नहीं कर रहे हैं अपितु, मुझे पुरस्कृत भी कर रहे हैं—मेरी पूजा भी कर रहे हैं। अतः आप मुझसे ही पूज्य हैं ॥ ५६ ॥

अनार्यमप्याचरितं कुमार्या भवान्मम क्षाम्यतु सौम्य! तावत्।
हंसोऽपि देवांशतयाभिवन्द्यः श्रीवत्सलक्ष्मेव हि मत्स्यमूर्तिः ॥ ५७ ॥



अनार्यमिति। हे सौम्य! भवान् कुमार्याः शिशोर्मम सम्बन्धि अनार्यमप्याचरितं त्वदुपद्रवरूपं दुश्चेष्टितं क्षाम्यतु सहतां हंसोऽपि तिर्यगपीत्यर्थः। त्वमिति शेषः

भवानित्यनुषङ्गे अर्सीति मध्यमपुरुषायोगात् देवाँशतया मत्स्यमूर्तिः श्रीवत्सलक्ष्म विष्णुरिव वन्द्योऽसि ॥ ५७ ॥

हे सौम्य ! आप मुझ बालिकाके अनुचित दुश्चेष्टाओंको ( अपराधोंको ) क्षमा करें। आप हंस योनिमें होनेपर भी देवांशभूत हैं और मत्स्यावतार श्रीवत्समणिधारी भगवान् विष्णुके समान पूज्य हैं। जैसे-मत्स्यमें विष्णुके अंश आनेपर उसकी पूजा होती तद्वत् पक्षी होनेपर भी आपमें देवांश है अतः आप पूज्य हैं ॥ ५७ ॥

मत्प्रीतिमाधित्ससि कां त्वदीक्षामुदं मदक्ष्णोरपि यातिशेताम् ।
निजामृतैर्लोचनसेचनाद्वा पृथक्किमिन्दुस्सृजति प्रजानाम् ॥ ५८ ॥

अथ यदुक्तं त्वयेप्सितं किं विदधे। अभिधेहीति तत्रोत्तरमाह मत्प्रीतिमिति। कां मत्प्रीतिं किंवा मदीप्सितमित्यर्थः। आधित्ससि आधातुं कर्तुमिच्छसि दधातेः सन्नन्तात्लट्। या प्रीतिर्मदक्ष्णोः त्वदीक्षामुदं त्वदीक्षणप्रीतिमतिशेतान्त्वद्दर्शनोत्सवादन्यत्किं ममेप्सितमित्यर्थः। तथाहि इन्दुः प्रजानां जनानां निजामृतैर्लोचनसेचनात् पृथक् अन्यत् पृथग्विनेत्यादिना पञ्चमी। किंवा सृजति करोति न किञ्चित् करोतीत्यर्थः। दृष्टान्तालङ्कारः ॥ ५८ ॥

( अब अपना ईप्सित वस्तुके विषयमें कहती हैं— )

हे राजहंस ! मेरी मनःकामना आपके दर्शनरूपी आनन्दसे अधिक क्या हो सकती है जिसे पूरी करनेके लिए आपसे कहूं, और आप उसे पूरी भी करेंगे। चन्द्र अपनी अमृतरूपी किरणोंसे दर्शकोंके नेत्रोंके सींचनेके अतिरिक्त क्या अधिक करता है किन्तु वह अमृतसेचन दर्शकोंको कल्याणकर होता है। उसी प्रकार आपके दर्शनरूपी आनन्दसे बढ़कर मेरी आंखों के समक्ष और कुछ नहीं है ॥ ५८ ॥

मनस्तु यं नोज्झति जातु यातु मनोरथः कण्ठपथं कथं सः ।
का नाम बाला द्विजराजपाणिग्रहाभिलाषं कथयेदभिज्ञा ॥ ५९ ॥

अथ सर्वथा मनोरथः कथनीयः इत्यभिप्रेत्य तन्न शक्यमित्याह, मनस्त्विति। मनो मच्चित्तं कर्तृ यं मनोरथं जातु कदापि नोज्झति न जहाति स मनोरथः कण्ठपथं वाग्विषयं उपकण्ठदेशं च कथं यातु सम्भावनायां लोट् सम्भावनापि नास्तीत्यर्थः। केनापि प्रतिबद्धस्य मनोरथस्य कथमन्तिकेऽपि सञ्चार इति भावः कुतः अभिज्ञा विवेकिनी का नामवाला का वा स्त्री द्विजराजस्य इन्दोः पाणिना ग्रहे ग्रहणे अभिलाषं कथयेत्। तथा द्विज! पक्षिन्! राजपाणिग्रहाभिलासं नलपाणिग्रहणेच्छामिति च गम्यते तथा च दुर्लभजनप्रार्थना द्विजराजपाणिग्रहणकल्पा परिहासास्पदीभूता कथं लज्जावत्या वक्तुं शक्या इत्यर्थः। पूर्व्व एवालङ्कारः ॥ ५९ ॥

( मेरा मनोरथ सर्वथा कमनीय है अतः उसे कहनेमें असमर्थ हूं )—

हे राजहंस ! जिस मनःकामनाको मन कभी अपनेसे अलग नहीं करता है उस मनोभावनाको मैं मनसे अलग करके कण्ठके प्रदेशतक कैसे लाऊं। भला ऐसी कौनसी विवेकिनी

बाला है जो चन्द्रको अपने हाथसे पकड़नेकी अभिलाषाको किसीसे कहेगी क्योंकि यह अभिलाषा उसकी कभी पूर्ण नहीं हो सकती। अथवा हे द्विज ! (पक्षिवर) नलपाणिग्रहण-की अभिलाषा कौन बाला अपने मुखसे लज्जावश कह सकती है। यद्यपि उस बालाकी इच्छा तो है पर कह नहीं सकती है—प्रौढ़ाएं कह सकती हैं ॥ ५९ ॥

वाचं तदीयां परिपीय मृद्वीं मृद्वीकया तुल्यरसां स हंसः ।
तत्याज तोषं परपुष्टघुष्टे घृणाञ्च वीणाक्वणिते वितेने ॥ ६० ॥

**वाचमिति । स हंसः मृद्वीकया द्राक्षया मृद्वीका गोस्तनी द्राक्षेत्यमरः । तुल्यरसां समानस्वादां मधुरार्थामित्यर्थः । मृद्वीं मधुराक्षरां तदीयां वाच परिपीय अत्यादरादाकर्ण्य परपुष्टघुष्टे कोकिलकूजिते तोषं प्रीतिं तत्याज वीणाक्वणिते च घृणां जुगुप्सां घृणा जुगुप्साकृपयोरिति विश्वः । वितेने ॥ ६० ॥**

ततः उस राजहंसने द्राक्षाके समान मीठी-मीठी वाणी उस कुमारी दमयन्तीकी सुनकर कोयलोंकी मधुर कूजनकी ओर प्रीति त्याग दी और वीणाकी मृदु झङ्कारपर भी घृणा प्रकट की। अर्थात् उस राजकुमारी दमयन्तीकी मधुराक्षरमयी वाणी कोयलोंकी मीठी तानों तथा वीणाकी मृदु झंकारोंसे भी मधुरतम थी। अतः अति आदरके साथ उसने उसकी वाणी को सुना ॥ ६० ॥

मन्दाक्षमन्दाक्षरमुद्रमुक्त्वा तस्यां समाकुञ्चितवाचि हंसः ।
तच्छंसिते किञ्चन संशयालुर्गिरा मुखाम्भोजमयं युयोज ॥ ६१ ॥

**मन्दाक्षमिति । तस्यां भैम्यां मन्दाक्षेण ह्रिया मन्दा स्वल्पाः अर्थाः अक्षरमुद्रा द्विजराजपाणिग्रहेत्याद्यक्षरविन्यासो यस्मिन् तत्तथोक्तमुक्त्वा समाकुञ्चितवाचि नियमितवचनायां सत्यामयं हंसस्तच्छंसिते भैमीभाषिते किञ्चन किञ्चित्संशयालुः सन्दिहानः सन् स्पृहिगृहीत्यादिना आलुच् प्रत्ययः । मुखाम्भोजं गिरा युयोज मुखेन गिरमुवाचेत्यर्थः ॥ ६१ ॥**

कुमारी दमयन्ती द्वारा लज्जापूर्वक अल्पाक्षरमयीश्लेष वाणी कही जानेके पश्चात् मौनवृत्ति धारण करनेपर उस राजहंसको उसकी श्लेषमयी वाणीपर सन्देह हुआ। अतः उसने उक्त सन्देहके निराकरणार्थ अपने मुखरूपी कमलको वाणीसे परिपूरित किया। उस राजहंसने कुमारी दमयन्तीसे पूछा—॥ ६१ ॥

करेण वाञ्छेव विधुं विधर्तुं यमित्थमात्थादरिणी तमर्थम् ।
पातुं श्रुतिभ्यामपि नाधिकुर्वे वर्णं श्रुतेर्वर्ण इवान्तिमः किम् ॥ ६२ ॥

**करेणेति । हे भैमि ! करेण विधुं चन्द्रं विधर्तुं गृहीतुं वाञ्छेव यमर्थमित्थं द्विजराजपाणिग्रहेत्याद्युक्तप्रकारेण आदरिणी आदरवती सती आत्थ ब्रवीषि ब्रुवः पञ्चानामिति ब्रुवो लटि सिपि थलादेशः ब्रुवश्चाहादेशः आहस्थ इति हकारस्य थकारः तमर्थमन्ते भवाऽन्तिमो वर्णः शूद्रः अन्ताच्चेति वक्तव्यमिति डमच् । श्रुतेर्वर्णं वेदाक्ष-**

मिव श्रुतिभ्यां पातुं श्रोतुमपीत्यर्थः । नाधिकुर्वे नाधिकार्य्यस्मि किं ? अस्म्येवेत्यर्थः । अतः सोऽर्थो वक्तव्य इति तात्पर्यम् ॥ ६२ ॥

हे भैमि ! आपने "हाथसे चन्द्रको पकड़नेकी इच्छाके समान" जो श्लेषमयी वाणी कही तो, क्या आप अपना अभिप्राय मुझे स्पष्ट नहीं बता सकतीं । अथवा जैसे—वेदको सुननेका अधिकार अन्तिम वर्ण ( शूद्र ) को नहीं है । वैसे ही मुझे भी आपकी उस वाणी का सुननेका, कानोंसे, अधिकार नहीं है ? अर्थात्—आप श्लेष न कहकर स्पष्ट कहें । ऊपर आपने नलपाणिग्रहणकी बात श्लेषमें कही है—"द्विजराज पाणिग्रहणाभिलाषम्" आदि ॥ ६२ ॥

अर्थाप्यते वा किमियद्भवत्या चित्तैकपद्यामपि वर्त्तते यः ।
यत्रान्धकारः खलु चेतसोऽपि जिह्मेतरैर्ब्रह्म तदप्यवाप्यम् ॥ ६३ ॥

ननु तमर्थमत्यन्तदुर्लभत्वाद्वक्तुं जिह्मेमीत्याशङ्क्याह अर्थाप्यत इति । हे भैमि ! भवत्या किंवा इयदेतावद्यथा तथा अर्थाप्यते किमर्थमयमर्थो द्विजराजप्राणिग्रहवदति-दुर्लभत्वेनाख्यायत इत्यर्थः । अर्थशब्दात्तदाचष्टे इत्यर्थे णिच् अर्थवेदसत्यानामापुग्व-क्तव्य इत्यापुगागमः । कुतस्तथा नाख्येय इत्यत आह योऽर्थं एकः पादो यस्यामित्ये-कपदी एकपादसञ्चारयोग्यमार्गः । वर्त्तन्येकपदीति चेत्यमरः । कुम्भपदीषु चेति निपा-तनात् साधुः । चित्तैकपद्यां मनोमार्गेऽपि वर्त्तते चक्षुराद्यविषयत्वेऽपीत्यपिशब्दार्थः स कथं दुर्लभ इति भावः । तथाहि यत्र यस्मिन् ब्रह्मणि विषये चेतसोऽप्यन्धकारः प्रतिबन्धः तद् ब्रह्म जिह्मेतरैरकुटिलैः कुशलधीभिरिति यावत । अवाप्यं सुप्रापं अमनोगम्यं ब्रह्मापि कैश्चिद्गम्यते किमुत मनोगतोऽयमर्थः । अतएवार्थापत्तिरलङ्कारः । कैमुत्येनार्थान्तरापतनमर्थापत्तिरिति वचनात् ॥ ६३ ॥

हे कुमारी ! यदि आप कहें कि मेरी मनःकामना अति दुष्प्राप्य वस्तुकी प्राप्तिरूपा है तो भी वह साध्य ही है । हे भैमि ! आप श्लेषयुक्त वचनोंसे क्यों अपनी मनःकामना दुष्प्राप्य समझ रही है—बुद्धिमानोंके द्वारा चित्तसे अपरिचित अन्धकार स्थान की भी वस्तु प्राप्त की जा सकती हैं । अथवा चित्तसे अपरिज्ञात ब्रह्म भी बुद्धिमानोंके द्वारा प्राप्तकर लिया जाता है तो आपकी परिज्ञात मनोकामना, जिसके मन, आंख आदि अवयव चरण-रूपमें विराजमान हैं, क्या अपनी इष्ट दुर्लभ वस्तुको बुद्धिसे प्राप्त नहीं कर सकती—अवश्य कर सकती है । आप नलको प्राप्त कर सकती हैं । इसे असम्भव मत कहिये—सम्भव कहिये ॥ ६३ ॥

ईशाणिमैश्वर्यविवर्तमध्ये लोकेशलोकेशयलोकमध्ये ।
तिर्यञ्चमप्यञ्च मृषानभिज्ञरसज्ञतोपज्ञसमज्ञमज्ञम् ॥ ६४ ॥

अथ मयि मृषावादित्वशङ्कया वक्तुं सङ्कोचस्तच्च न शङ्कितव्यमित्याह ईशेत्या-दिना त्रयेण । ईशस्य यदणिमैश्वर्य्यं तस्य विवर्त्तो रूपान्तरं मध्यो यस्याः सा तथोक्ता हे कृशोदरीत्यर्थः । लोकेशलोके शेरत इति लोकेशलोकेशयाः ब्रह्मलोकवासिनः

अधिकरणे शेतेरित्यच्प्रत्ययः । शयवासवासिष्वकालादित्युलुक् तेषां लोकानां जनानां मध्ये अज्ञं मूढं तिर्य्यञ्च पक्षिणमपि मामिति शेषः । मृषा अनृतं तस्य अनभिज्ञा रसज्ञा रसना यस्य तस्य भावस्तत्ता सत्यवादितेत्यर्थः । उपज्ञायत इति उपज्ञा आदावुपज्ञाता, उपज्ञा ज्ञानमाद्यं स्यादित्यमरः । आतश्चोपसर्गे इत्यङ्प्रत्ययः बहुलग्रहणात् कर्मार्थत्वं तथात्वेन ज्ञातं तदुपज्ञं उपज्ञोपक्रमं तदाद्याचिख्यासायामिति नपुंसकत्वं समं साधारणं सर्वैर्ज्ञायत इति समज्ञा कीर्त्तिः पूर्ववदङ्प्रत्ययः तदुपज्ञं तथात्वेनाज्ञाता समज्ञा कीर्त्तिर्येन तं तथोक्तं मां अञ्च सत्यवादिनं विद्धीत्यर्थः । अञ्चतेर्गत्यर्थत्वात् ज्ञानार्थत्वम् ॥ ६४ ॥

हे देवि ! हे कृशोदरि !! मुझे आप मिथ्या जल्पक समझ कर अपने भावोंको न छिपावें क्योंकि मैं राजहंस निम्न रीतिका हूं उसे आप ज्ञात करलें—

हे शिवकी अणिमादिविवर्त्तरूप कमरवाली कुमारी दमयन्ती ! आप मुझे ब्रह्माण्ड निवासियोंमें केवल मूर्ख पक्षी ही समझ कर यह भी समझ लीजिये कि मेरी जीभ असत्यको बोलना, बोलना ही नहीं जानती अपितु, सत्य ही बोलती है तथा मेरी बुद्धि प्राकृतिक ज्ञान ( स्वभावतः ज्ञान ) को रखनेवाली कीर्तिसे सज्जित है । अर्थात् मैं सत्यवादी और आदिज्ञानपूर्ण पक्षी हूं ॥ ६४ ॥

**मध्ये श्रुतीनां प्रतिवेशिनीनां सरस्वती वासवती मुखे नः ।**
**ह्रियेव ताभ्यश्चलतीयमद्धापथान्न संसर्गगुणेन बद्धा ॥ ६५ ॥**

मध्य इति । किं च प्रतिवेशिनीनां प्रवेश्मानां श्रुतीनां वेदानां ब्रह्ममुखस्थानां श्रुतीनां मध्ये वासवती निवसन्ती इयं नोऽस्माकं मुखे सरस्वती वाग् संसर्ग एव गुणः श्लाघ्यधर्मः तन्तुश्च तेन बद्ध्वा सती ताभ्यः श्रुतिभ्यो ह्रियेवेत्युत्प्रेक्षा। अद्धापथात्सत्यमार्गान्न चलति संसर्गजा दोषगुणा भवन्तीति भावः । सत्ये त्वद्धाञ्जसाद्वयमित्यमरः ॥ ६९ ॥

हे कुमारी दमयन्ती ! ब्रह्माजीके मुखमें रहनेवाली अपनी पड़ोसिनोंके समीप रहनेवाली मेरी मुखवाणी संसर्ग गुणोंसे कभी भी लज्जाके मारे अपथमें नहीं जाती । अर्थात्—मैं ब्रह्माका वाहन हूं और ब्रह्माके मुखमें वेद विद्याओंका वास है । अतः वेद विद्याएं मेरे मुखमें रहनेवाली वाणीकी पड़ोसिनें हैं । पड़ोसियोंकी चाल-ढाल लोगोंमें आ ही जाती है तथा लोग कुछ ऐसे कार्य भी पड़ोसियोंके भयसे नहीं करते जो लज्जाकर हों । ब्रह्माजीके वेद सदा सत्य बोलते हैं अतः उनके संसर्गसे मेरी वाणी भी सत्य ही बोलती है ॥ ६५ ॥

**पर्यङ्कतापन्नसरस्वदङ्कां लङ्कापुरीमप्यभिलाषि चित्तम् ।**
**कुत्रापि चेद्वस्तुनि ते प्रयाति तदप्यवेहि स्वशये शयालु ॥ ६६ ॥**

ततः किमित्यत आह पर्य्यङ्केति । कुत्रापि वस्तुनि द्वीपान्तरस्थेऽपीति भावः । अभिलाषि साभिलाषं ते तव चित्तं पर्य्यङ्कतां खट्वाङ्गत्वमापन्नः सरस्वान् सागरोऽङ्कश्चिह्नं यस्यास्तामतिदुर्गमामित्यर्थः । तां लङ्कापुरीमपि प्रयाति चेत्तदपि तदङ्ग

गंस्थमपि स्वशये स्वहस्ते शयालुस्थितमवेहि पर्यस्तमपि पर्यङ्कस्थमिव जानीहि ॥६६॥

हे कुमारी ! आपके चित्तको, इस विश्वमें स्थित किसी भी स्थलकी वस्तुकी अभिलाषा हो तो उसे आप अपने हाथमें ही समझें। यहां तक कि, समुद्रके अंकमें पड़ी हुई लङ्काकी भी वस्तु मैं ला सकता हूं ॥ ६६ ॥

इतीरिता पत्त्ररथेन तेन ह्रीणा च हृष्टा च बभाण भैमी ।
चेतो नलं कामयते मदीयं नान्यत्र कुत्रापि च साभिलाषम् ॥ ६७ ॥

इतीति । तेन पत्त्ररथेन पक्षिणा हंसेन इतीत्थमीरिता उक्ता भैमी ह्रीणा स्वयमेव स्वाकूतकथनसङ्कोचात् लज्जिता नुदविदेत्यादिना विकल्पान्निष्ठानत्वम् । हृष्टा उपायलाभान्मुदिता च सती बभाण । किमिति मदीयं चेतो लङ्कां नायते किन्तु नलं राजानं कामयत इति श्लेषभङ्ग्या बभाणेत्यर्थः । अन्यत्र कुत्रापि वस्तुनि साभिलाषं न ॥ ६७ ॥

उस राजहंसके द्वारा उपर्युक्त बात कही जानेपर कुमारी दमयन्तीने लज्जा और हर्षान्वित होकर कहा—"हे राजहंस ! मेरा चित्त लंकापुरी आदि किसी स्थलकी वस्तु नहीं चाहता है। अथवा मेरा चित्त नलको चाहता है। इस श्लोकमें "नलं कामयते" पदमें श्लेष है। एक बार "लङ्कां नायते" पद विग्रहसे "लङ्काको नहीं चाहती" अर्थात्—लङ्का आदिकी वस्तु नहीं चाहती हूं। और दूसरी बार "नलं कामयते" पद विग्रहसे "नलको चाहती हूं" अर्थ निकलता है ॥ ६७ ॥

विचिन्त्य बालाजनशीलशैलं लज्जानदीमज्जदनङ्गनागम् ।
आचष्ट विस्पष्टमभाषमाणामेनां स चक्राङ्गपतङ्गशक्रः ॥ ६८ ॥

विचिन्त्येति । विस्पष्टमभाषमाणां श्लेषोक्तिवशात्संदिग्धमेव भाषमाणामित्यर्थः । एनां दमयन्तीं सः चक्राङ्गपतङ्गशक्रः हंसपक्षिश्रेष्ठः बालाजनस्य मुग्धाङ्गनाजनस्य शीलं स्वभावमेव शैलं लज्जायामेव नद्यां मज्जदनङ्गनागो यस्य तं विचिन्त्य विचार्य आचष्ट तस्य लज्जाविजितमन्मथत्वं ज्ञात्वा लज्जाविसर्जनार्थं वाक्यमुवाचेत्यर्थः ॥६८॥

जिस समय मुग्धांगना दमयन्तीके शीलरूपी पर्वतके ऊपर लज्जारूपी नदीमें कामदेव रूपी हाथी स्नान कर रहा था—उस समय श्लेषमयी वाणीमें बोलनेवाली उस कुमारी दमयन्तीसे विचारकर हंसोंमें श्रेष्ठ उस राजहंसने कहा—। अर्थात्—लज्जाके वशीभूत अस्पष्ट बोलनेवाली कुमारी दमयन्तीसे राजहंसने कहा—॥ ६८ ॥

नृपेण पाणिग्रहणे स्पृहेति नलं मनः कामयते ममेति ।
आश्लेषि न श्लेषकवेर्भवत्याः श्लोकद्वयार्थस्सुधिया मया किम् ॥ ७६ ॥

नृपेणेति । श्लेषकवेः श्लेषभङ्ग्या कवयित्र्याः श्लिष्टशब्दप्रयोक्त्र्या इत्यर्थः कविवर्णन इति धातोरौणादिक इकारप्रत्ययः । भवत्यास्तव सम्बन्धि नृपेण कर्त्रा पाणिग्रहणं पाणिपीडनं उभयप्राप्तौ कर्मणीति विहितायाः षष्ठ्या कर्मणि चेति समास-

निषेधेऽपि शेषे षष्ठीसमासः तत्र स्पृहेति मम मनो द्विजराजपाणिग्रहेति चेतो नलं कामयत इति श्लोकद्वयार्थः सुधिया मया विदुषा नाश्लेषि नाग्राहि किं ? गृहीत एवेत्यर्थः ॥ ६९ ॥

हे भैमि ! "द्विजराजपाणिग्रहणाभिलापं" "नलंकामयते" श्लेष वाक्योंको मैं नहीं समझ सकता क्या—मेरे ऐसे विज्ञ अवश्य इन श्लेष वाक्योंको समझ सकते हैं ॥ ६९ ॥

त्वच्चेतसः स्थैर्यविपर्ययं तु सम्भाव्य भाव्यस्मि तदज्ञ एव ।
लक्ष्ये हि बालाहृदि लोलशीले दरापराद्धेषुरपि स्मरस्स्यात् ॥ ७० ॥

तर्हि किमर्थं करेण वाञ्छेत्यादिकं अज्ञवदुक्तमित्यत आह त्वच्चेतस इति । किन्तु त्वच्चेतसः स्थैर्यविपर्ययमस्थिरत्वं संभाव्य आशङ्क्य तदज्ञः तस्य श्लोकद्वयार्थस्य अज्ञः अनभिज्ञः भावी भविष्यन् भविष्यति गम्यादय इति साधुः अस्मि । त्वच्चित्तनिश्चयपर्यन्तमित्यर्थः धातुसम्बन्धे प्रत्यया इति भविष्यत्ता वा गुणत्वाद्वर्तमानतानुरोधः नन्वेवमनुरक्तायां मयि कुत इयं शङ्केत्याशङ्क्य स्त्रीणां चित्तचाञ्चल्यसम्भवादित्याह लक्ष्य इति । लोलशीले चञ्चलस्वभावे बालाहृदि चित्त एव स्मरोऽपि दरापराद्धेषुः ईषच्च्युतसायकः स्यात् कुशलोऽपि धन्वी चललक्ष्यात्कदाचिदपराध्यत इति भावः । अपराद्धपृषत्कोऽसौ लक्ष्याच्च्युतसायकः इत्यमरः । अर्थान्तरन्यासोऽलङ्कारः ॥ ७० ॥

हे कुमारी ! आपके चित्तकी अस्थिरताकी आशङ्कासे मैं इस प्रकारसे अज्ञ होकर पूछ रहा हूं क्योंकि चन्चल स्वाभाववाली बालाओंके हृदयरूपी लक्ष्य भेदनमें कभी–कभी कामदेव भी चूक जाता है । जैसे चतुर बाण चलाने वाले कभी–कभी अपने चञ्चल स्वभाव के कारण लक्ष्य भेदमें चूक कर देते हैं और बाण इधर–उधर चला जाता है वैसे ही कामदेव भी जिसका लक्ष्य केवल बालाओंके चित्तोंको भेदन करना रहता है अपने चञ्चल स्वभावसे चूक कर देता है । अतः उसी चञ्चल स्वभावको जाननेके लिए मैं अज्ञ सा हो गया हूं ॥७०॥

महीमहेन्द्रः खलु नैषधेन्दुस्तद्बोधनीयः कथमित्थमेव ।
प्रयोजनं सांशयिकम्प्रतीदृक्पृथग्जनेनेव स मद्विधेन ॥७१॥

महीति । नैषधः इन्दुरिव नैषधेन्दुर्नलचन्द्रः महीमहेन्द्रो भूदेवेन्द्रः खलु तस्मात् स नलःपृथग्जनेन प्राकृतजनेनेव मद्विधेन मादृशा विदुषा ईदृक् सांशयिकं सन्देहदुःस्थं अस्थिरं प्रयोजनं प्रति इत्थमेव मुग्धाकारेणैव कथं बोधनीयः अनर्हमित्यर्थः गतिबुद्धीत्यादिना अणिकर्तुर्नलस्य कर्मत्वं ण्यन्ते कर्तुश्च कर्मण इति अभिधानाच्च ॥ ७१ ॥

हे कुमारिके ! वे महाराज नल निश्चय ही भूतलके महेन्द्र और निषध देशीय जनोंके चन्द्र स्वरूप हैं । अतः उनके समक्ष मेरे ऐसे सुज्ञ व्यक्तिसे उस प्रकारकी सन्दिग्ध वाणी कैसे कही जा सकती है जिस प्रकारकी सन्दिग्ध वाणी कभी–कभी हीन लोग ( अपढ़ ) कभी–कभी अपने स्वामीसे कह देते हैं ॥ ७१ ॥



पितुर्नियोगेन निजेच्छया वा युवानमन्यं यदि वा वृणीषे ।

त्वदर्थमर्थित्वकृतिप्रतीतिः कीदृङ्मयि स्यान्निषधेश्वरस्य ॥ ७२ ॥

अथेत्यमेव बोधने को दोषस्तत्राह पितुरिति । पितुर्नियोगेन आज्ञया निजेच्छया स्वेच्छया वा अन्यं नलादन्यं युवानं यदि वृणोषे वृणोषि यदि तदा निषधेश्वरस्य नलस्य मयि विषये त्वदर्थं तुभ्यं चतुर्थी तदर्थेत्यादिना चतुर्थी समासः अर्थेन सह नित्यसमासः सर्वलिङ्गता च वक्तव्या । तद्यत्तथा अर्थित्वकृतिः अर्थित्वभजनं तत्र प्रतीतिर्विश्वासः कीदृक् स्यान्न स्यादित्यर्थः तस्मादसन्दिग्धं वाच्यमिति भावः ॥ ७२ ॥

हे राजपुत्रि ! यदि आप अपने पिताकी आज्ञासे अथवा अपनी स्वेच्छासे महाराज नल के अतिरिक्त किसी दूसरे युवकसे विवाह करेंगी तो आपकी ओरसे विवाहार्थ विश्वास दिलाने वाले मुझपर महाराज नलका मेरे ऊपर कैसा बुरा भाव हो जायगा ? अर्थात्—आपकी ओरसे विवाहकी दृढ़ता बताने वाले मुझपर फिर महाराज नलका विश्वास न रह जायगा । जो मेरे लिये बुरा होगा ॥ ७२ ॥

त्वयापि किं शङ्कितविक्रियेऽस्मिन्नधिक्रिये वा विषये विधातुम् ।
इतः पृथक् प्रार्थयसे तु यद्यत्कुर्वे तदुर्वीपतिपुत्रि सर्वम् ॥ ७३ ॥

अन्यथा तथा वक्तुं न शक्यते तर्हि ततोऽन्यदीप्सितं करिष्ये प्रतिज्ञाभङ्गपरिहारायेत्याह त्वयेति । हे उर्वीपतिपुत्रि ! भैमि ! त्वयापि वा किं विधातुं किं कर्तुं शङ्कितविक्रिये सम्भावितविपर्यये अस्मिन् विषये राजपाणिग्रहणसंघटनकार्ये अहं अधिक्रिये विनियुज्ये अनियोज्य इत्यर्थः । करोतेः कर्मणि लट् किन्तु इतः पृथगस्मादन्यत् यद्यत्प्रार्थयसे तत्सर्वं कुर्वे करोमीत्यर्थः ॥ ७३ ॥

हे पृथ्वीके इन्द्र भीम महाराजकी पुत्री ! आप भी मुझे ऐसे सन्दिग्ध कार्यको करनेके लिए क्यों प्रेरित कर रही हैं । इस कार्यके अतिरिक्त जो भी आपको आज्ञा हो वह मैं करनेके लिए तत्पर हूं ॥ ७३ ॥

श्रवःप्रविष्टा इव तद्गिरस्ता विधूय वैमत्यधुतेन मूर्ध्ना ।
ऊचे ह्रिया विश्लथितानुरोधा पुनर्धरित्रीपुरुहूतपुत्री ॥ ७४ ॥

श्रव इति । धरित्रीपुरुहूतपुत्री भूमीन्द्रसुता भैमी श्रवःप्रविष्टा इव न तु सम्यक् प्रविष्टा तद्गिरो हंसवाचः । वैमत्येन असम्मत्या धुतेन कम्पितेन मूर्ध्ना विधूय प्रतिषिध्य ह्रिया कर्त्र्या विश्लथितानुरोधा शिथिलितवृत्तिस्त्यक्तलज्जा सती पुनरप्यूचे उवाच ॥ ७४ ॥

भूमीन्द्रसुता कुमारीने ज्यों ही अपने कानोंसे राजहसकी उक्त वार्ता सुनी—त्यों ही अपनी असम्मति शिरको हिलाकर दे दी तथा लज्जा त्यागकर पुनः कहने लगी—॥ ७४ ॥

मदन्यदानं प्रति कल्पना या वेदस्त्वदीये हृदि तावदेषा ।
निशोऽपि सोमेतरकान्तशङ्कामोङ्कारमग्रेसरमस्य कुर्याः ॥ ७५ ॥

मदिति । मम अन्यदानं अन्यस्मै दानं प्रति दानमुद्दिश्य या कल्पना पितुर्नियोगेत्यादि श्लोकस्तर्कः । एषा कल्पना त्वदीये हृदि वेदस्तावत्सत्य एवेत्यर्थः । निशो

निशाया अपि पद्मिन्यादिना निशाया निशादेशः । सोमाच्चन्द्रादितरकान्तशङ्कां पुरा न्तरकल्पनामेव ओङ्कारं प्रणवं अस्य वेदस्याग्रेसरं आद्यं कुर्याः कुरु सर्वस्यापि वेदस्य प्रणवपूर्वकत्वादिति भावः । यथा निशायाः निशाकरेतरप्रतिग्रहो न शङ्कनीयः तथा ममापि नलेतरप्रतिग्रहो न शङ्कनीयः इत्यर्थः रूपकालङ्कारः ॥ ७५ ॥

हे राजहंस ! आपके अन्तःकरणमें जो यह शङ्का वेदके समान दृढ़ हुई है कि मेरा विवाह नलके अतिरिक्तसे भी हो सकता है तो आपको अपने हृदयमें स्थित 'ओम्' अग्रवर्त्ती वेदके सदृश चन्द्रसे अतिरिक्त रात्रिके पतिकी शङ्का भी करनी चाहिये । अर्थात्—जैसे ओम् वेदके आगे-आगे रहता है वैसे आपको "चन्द्रके अतिरिक्त निशाका पति दूसरा हो सकता है" इस शङ्काको भी मेरा पाणिग्रहण "नलके अतिरिक्त दूसरेसे हो सकता है" के पूर्व आगे (पहले) रखना चाहिये । जैसे--निशाका पति चन्द्रमा हैं अन्य नहीं । वैसे मेरे पति नल ही हैं ॥ ७५ ॥

सरोजिनीमानसरागवृत्तेरनर्कसम्पर्कमतर्कयित्वा ।
मदन्यपाणिग्रहशङ्कितेयमहो महीयस्तव साहसिक्यम् ॥ ७६ ॥

सरोजिनीति । सरोजिन्याः मानसरागवृत्तेर्मनोऽनुरागस्थितेरभ्यन्तरारुण्यप्रवृत्तेश्च अनर्कसम्पर्कमर्केतरकान्तसंक्रान्तिमतर्कयित्वा अनूहित्वा तवेयं मम अन्यस्य नलेतरस्य पाणिग्रहं शङ्कत इति तच्छङ्कितस्य भावस्तत्ता महीयो महत्तरं साहसिक्यं साहसिकत्वं अहो असम्भावितसम्भावनादाश्चर्यम् ॥ ७६ ॥

हे राजहंस ! यदि कमलिनियोंके अन्तःकरणोंमें सूर्यसे अतिरिक्त किसी अन्यको पतिरूपमें करनेकी शङ्का आपके हृदयमें विना ऊहापोहके निश्चित हो तो मेरे पाणिग्रहणकी शङ्का महाराज नलके अतिरिक्त दूसरे व्यक्तिसे आप कर सकते हैं । अहो, आपकी यह शङ्का अतिविशाल और साहसवाली है जैसे कमलिनियां विना सूर्यप्रभाके नहीं खिलती हैं वैसे मैं भी नल-प्रभा विना नहीं खिलूंगी ॥ ७६ ॥

साधु त्वयातर्कि तदेकमेव स्वेनानलं यत्किल संश्रयिष्ये ।
विनामुना स्वात्मनि तु प्रहर्तुं मृषा गिरं त्वां नृपतौ न कर्तुम् ॥७७॥

साध्विति । किन्तु स्वेन स्वेच्छया अनलं नलादन्यं अग्निं च संश्रयिष्ये प्राप्स्यामीति यत् त्वया अतर्कि ऊहितं तदेकमेव साधु अतर्कि किन्तु अमुना नलेन विना तदलाभ इत्यर्थः । स्वात्मनि प्रहर्तुं स्वात्मानं हिंसितुं कर्मणो अधिकरणत्वविवक्षायां सप्तमी । "अनेकशक्तियुक्तस्य विश्वस्यानेककर्मणः । सर्वदा सर्वतोभावात् क्वचित् किञ्चिद्विवक्षयत ॥" इति वचनादनलं संश्रयिष्ये इत्यनुषङ्गः नृपतौ नले विषये त्वां मृषागिरं असत्यवाचं कर्तुंमनल एव सरणं अन्यथा मरणमेव शरणमिति भावः ॥ ७७ ॥

हे राजहंस ! अथवा आपकी यह शङ्का उचित ही है कि "मैं नलके अतिरिक्त व्यक्तिसे विवाहित होऊं" किन्तु वह मेरा विवाह मेरी आत्महत्याका कारण होगा, आपको नल महाराजके समक्ष असत्यवादी करने वाला न होगा । अर्थात्—यदि मेरा विवाह नलावि-

[ति]क जनसे होगा तो मैं अपने प्राणोंको त्याग दूंगी तब तो आपको महाराज असत्य सन्देश-वाहक न कहेंगे ॥ ७७ ॥

**मद्विप्रलभ्यं पुनराह यस्त्वां तर्कस्स किं तत्फलवाचि मूकः।**
**अशक्यशङ्कव्यभिचारहेतुर्वाणी न वेदा यदि सन्तु के तु ॥ ७८ ॥**

मदिति। किञ्च यस्तर्कः ऊहः मद्विप्रलभ्यं मया विप्रलम्भनीयं पोरदुपधादिति यत्प्रत्ययः। आह बोधयतीत्यर्थः स तर्कः तस्य विप्रलम्भस्य फलवाचि प्रयोजनाभिधाने मूकः अशक्तः किं अतो मय्यसत्यवादित्वशङ्का न कार्येत्यर्थः। कथमेतावता सत्यवा-दित्वनिश्चय अत आह अशक्या शङ्का यस्य सः अशक्यशङ्कः शङ्कितुमशक्यः व्यभि-चारहेतुर्विप्रलिप्सा लक्षणो यस्याः सा वाणी न वेदा यदि न प्रमाणं चेत्तर्हि के तु वेदाः सन्तु न केपीत्यर्थः सम्भावनायां लोट् वेदवाचामसत्यत्वे मद्वाचोऽप्यसत्यत्वं नान्यथेति भावः ॥ ७८ ॥

हे राजहंस! जिस शङ्काके द्वारा आप यह समझते हैं कि "आप मेरे द्वारा प्रतारित किये जा रहे है" वह शङ्का आपको यह बतलानेमें क्यों चुप है कि "आप मेरे द्वारा प्रतारित नहीं किये जा रहे हैं" अर्थात्—मेरे द्वारा अच्छा फल होगा। जिस वाणीमें असत्यताके सन्देहका समावेश ही नहीं है वह वाणी वेद नहीं तो फिर वेद किसे कहते हैं? जैसे—वेदवाणी सत्य है वैसे मेरी वाणी भी सत्य जानिये ॥ ७८ ॥

**अनैषधायैव जुहोति किं मां तातः कृशानौ न शरीरशेषाम्।**
**ईष्टे तनूजन्मतनोस्तथापि मत्प्राणनाथस्तु नलस्स एव ॥ ७९ ॥**

एवं निजेच्छया नलान्यशङ्कां निरस्य पित्राज्ञयापि तां निरस्यति अनैषधायेति। तातो मम जनकः। तातस्तु जनकः पिता इत्यमरः। मामनैषधाय नैषधान्नलादन्यस्मै एव जुहोति ददातीति काकुः तदा शरीरशेषां मृतां तत्रापि कृशानौ न किं न तु जीव-न्तीं नाग्नेरन्यत्र जुहोतीत्यर्थः। तदङ्गीकर्त्तव्यमेवेति भावः कुतः स जनकः तनूज-न्मतनोः आत्मजशरीरस्य ईष्टे स्वामी भवतीत्यर्थः। अधीगर्थदयेशां कर्मणीति षष्ठी तथापि शरीरस्य पितृस्वामिकत्वेऽपीत्यर्थः। मत्प्राणनाथस्तु नल एव प्राणा-नामतज्जन्यत्वादिति भावः। अतो मय्यविश्वासं मा कुर्वित्यर्थः ॥ ७९ ॥

हे राजहंस! यदि मेरे पिता मेरा परिणय नलके अतिरिक्त दूसरेसे करेंगे तो वे मेरे निष्प्राण शरीरको अग्निमें क्यों न हवन कर दें। क्योंकि इस शरीरके स्वामी वे हैं, किन्तु मेरे प्राणोंके स्वामी तो महाराज नल ही हैं। अर्थात्—यदि मेरे पिताजी मुझे नलसे अतिरिक्त दूसरे व्यक्तिको मुझे दानरूपमें देनेका विचार करें तो वे मेरे प्राणरहित मृत शरीरको अग्निमें होम कर देनेका विचार भी कर लें। संसार में पिता अपनी सन्तानोंके शरीरके स्वामी (उत्पन्न करनेके कारण) होते हैं किन्तु, प्राणोंके स्वामी नहीं होते हैं क्योंकि वे प्राणोंको नहीं बना सकते हैं। अतः प्राणोंके स्वामी वे नहीं होते हैं। मेरे प्राणोंके स्वामी तो महाराज नल ही

है—अन्य नहीं । अर्थात्—यदि पिताजी नलेतर व्यक्ति ( अनल ) को मुझे देंगे तो पहले ही प्राण त्याग दूंगी ॥ ७८ ॥

तदेकदासीत्वपदादुदग्रे मदीप्सिते साधु विधित्सुता ते ।
अहेलिना किं नलिनी विधत्ते सुधाकरेणापि सुधाकरेण ॥ ८० ॥

फलितमाह तदेकेति । तस्य नलस्यैकस्यैव दासीत्वं तदेव पदमधिकारस्तस्मादुदग्रे अधिके मदीप्सिते पत्नीत्वरूपे विषये तव विधित्सुता चिकीर्षुतैव साधु साध्वी अविचारेण मन्मनोरथपूरणमेव ते युक्तमिति भावः । साध्विति सामान्योपक्रमान्नपुंसकत्वं शक्यं श्वमांसेनापि क्षुन्निवर्तयितुमिति भाष्यकारप्रयोगात् । ननु किमत्राभिनिवेशेन गुणवत्तरं चेद्युवान्तरस्वीकारे को दोषस्तत्राह अहेलिनेति । नलिनी सुधाकरेण अमृतदीधितिनापि अहेलिना असूर्य्येण सुधाकरेण चन्द्रेण किं विधत्ते किं तेन तस्या इत्यर्थः । तद्वन्ममापि किं युवान्तरेणेति भावः । दृष्टान्तालङ्कारः ॥ ८० ॥

हे राजहंस ! आपने जो मुझे महाराज नलकी दासीपद दिलाने वाले मेरे मनोरथ को पूर्ण करानेका विचार किया है सो अति उचित है । दूसरे की महिषी होनेकी अपेक्षा नलकी दासी होना मुझे अधिक प्रिय है । अमृतसे परिपूर्ण चन्द्रसे कमलिनी को क्या लाभ—कुछ नहीं । उसे तो सूर्यमें ही अनुराग होता है भले ही चन्द्रकी गोलाई सूर्यकी गोलाईसी हो तथा उसमें अमृत भरा हो पर कमलिनीको उससे क्या लाभ—उसे तो सूर्य ही मे हित है ॥ ८० ॥

तदेकलुब्धे हृदि मेऽस्ति लब्धुं चिन्ता न चिन्तामणिमप्यनर्घम् ।
वित्ते ममैकस्स नलस्त्रिलोकीसारो निधिः पद्ममुखस्स एव ॥ ८१ ॥

तदिति । तस्मिन्नेवैकस्मिन् लुब्धे लोलुपे मे हृदि अनर्घ्यं चिन्तामणिमपि लब्धुं चिन्ताविचारो नास्ति तथा वित्ते धनविषयेऽपि मम स नलस्त्रिलोकीसारस्त्रैलोक्यश्रेष्ठः पद्ममुखः पद्माननः एकः स नल एव त्रैलोक्यसारः पद्मनिधिश्च । नलादन्यत्र कुत्रापि मे स्पृहा नास्ति । किमुत युवान्तर इति भावः ॥ ८१ ॥

हे राजहंस ! मेरे लालची हृदयमें केवल एक महाराज नल ही बसे हैं उनकी तुलनामें मुझे अमूल्य चिन्तामणि भी प्राप्तकरने की इच्छा नहीं है तथा तीनों लोकमें श्रेष्ठ धन पद्मनिधि भी नहीं चाहिये । अथवा तीनों लोकमें श्रेष्ठ कमलमुखी उन नलके सामने मुझे चिन्तामणि प्रभृति अमूल्य वस्तुएँ भी नहीं जंचती हैं ॥ ८१ ॥

श्रुतश्च दृष्टश्च हरित्सु मोहाद्ध्यातश्च नीरन्ध्रितबुद्धिधारम् ।
ममाद्य तत्प्राप्तिरसुव्ययो वा हस्ते तवास्ते द्वयमेव शेषः ॥ ८२ ॥

श्रुतश्चेति । किं बहुना स नलः श्रुतः । दूतद्विजवन्द्यादिमुखादाकर्णितश्च मोहात् भ्रान्तिवशात् हरित्सु दृष्टः साक्षात्कृतश्च तथापि नीरन्ध्रितबुद्धिधारं निरन्तरीकृततदेकविषयबुद्धिप्रवाहं यथा तथा ध्यातश्च । अथाद्य मम तत्प्राप्तिर्नलप्राप्तिरसुव्ययः प्राणत्यागो वा द्वयमेव द्वयोरन्यतर एवेत्यर्थः । शेषः कार्यशेषः स च तव हस्ते

आस्ते त्वदायत्तः तिष्ठतीत्यर्थः । अत्र तत्पदार्थश्रवणमनननिदिध्यासनसम्पन्नस्य ब्रह्मप्राप्तिदुःखोच्छेदलक्षणमोक्षो गुर्वायत्त एवेत्यर्थान्तरप्रतीतिध्वनिरेव अभिधायाः प्रकृतार्थनियन्त्रणादिति सङ्क्षेपः ॥ ८२ ॥

हे राजहंस ! मैंने उन महाराज नलके विषयमें बहुत कुछ सुना है तथा मोहसे व्याप्त होकर उन्हें चारों दिशाओंमें देखा है एवं निरन्तर उनका ध्यान करके बुद्धिवैद्य किया है। अब उनकी प्राप्ति कराना अथवा मेरे प्राणोंका परित्याग कराना दोनों आपके हाथमें हैं दो में से एक ही शेष रहेगा—या तो उनके न मिलने पर मैं मर जाऊंगी वा उनके मिलने पर सुख प्राप्त करूंगी। यथा—तत्त्वार्थान्वेषक तत्त्वके विषयमें प्रथम सुनते हैं फिर उन्हें निदिध्यासनसे देखते हैं तथा उनमें निलीयमान होकर या तो मोक्षप्राप्तिजन्य आनन्द लूटते हैं वा प्राणोंको त्याग देते हैं ॥ ८२ ॥

सञ्चीयतामाश्रुतपालनोत्थं मत्प्राणविश्राणनजं च पुण्यम् ।
निवार्यतामार्य वृथा विशङ्का भद्रेऽपि मुद्रेयमये भृशं का ॥ ८३ ॥

सञ्चीयतामिति । हे हंस ! अश्रुतपालनोत्थं प्रतिज्ञातार्थनिर्वाहणोत्पन्नं अङ्गीकृताश्रुतं प्रतिज्ञातमित्यमरः । मत्प्राणानां विश्राणनं दानं तज्जञ्च पुण्यं सुकृतं सञ्चीयतां संगृह्यतां हे आर्य ! वृथा विशङ्का सन्देहो निवार्यताम् । अये ! अङ्ग ! भद्रे पूर्वोक्तपुण्यरूपे श्रेयसि विषये भृशशङ्केयं मुद्रा औदासीन्यं श्रेयसि नोदासितव्यमिति भावः ८३

हे राजहंस ! अपनी प्रतिज्ञा पूरी करके उससे उत्पन्न—मेरे प्राणोंको दान देनेसे उत्पन्न, पुण्यको प्राप्त कीजिये। हे आर्य ! वृथाकी शङ्का त्याग दीजिये। हे अङ्ग ! कल्याणप्रद शुभ कार्य करते समय यह मौनमुद्रा आपकी उचित नहीं है ॥ ८३ ॥

अलं विलङ्घ्य प्रिय विज्ञ याञ्चां कृत्वापि वाक्यं विविधं विधेये ।
यशःपथादाश्रवतापदोत्थात् खलु स्खलित्वास्तखलोक्तिखेलात् ॥ ८४ ॥

अलमिति । हे प्रिय ! प्रियङ्करविज्ञ ! विशेषज्ञ ! उभयत्र इगुपधेत्यादिना कप्रत्ययः । याच्ञां प्रार्थनां विलङ्घ्य अलं याच्ञाभङ्गो न कार्य इत्यर्थः । विधेये विनीतजने विविधं वाक्यं वक्रतां कृत्वापि अलं तच्च न कार्यमित्यर्थः । आश्रवो यथोक्तकारी वचने स्थित आश्रव इत्यमरः । तस्य भावस्तत्ता सैव पदं पदक्षेपः तदुत्थात् अस्ता निरस्ता खलोक्तिखेला मिथ्यावादविनोदो येन तस्माद्यशःपथात् स्खलित्वा चलित्वा खलु न स्खलितव्यमित्यर्थः । अन्यथा हानिः स्यात् निषेधवाक्यालङ्कारजिज्ञासानुनये खलु इत्यमरः । अलं खल्वोः प्रतिषेधयोः प्राचां क्त्वेति उभयत्रापि क्त्वाप्रत्यय इह न पादादौ खल्वादय इति निषेधस्योद्भेजकत्वाभिप्रायत्वान्नञर्थस्य खलुशब्दस्योद्भेजकत्वान्नञ् देवपादादौ प्रयोगो न दूष्यत इति अनुसन्धेयम् ॥ ८४ ॥

हे राजहंस ! हे प्रिय !! हे विज्ञ !!! मेरी प्रार्थनाको विफल न कीजिये तथा करणीय कार्यमें वक्रता—अन्यमनस्कता—न लाइये। यथोक्तकारी ( जो कुछ कहा उसे करने वाले )

पदसे उच्चपद प्राप्त करके पुनः उस उच्चपदरूपी यशःस्थानसे नीचे न गिरिये। हे राजहंस! आपको दुर्जन भी परोपकारी कहा करते हैं। अर्थात्—हे राजहंस! दुर्जन भी कहते हैं कि, "हंसों के सदृश परोपकारी दूसरे कोई नहीं होते हैं" अतः आपका स्वभाव ही परोपकारका है उस स्वभावको आप न त्यागें तथा मेरी याचनाको विफल न करें और न अपने प्रतिज्ञापित वचनोंको न करके यशःस्थानसे ही नीचे गिरें—जिससे आपको दुर्जन क्या सज्जन लोग अपरोपकारी कहें ॥ ८४ ॥

स्वजीवमप्यार्तमुदे ददद्भ्यस्तव त्रपा नेदृशबद्धमुष्टेः।
मह्यं मदीयान्यदसूनदित्सोर्धर्मः कराद् भ्रश्यति कीर्तिधौतः ॥ ८५॥

स्वेति। ईदृशबद्धमुष्टेरीदृक्कष्टलुब्धस्य तव आर्तानां मुदे प्रीत्यै स्वजीवं ददद्भ्यः स्वप्राणव्ययेन परत्राणं कुर्वद्भयो जीमूतवाहनादिभ्य इत्यर्थः जीवञ्जीमूतवाहन इति प्रसिद्धं त्रपा नेति काकुः त्रपाया मनःप्रत्यावृत्तिरूपत्वात्तदपेक्षया तेषामपादानत्वात् पञ्चमी यद्यस्मान्मदीयानेवासून् प्राणान् मह्यमदित्सोः तव कीर्त्या धौतः शुद्धो धर्मः कराद्धस्ताद् भ्रश्यति न चैतत्तवार्हमिति भावः ॥ ८५ ॥

हे राजहंस! परोपकारार्थ अपने प्राणोंको देनेवाले जीमूतवाहन शिवि दधीचि आदिकी कथा श्रवण कर इस प्रकारकी कृपणता करने पर लज्जा नहीं आती है मेरे ही प्राणोंको मुझे न देने की इच्छासे आपका शुभ्रकीर्तिधर्म आपके हाथसे गिराया जा रहा है। आपको ऐसा करना उचित नहीं ॥ ८५ ॥

दत्त्वात्मजीवं त्वयि जीवदेऽपि शुध्यामि जीवाधिकदे तु केन।
विधेहि तन्मां त्वदृणेष्वशोद्धुमसमुद्रदारिद्र्यसमुद्रमग्नाम् ॥ ८६ ॥

दत्त्वेति। किं च जीवदे प्राणदे त्वयि विषये आत्मजीवं मत्प्राणं दत्त्वापि शुध्यामि आनृण्यं गमिष्यामीत्यर्थः। किन्तु जीवादधिकः प्रियः तद्दे त्वयि केन शुध्यामि न केनापि तत्तुल्यदेयवस्त्वभावादित्यर्थः। सम्प्रति प्राणैः समं तु न किञ्चिदस्तीति भावः। तत्तस्मादभावादेव मां त्वदृणेषु विषये अशोद्धुं अनृणग्रस्तां भवितुमेव असमुद्रे अपरिमिते दारिद्र्यं त्वद्देयवस्त्वभावरूपं तस्मिन्नेव समुद्रे। मग्नां विधेहि नलसङ्घट्टनेन मामृणग्रस्तां कुर्वित्यर्थः। अशोद्धुं, मग्नामिति मग्नत्वानुवादेन अशुद्धिर्विधीयते दरिद्राणामृणमुक्तिर्नास्तीति भावः ॥ ८६ ॥

हे राजहंस! हे जीवद!! हे प्राणप्रद!!! आपको मैं प्राणोंके बदलेमें प्राणोंको देकर शुद्ध (अधमर्ण) ऋणरहित हो सकती हूं। किन्तु, जीवसे (प्राणोंसे) भी अधिक वस्तु देनेवाले आपको मैं (उसके) बदलेमें कुछ नहीं दे सकती। अतः आपकी ऋणग्रस्ता हो सकती हूं। परन्तु, हे राजहंस! मुझे प्राणोंसे भी अधिक वस्तु देकर आप अवश्य दरिद्रतारूपी समुद्रमें डुबा दीजिये—नलसे मिला दीजिये। जैसे कोई आदमी किसीके प्राणोंको ले लेता है तो उसे अपने प्राणोंको देकर बदला चुका देता है किन्तु, जो प्राणोंसे भी अधिक वस्तु प्राणेश्वरको

वह उसके बदलेमें उस देनेवालेको क्या चुकावे क्योंकि प्राणेश्वरके समान कोई वस्तु जगत्में है ही नहीं । ऐसी अवस्थामें वह ऋणलेने वाला व्यक्ति उस ऋणदेने वालेका ऋणी रह जाता है और जो ऋण लेकर उसे चुका नहीं सकता वही निर्धन–दरिद्र कहलाता है। यहाँपर दमयन्ती कहती हैं कि—भले ही मैं निर्धनिका ही नहीं निर्धनिकाओंके समुद्रमें डूबी होऊं किन्तु आप मुझे महाराज नलरूप प्राणेश्वरको दे दें ॥ ८६ ॥

**क्रीणीष्व मज्जीवितमेव पण्यमन्यं न चेद्वस्तु तदस्तु पुण्यम् ।**
**जीवेशदातर्यदि ते न दातुं यशोऽपि तावत्प्रभवामि गातुम् ॥८७॥**

क्रीणीष्वेति । हे जीवेशदातः प्राणेश्वरद ! मज्जीवितमेव पण्यं क्रेयं वस्तु क्रीणीष्व जीवेशरूपमूल्यदानेन स्वीकुरुष्वेत्यर्थः । अन्यदेतन्मूल्यानुरूपं वस्त्वन्तरं नास्ति चेत्तर्हि पुण्यं सुकृतमस्तु किञ्चिद्यदि ते तुभ्यं दातुं न प्रभवामि न शक्नोमि तावत्तर्हि यशोऽपि कीर्तिं गातुं प्रभवामि ख्यातिसुकृतार्थमेवोपकुरुष्वेत्यर्थः ॥ ८७ ॥

हे राजहंस ! हे जीवेशदातः !! हे प्राणेश्वरप्रद !!! आप मेरे जीवनरूपी (जीवरूपी) वस्तुको मेरे जीवेशरूपी मूल्यके द्वारा खरीदें तो आपको हानि होगी और मुझे लाभ होगा क्योंकि आप बड़ी चीज छोटी चीज के लिए देंगे । अतः आपके मूल्यके अनुसार मैं आपको वस्तु न दे सकूंगी । किन्तु, इसमें आपको यद्यपि हानि तो इस लोककी दृष्टिमें है । परन्तु, पारलौकिक दृष्टिसे आपको पुण्यरूप लाभ भी है। हे पक्षिश्रेष्ठ! यद्यपि आपकी वस्तुके अनुरूप आदान–प्रदानमें हीना हूं । परन्तु, आपकी इस कीर्तिको गानेमें हीना न होऊँगी । आपकी यशोगाथा गाया करूंगी । जैसे—कोई परोपकारी एक पाव दूधका मूल्य एक रत्न देकर दूध-विक्रेताको प्रसन्न कर दे और स्वयं हानि उठावे । वैसे ही आप भी मेरे जीवनको खरीद कर मुझे मेरे जीवेशको ( नलको ) दें तो आपको हानि तो होगी पर पुण्य भी होगा ॥ ८७ ॥

**वराटिकोपक्रिययापि लभ्यान्नेभ्याः कृतज्ञानथवाद्रियन्ते ।**
**प्राणैः पणैः स्वं निपुणं भणन्तः क्रीणन्ति तानेव तु हन्त सन्तः ॥८८॥**

अथवा साधुस्वभावेनापि परोपकारं कुर्वीत्याह वराटिकेति । वराटिकोपक्रियया कपर्दिकादानेनापि लभ्यान् कृतज्ञान् तावदेव बहुमन्यमानान् उपकारज्ञान् इभ्याः धनिकाः इभ्य आढ्यो धनी स्वामीत्यमरः । नाद्रियन्ते धनलोभान्नोपकुर्वन्तीत्यर्थः सन्तो विवेकिनस्तु स्वमात्मानं निपुणं भणन्तः सन्त एते वयं त्वदधीना इति साधु वदन्त इत्यर्थः । तानेव कृतज्ञान् प्राणैरेव पणैः क्रीणन्ति आत्मसात्कुर्वन्ति किमुत धनैरि-त्यर्थः अतस्त्वयापि सता कृतज्ञाहमुपकर्तव्येति भावः । हन्त हर्षे ॥ ८८ ॥

हे राजहंस ! इस जगत्में धनके लोभसे धनिकगण कौड़ीसे भी सन्तुष्ट होनेवाले साधुओंको कौड़ी भी नहीं देते हैं । अर्थात्–एक कौड़ी भी देकर धनिकगण साधुओंसे कृतज्ञता नहीं प्राप्त करते हैं । परन्तु, इसी जगत्में विवेकी पुरुषगण अपनी शरणमें आये हुए आश्रितोंको अपने प्राणोंतक को देकर उनकी रक्षा करते हैं । अर्थात् सज्जनों और असज्जनोंमें इतना अन्तर है कि सज्जन प्राणों तकको दूसरोंके लिए दे देते हैं और असज्जन अपने पासकी एक

कौड़ी भी दूसरोंके लिए नहीं देते। अतः आप तो सज्जन हैं ही इससे कृपाकर मुझ कृतज्ञाको उपकारोंसे उपकृत कीजिये ॥ ८८ ॥

**स भूभृदष्टावपि लोकपालास्तैर्मे तदेकाग्रधियः प्रसेदे ।**
**न हीतरस्माद्घटते यदेत्य स्वयं तदाप्तिप्रतिभूर्ममाभूः ॥ ८९ ॥**

सेति । किञ्च स भूभृन्नलः अष्टावपि लोकपालाः तदात्मक इत्यर्थः । अष्टाभिर्लोकपालानां मात्राभिर्निर्मितो नृप इति स्मरणात् । अत एव तदेकाग्रधियो नलैकतानबुद्धेः मे मम तैर्लोकपालैः प्रसेदे प्रसन्नं भावे लिट् देवता ध्यायतः प्रसीदन्तीति भावः कुत इतरस्मात् प्रसादान्यथेत्यर्थः । स्वयं स्वयमेवागत्य मम तदाप्तिप्रतिभूः नलप्राप्तिलग्नकोऽभूरिति यत् तन्न घटते हि । तत्प्रसादाभावे कुतो ममेदं श्रेय इत्यर्थः ॥ ८९ ॥

हे राजहंस ! महाराज नल आठों लोकपालोंके अंशभूत हैं अतः मैं जो एकाग्रचित्तसे नलकी स्तुति करती हूं उससे वे लोकपाल प्रसन्न हो गये हैं और उन्हींके अनुग्रहसे आप स्वयं ही आकर नलप्राप्तिलग्नक ( नलकी प्राप्ति करानेमें पूर्णसहायक ) मेरे लिए हुए हैं। संसार जैसे धनको उधार देनेवाले और धनको उधार लेने वालेके बीचमें जब कुछ झगड़ा आ पड़ता है तो प्रतिभू ( जमानतदार ) को ही यह झगड़ा जैसे भी तय हो तय कराना पड़ता है । जब कोई नया लेन-देन प्रारम्भ किया जाता है तो भी एक प्रतिभू ( जमानतदार ) रखकर लोग लेन-देन करते हैं ।
अतः प्रतिभूके बिना सन्तुष्ट हुए संसारका कुछ भी कार्य नहीं होता तो इस कार्यमें आपके सन्तुष्ट हुए बिना कैसे सिद्धि हो सकती है—कृपया यह कार्य कीजिये । भाग्यसे आठों लोकपालोंने आपको प्रतिभूरूपमें मेरे समीप भेज दिया है ॥ ८९ ॥

**अकाण्डमेवात्मभुवार्जितस्य भूत्वापि मूलं मयि वीरणस्य ।**
**भवान्न मे किं नलदत्वमेत्य कर्ता हृदश्चन्दनलेपकृत्यम् ॥ ९० ॥**

अकाण्डेति । हे हंस ! विः पक्षी विविष्किरपतत्रिणः इत्यमरः । रोरीति रेफलोपे ढ्रलोपे पूर्वस्येति दीर्घः । भवान् अकाण्डमनवसर एव अत्यन्तसंयोगे द्वितीया आत्मभुवा कामेन मयि विषये आर्जितस्य कृतस्य रणस्य गाढप्रहारलक्षणस्य मूलं हंसानामुद्दीपकत्वेन निदानं भूत्वापि अन्यत्र काण्डो दण्डः तद्वर्जितमकाण्डं यथा तथा आत्मभुवा ब्रह्मणा आर्जितस्य सृष्टस्य वीरणस्य तृणविशेषस्य मूलं मूलावयवो भूत्वा अत एव नलदत्वं नैषधदातृत्वं अन्यत्र उशीरत्वं चेत्यर्थः । हृदः चन्दनलेपकृत्यं शैत्योत्पादनं न कर्ता करिष्यत्येव परोपकारशीलत्वादिति भावः । काण्डोऽस्त्री दण्डबाणार्ववर्गावसरवारिषु । स्याद्वीरणं वीरतरुमूलेस्योशीरमस्त्रियां, अभयं नलदं सेव्यमिति चामरः । वीरणस्येति शब्दश्लेषः । अन्यत्रार्थश्लेषः । तथा च नलदत्वमेत्य चेति प्रकृताप्रकृतयोरभेदाध्यवसायेन हंसे आरोप्यमाणस्योशीरस्य प्रकृत्या तादात्म्येन चन्दनकृत्यलक्षणप्रकृतकार्योपयोगात् परिणामालङ्कारः । आरोप्यमाणस्य प्रकृतो-

योगित्वे परिणाम इति लक्षणात् स चोक्तश्लेषप्रतिबिम्बोत्थापित इति सङ्करः ॥९०॥

हे राजहंस! आपने मुझे इस कुमारावस्थामें ही, स्वयं उत्पन्न होनेवाले कामदेवकी रहस्यमयी कथाएँ कहीं और मुझमें कामदेवकी उत्पत्ति करानेके मूलभूत आप हुए अतः अब आप मेरे हृदयकी जलती हुई अग्निको नलरूप चन्दनके लेपसे क्या शान्त न करेंगे—अवश्य करेंगे। इस श्लोकका आशय ऐसा भी है—हे राजहंस! स्वयंभू ब्रह्माजीके द्वारा उत्पन्न की ई पर्वरहित वीरणकी जड़के रूपमें "नलदा" होकर क्या मेरे हृदयकी अग्निको शीतल करेंगे—अवश्य करेंगे। (वीरणकी जड़ पर्वरहित होती है तथा शीतलता लानेके लिए लगाई जाती है और उसका नाम "नलदा" भी है। वि = पक्षी होता है।) ॥ ९० ॥

अलं विलम्ब्य त्वरितुं हि वेला कार्ये किल स्थैर्यसहे विचारः।
गुरूपदेशं प्रतिभेव तीक्ष्णा प्रतीक्षते जातु न कालमार्तिः ॥ ९१ ॥

अलमिति। हे हंस! विलम्ब्यालं न विलम्बितव्यमित्यर्थः। अलङ्खल्वोरित्यादिना क्त्वाप्रत्यये ल्यबादेशः। त्वरितुं वेला हि त्वराकालः खल्वयमित्यर्थः कालसमयवेलासु तुमुन् कुतः स्थैर्यसहे विलम्बसहे कार्ये विचारो विमर्शः किलेति प्रसिद्धौ अन्यथा विपत्स्यत इति भावः। तथाहि तीक्ष्णा शीघ्रग्राहिणी प्रतिभा प्रज्ञा गुरूपदेशमिव आर्त्तिराधिर्जातु कदापि कालं न प्रतीक्षते कालक्षेपं न सहत इत्यर्थः। उपमार्थान्तरन्यासयोः संसृष्टिः ॥ ९१ ॥

हे राजहंस! अब देर न करिये शीघ्र जाइये—देर करनेका समय नहीं है। क्योंकि देर करनेमें कष्ट हो सकता है। व्याधि समयकी प्रतीक्षा वैसे ही नहीं करती है जैसे तेज प्रतिभावान वालोंकी बुद्धि गुरुशिक्षाके पूर्व ही शास्त्रार्थको ग्रहण करती है—समयकी प्रतीक्षा नहीं करती है। संसारमें विवाहादि कार्य करनेमें शीघ्रता की जाती है "शुभस्य शीघ्रम्" अर्थात्—हे राजहंस! मुझे नलानुराग सता रहा है अतः आप जल्दी नलके समीप जाकर मेरी प्रार्थना उनसे कहनेका यत्न कीजिये। अब देर करना उचित नहीं है जैसे—व्याधि समयकी प्रतीक्षा न करके जब चाहे आती-जाती है। जैसे तेज बुद्धि गुरुपदेशकी प्रतीक्षा न करके जब चाहे विद्या सीखती है वैसे ही आप भी समयकी प्रतीक्षा न करके जल्दी जायें—साहससे जायेंगे ऐसा सोचें। ९१ ॥

अभ्यर्थनीयस्स गतेन राजा त्वया न शुद्धान्तगतो मदर्थम्।
प्रियास्यदाक्षिण्यबलात्कृतो हि तदोदयेदन्यवधूनिषेधः ॥ ९२ ॥

अथानन्तरकृत्यं सविशेषमुपदिशति अभ्यर्थनीय इत्यादि श्लोकपञ्चकेन। गतेन इतो यातेन त्वया स राजा नलः शुद्धान्तगतः अन्तःपुरस्थो मदर्थं मत्प्रयोजनं नाभ्यर्थनीयो न वाच्यः दुहादित्वाद् द्विकर्मकत्वं अप्रधाने दुहादीनामिति राज्ञोऽभिहितकर्मत्वं। कुतः हि यस्मात्तदा तस्मिन् काले प्रियाणामास्यदाक्षिण्यं मुखावलोकनोत्थापितच्छन्दानुवृत्ति... बलात्कृतो ...अन्यवधूनिषेधः उदयेत् उत्पद्येत ॥ ९२ ॥

हे राजहंस ! यहाँसे जाकर आप महाराज नलसे मेरी प्रार्थना जब वे अन्तःपुरके रानियो के समीपमें हों तब न कीजियेगा । क्योंकि उस समय उनके चित्तमें उन रानियोंके मुखोंकी अपेक्षा मैं सुन्दरी नहीं हूं ऐसा विचार, उन रानियोंके मुखोंको देखकर, उत्पन्न हो सकता है९२

शुद्धान्तसंभोगनितान्ततृप्ते न नैषधे कार्यमिदं निगाद्यम् ।
अपां हि तृप्ताय न वारिधारा स्वादुस्सुगन्धिः स्वदते तुषारा ॥ ९३ ॥

शुद्धान्तेति । किञ्च शुद्धान्तसम्भोगेन अन्तःपुरस्त्रीसम्भोगेन नितान्ततृप्ते अत्यन्तसन्तुष्टे नैषधे नलविषये इदं कार्यं न निगाद्यं न निगदितव्यं ऋहलोर्ण्यत् गदमदेत्यादिना सोपसर्गाद्यतो निषेधात् । तथाहि अपां तृप्ताय अद्भिस्तृप्तायेत्यर्थः। पूरणगुणेत्यादिना षष्ठीसमासप्रतिषेधादेव ज्ञापकात् षष्ठी रूच्यर्थानां प्रीयमाण इति सम्प्रदानत्वाच्चतुर्थी स्वादुर्मधुरा सुगन्धिः कर्पूरादि वासनया शोभनगन्धा अत्र कवीनां निरंकुशत्वाद्गन्धस्येत्वे तदेकांतत्वनियमानादरः । तुषारा शीतला वारिधारा न स्वदते न रोचते हि । दृष्टान्तालंकारः ॥ ९३ ॥

हे राजहंस ! जब महाराज नल अपनी अन्तःपुरकी अंगनाओंके साथ पूर्ण रमणतृप्ति प्राप्त कर चुके हों तब भी मेरी प्रार्थना उनसे न करियेगा क्योंकि-जब मनुष्यकी प्यास साधारण जलसे बुझी रहती है तब उसे पिये जलसे स्वादिष्ट तथा मधुर-सुगन्ध युक्त जल नहीं रुचता है॥९३

विज्ञापनीया न गिरो मदर्थाः क्रुधा कदुष्णे हृदि नैषधस्य ।
पित्तेन दूने रसने सितापि तिक्तायते हंसकुलावतंस ॥ ९४ ॥

विज्ञापनीया इति । हे हंसकुलावतंस ! नैषधस्य नलस्य हृदि हृदये क्रुधा क्रोधेन कदुष्णो ईषदुष्णो चकारात्कोः कद्वादेशः । मदर्थाः इमाः मदर्थाः अर्थेन सह नित्यसमासः सर्वलिङ्गता च वक्तव्या गिरो वाचो न विज्ञापनीया न विधेयाः न विज्ञाप्या इत्यर्थः । तथाहि पित्तेन पित्तदोषेण दूने दूषिते रसने रसनेन्द्रिये सिता शर्करापि तिक्तायते तिक्तीभवति लोहितादित्वात् क्यष् वा क्यष इति आत्मनेपद अत्रापि दृष्टान्तालङ्कारः ॥ ९४ ॥

हे हंसोंमें आभूषणस्वरूप ! हे राजहंस ! जिस समय महाराज नल क्रोधसे युक्त हों उस समय भी मेरी प्रार्थना उनसे न करियेगा । क्योंकि जब पित्तसे युक्त मनुष्यकी जीभ व्याप्त रहती है-मनुष्यको पित्तज्वर रहता है-तब उसे चीनी ( शर्करा ) भी कडुवी लगती है ॥९४॥

धरातुरासाहि मदर्थयाच्ञा कार्या न कार्यान्तरचुम्बिचित्ते ।
तदार्थितस्यानवबोधनिद्रा बिभर्त्यवज्ञाचरणस्य मुद्राम् ॥ ९५ ॥

धरेति । तुरं त्वरितं सहयत्यभिभवत्यरीनिति तुराषाडिन्द्रः महतेश्चौरादिकत्वात् क्विप् नहिवृतीत्यादिना पूर्वपदस्य दीर्घः प्रकृतिग्रहणे ण्यंतस्यापि ग्रहणात् सुधभोजस्तु तुराशब्दं टावन्तमाह । तस्मिन् धरातुरासाहि भूदेवेन्द्रे नले अजादिषु असाङ्रूपत्वात् सहेः साडः स इति षत्वं नास्ति । कार्यान्तरचुम्बिचित्ते व्यासक्तचित्ते

तदर्थयाच्ञा मत्प्रयोजनप्रार्थना न कार्या तथाहि तदा व्यासङ्गकाले अर्थितस्य अनवबोध अवबोधः स एव निद्रा सा अवज्ञां चरणस्य अनादरकरणस्य मुद्रां अभिज्ञानं विभर्त्ति अनादरप्रतीतिं करोतीत्यर्थः । तच्चातिकष्टमिति भावः ॥ ९५ ॥

हे राजहंस ! जिस समय महाराज नल अन्य कार्योंमें लगे हुए हों उस समय भी मेरी प्रार्थना उनसे न करियेगा । क्योंकि ऐसे समय प्रार्थना करने पर वे उसका ध्यान न देंगे । जब मनुष्य किसी बात पर ध्यान नहीं देना चाहता अथवा उस बातको नहीं सुनना चाहता है तो, निद्रा आदिका बहाना करने लगता है अतः कार्यान्तरमें व्यग्र होने पर मेरी प्रार्थना करने पर वह विफल हो जायगी ॥ ९५ ॥

**विज्ञेन विज्ञाप्यमिदं नरेन्द्रे तस्मात्त्वयास्मिन्समयं समीक्ष्य ।**
**आत्यन्तिकासिद्धिविलम्बसिध्योः कार्यस्य कार्यस्य शुभा बिभाति ॥९६॥**

विज्ञेनेति । तस्मात्कारणाद् विज्ञेन विवेकिना त्वया समयं समीक्ष्य इदं कार्यमस्मिन् नले विषये विज्ञाप्य विलम्बः स्यादित्याशङ्क्याह आत्यन्तिकेति । हे हंस ! कार्यस्य आत्यन्तिका सिद्धिः विलम्बिसिद्धयोर्मध्ये आर्यस्य विदुषस्ते का कतरा शुभा समीचीना विभाति अनवसरविज्ञापने कार्यविघाताद्वरं विलम्बनेनापि कार्यसाधनमिति भावः ॥९६॥

हे राजहंस ! आप ऐसे विवेकी द्वारा उन महाराज नलसे समयको देखकर प्रार्थना की जानी चाहिये । हे पक्षिवर !! आपको निम्न अङ्कित दो बातोंमेंसे कौन पसन्द है—प्रायः दूसरी ही पसन्द होगी—

( १ ) कार्यको असमयमें किसीसे कहने पर उसकी सर्वथा असिद्धि ( विफलता ) ।

( २ ) कार्यको समय देखकर कहकर उसकी सर्वथा सिद्धि ( सफलता ) ।

यद्यपि दूसरी रीतिका प्रार्थनापर कुछ समय लगता है, किन्तु वह समय देना ठीक होता है ॥ ९६ ॥

**इत्युक्तवत्या यदलोपि लज्जा सा नौचिती चेतसि नश्चकास्तु ।**
**स्मरस्तु साक्षी तददोषतायामुन्माद्य यस्तत्तदवीवदत्ताम् ॥ ९७ ॥**

इतीति । इत्थमुक्तवत्या तया लज्जा अलोपि त्यक्तेति यत् सा विधेयप्राधान्यात् स्त्रीलिङ्गता अनौचिती अनौचित्यङ्गतमेतत् नोऽस्माकं श्रृण्वतां चेतसि चकास्तु किन्तु लज्जा त्यागस्य अदोषतायां स्मरः साक्षी प्रमाणं यः स्मरः तां भैमीमुन्माद्य उन्मादावस्थां प्राप्येतत्तदनुचितं वचनमवीवदत् वादयतिस्म वदतेर्णौ चङि गति बुद्धीत्यादिना वदेरणि कर्तुः कर्म्मत्वम् प्रकृतिस्थस्यायं दोषो न कामोपहतचेतस इति भावः ॥९७॥

श्रीहर्ष कविवर कहते हैं कि उपर्युक्त प्रकारसे "बोलती हुई उस कुमारीने लज्जा त्याग दी" अर्थात्—बालापनमें ( कुमारावस्थामें ) रहने वाली कुमारीकी इतनी कामवर्णन करना कवियोंको वर्णन करनेके लिए साहित्यशास्त्रसे विरुद्ध है तो मैंने ( श्रीहर्षने ) क्यों इस कुमारी दमयन्तीसे राजहंस के द्वारा नलके प्रति कामदेव सूचक वर्णन अपने काव्यमें किया

( उसका उत्तर यह है कि ) मैंने यह वर्णन कुमारीका नहीं किया है अपितु कामदेवका किया है—अर्थात्-कामदेवकी धृष्टता दिखायी है कि कामदेवने उस कुमारीको उन्मत्त करके उसकी लज्जा दूर कराकर उससे हठात् उपर्युक्त प्रकारकी प्रार्थना नलके प्रति करवाई। अतः मेरे वर्णनसे दमयन्ती का मुग्धत्व और भी दृढ़ हो जाता है कि वह इतनी मुग्धा है कि कामके वशीभूत होकर उसने यह प्रार्थना की। अतः कामदेव ही दोषी है दमयन्ती नहीं है॥९७॥

**उन्मत्तमासाद्य हरः स्मरश्च द्वावप्यसीमां मुदमुद्वहेते ।**
**पूर्वस्स्मरस्पर्धितया प्रसूनं नूनं द्वितीयो विरहाधिदूनम् ॥ ९८ ॥**

कामो वा किमर्थमेवं कारयतीत्याशङ्क्य तस्यायं निसर्गो यदुन्मत्तेन क्रीडतीति सदृष्टान्तमाह। उन्मत्तमिति। हरःस्मरश्च द्वावपि उन्मत्तमासाद्य असीमां दुरन्तां मुदमुद्वहेते दधतुः। वहे स्वरितेत्वादात्मनेपदं किन्तु तत्र निर्देशक्रमात् पूर्वो हरः स्मरस्तद्वितया स्मरद्वेषितया प्रसूनं धुत्तूरकुसुमं तस्यायुधतयेति भावः। अन्यस्तु द्वितीयः स्मरस्तु विरहाधि दूनं विरहव्यथादुस्थमुन्मादावस्थापन्नमित्यर्थः। अन्यत्र विनोदलाभादित्यर्थः। उन्मत्त उन्मादवति धुत्तूरमुचुकुन्दयोरिति विश्वः। उभयोरभेदाध्यवसात् समानधर्म्मत्वविशेषणमात्रश्लेषात्प्रकृताप्रकृतगोचरत्वाच्च उभयश्लेषः। तेन हरवत् स्मरोऽप्युन्मत्तप्रिय इति उपमा गम्यते ॥ ९८ ॥

**प्रश्न**—कामदेव क्यों दमयन्तीको उन्मत्त कराकर ऐसा कर रहा है?

**उत्तर**—कामदेवका यह स्वभाव ही है कि वह उन्मत्तोंसे सदा क्रीड़ा करता है दृष्टान्तके साथ उस बतलाते हैं—

महादेवजी और कामदेव दोनों ही उन्मत्तोंको प्राप्तकरके अतीव हर्षित होते हैं। इनमें प्रथम कहे हुए महादेवजी धतूरेको प्राप्त करके हर्षित होते हैं दूसरा कामदेव भी विरहीको प्राप्त करके अत्यन्त हर्षित होता है। बात यह है कि महादेवजी और कामदेवमें विद्वेष है अतः विद्वेषी जन परस्पर स्पर्धा किया करते हैं महादेवजी कामदेवसे स्पर्धा करके उसके शस्त्र ( पुष्प ) को प्राप्त करके खुशी होते हैं। ( शास्त्रों के अनुसार महादेवजीको धतूरा बड़ा प्रिय है। धतूरेमें उन्मादकत्व करनेकी शक्ति भी है। ) संसारके सभी प्रकारके पुष्प कामदेवके छोटे-बड़े अस्त्र हैं अतः धतूरे का पुष्प भी कामास्त्र है। जब एक स्पर्धी अपने दूसरे स्पर्धीके शस्त्र पाता है तो हर्षित होता ही है। अतः महादेवजी भी कामदेवके अस्त्र धतूरेके फूलको प्राप्त करके हर्षित होते हैं। कामदेव भी उन्मत्त ( विरही ) को प्राप्त करके हर्षित होता है। उन्मत्त नामक महादेवजीका गण जब किसी मनुष्यके समीप जाता है तो अपने गुण साथ उसमें बस जाता है और वह मनुष्य उन्मत्त हो जाता है। कामदेव महादेवजीके उन्मत्त नामक गणको गुणके साथ उस पुरुषमें वर्त्तमान देखकर अति हर्षित होता है। जब कोई शत्रु अपने शत्रुके आदमीको प्राप्त करता है तो हर्षित होता है॥ ९८ ॥

**तथाभिधात्रीमथ राजपुत्रीं निर्णीय तां नैषधबद्धरागाम् ।**
**अमोचि चञ्चूपुटमौनमुद्रा विहायसा तेन विहस्य भूयः ॥ ९९ ॥**

पथेति। तथाभिधात्रीं तां राजपुत्रीं भैमीं नैषधे नलेव द्धरागां निर्णीय तेन विहा-
ला विहगेन विहस्य भूयः चञ्चूपुटस्य मौनमुद्रा निर्वचनत्वममोचि अवादीदित्यर्थः॥९९॥

ततः उपर्युक्त प्रकारसे बोलने वाली उस राजपुत्रीको नैषधेशमें (नलमें) बद्धानुराग
वाली ज्ञात करके उस राजहंसने हंसते हुए अपने चन्चुपुट की मौनमुद्रा पुनः छोड़ी।
र्थात्—नलमें प्रगाढ़ानुराग देखकर उस कुमारी से राजहंस फिर बोला ॥ ९९ ॥

**इदं यदि क्ष्मापतिपुत्रि तत्त्वं पश्यामि तन्न स्वविधेयमस्मिन् ।**
**त्वामुच्चकैस्तापयता नलं च पञ्चेषुणैवाजनि योजनेयम् ॥ १०० ॥**

इदमिति हे क्ष्मापतिपुत्रि! इदं त्वदुक्तं तत्त्वं यदि सत्यं यदि तर्त्हि अस्मिन्
पये स्वविधेयं मत्कृत्यं न पश्यामि किन्तु त्वां नृपं च उच्चकैरत्यन्तं तापयता पञ्चे-
णैव इयं योजना युवयोः सङ्घटना अजनि जाता जनेः कर्मणि चिणो लुक् ॥ १०० ॥

हे पृथिवीपति की पुत्रि! यदि आपकी उपर्युक्त उक्तियाँ वास्तविक है तो इस विषयमें
री कुछ कृति मैं नहीं देखता हूं। किन्तु, आपको और नल महाराजको अत्यन्त सन्तापते
ए कामदेव ने ही ऐसी स्थिति उत्पन्न कर दी है। अर्थात्—आप और महाराज नल दोनोंको
म सता रहा है ॥ १०० ॥

**त्वद्बद्धबुद्धेर्बहिरिन्द्रियाणां तस्योपवासिव्रतिनां तपोभिः ।**
**त्वामद्य लब्ध्वामृततृप्तिभाजां स्वं देवभूयं चरितार्थमस्तु ॥ १०१ ॥**

त्वदिति। किन्तु त्वद्बद्धबुद्धेः त्वदायत्तचित्तस्य त्वामेव ध्यायत इत्यर्थः। अत एव
स्योपवासव्रतिनां त्वदासङ्गाद्विषयान्तरव्यावृत्तानां तपोभिरुक्तोपवासव्रतरूपैरद्य
ां लब्ध्वा सन्मुखेन लब्धप्रायां निश्चित्य साक्षात्कृत्येति च गम्यते अत एव अमृतेन
तृप्तिस्तद्भाजां बहिरिन्द्रियाणां स्वं स्वकीयं देवभूयं देवत्वमिन्द्रियत्वं सुरत्वञ्च देवः
रे राज्ञि देवमाख्यातमिन्द्रियमिति विश्वः। चरितार्थं सफलमस्तु अमृतपानैकफल-
ाद् देवत्वं स्यादिति भावः। अर्थान्तरप्रतीतेर्ध्वनिरेवेत्यनुसन्धेयम् ॥ १०१ ॥

हे भैमि! उपवास व्रतादि तपस्याओंसे आपका निरन्तर ध्यान करते हुए वे महाराज
ल आज आपको प्राप्त करके अपने शरीरको अमृतपानसे परितृप्त करके देवतुल्य चरितार्थ
रेंगे। इस श्लोकका यह आशय है कि, महाराज नल आठों लोकपालोंके अंशसे परिव्याप्त
अतः उनका आन्तरिक अंश देवत्व ही है परन्तु, उनके सांसारिक हाथ-पैर (बाह्येन्द्रियां)
मानुषिक हैं देवतुल्य हैं उनमें देवत्व नहीं अपितु वे देवत्ववत् हैं। परन्तु, आज जब वे
रे द्वारा आपकी प्राप्ति सुनेंगे तो सौभाग्यसे उनकी बाह्येन्द्रियां भी देवत्व में ही हो जायंगी
देवत्ववत् नहीं रहेंगी। जैसे—देवगण अमृतपान करके पीवर गात्र वाले होकर अमर हो जाते
। वैसे वे महाराज नल भी आपको अमृतके सदृश प्राप्त करके देवत्वमें होकर अमर हो
ायेंगे। इस श्लोकका आशय ऐसा भी है—जैसे कोई मनुष्य निरन्तर भगवानकी आराधना
रके व्रतादि उपवासोंसे अपनी देहको कृश करके कठिन तपस्या द्वारा भगवत्साक्षात्कार करके

अमृतफल प्राप्तिसे अपनी तपस्या सफल करता है । वैसे महाराज नल भी आपकी प्राप्तिपर कृतकृत्य होंगे ॥ १०१ ॥

तुल्यावयोर्मूर्तिरभून्मदीया दग्धा परं सास्य न ताप्यतेऽपि ।
इत्यभ्यसूयन्निव देहतापं तस्याऽतनुस्त्वद्विरहाद्विधत्ते ॥ १०२ ॥

यदुक्तं नृपं पञ्चेषुस्तापयतीति तदाह । तुल्येति । आवयोर्नलस्य मम चेत्यर्थः । त्यदादीनि सर्वैर्नित्यमिति सर्वग्रहणादत्यदादिना नलेन सह त्यदाद्येकशेषः । मूर्तिस्तदनुस्तुल्या तुल्यरूपाभूत् तत्र मदीया सा मूर्त्तिः परं निःशेषं दग्धा भस्मीकृता अस्य मूर्तिस्तनुर्न ताप्यते तापमपि न प्राप्यते इति हेतोरभ्यसूयन् ईर्ष्यन्निवेत्युत्प्रेक्षा अतनुरनङ्गस्त्वद्विरहात्त्वद्विरहमेव रन्ध्रमन्विष्येत्यर्थः । तस्य नलस्य देहतापं विधत्ते तस्मात्सिद्धिपदमुपतिष्ठते ते मनोरथ इति भावः ॥ १०२ ॥

हे दमयन्तिके ! उन महाराज नलको कामदेव आपके विरहमें तपा रहा है—वह कामदेव यह सोचता है कि पहले मेरी ( कामदेवकी ) और महाराज नलकी मूर्त्तियां एक समान थी । किन्तु, मेरी वह सुन्दर मूर्त्ति शिवजी द्वारा जला दी गयी और इन महाराज नलकी मूर्त्ति तपने पर भी नहीं जलती । अतः इसी ईर्ष्याके वशीभूत होनेसे वह कामदेव महाराज नलको आपके वियोगमें सम्भव है सता रहा है ॥ १०२ ॥

लिपिं दृशा भित्तिविभूषणं त्वां नृपः पिबन्नादरनिर्निमेषम् ।
चक्षुर्जलैरार्जितमात्मचक्षू रागं स धत्ते रचितं त्वया नु ॥ १०३ ॥

अथास्य दशावस्थावर्णयन् चक्षुःप्रीतिं तावत् श्लोकद्वयेनाह । लिपिमित्यादि । हे भैमि ! स नृपो भित्तिविभूषणं कुड्यालङ्कारभूतां लिपिं चित्रमयीं त्वां दृशा आदरेणास्थयानिर्निमेषं पिबन् चक्षुर्जैरश्रुभिरर्पितं त्वयानु त्वया वा रचितमात्मचक्षुषो रागं आरुण्यं अनुरागञ्च धत्ते अत्रोभयकारणसम्भवादुभयस्मिन्नपि रागे जाते श्लेषमहिम्नैकत्राभिधानात्कारणविशेषः सन्देहः ॥ १०३ ॥

अब अवस्थावर्णन करते हैं—

हे राजकुमारी ! वे महाराज नल आपकी प्रतिकृति दीवालपर रचकर निर्निमेषदृष्टिसे उसे आदरसे देखते हैं । निर्निमेष दृष्टिसे देखते हुए उनकी आंखोंसे आंसू बहने लगते हैं और उन आंसुओंके बहनेसे उनकी आंखे लाल-लाल हो जाती हैं । उस लालिमाको देखकर ऐसी प्रतीति होती है कि वह आपके कारण उन्हें प्राप्त हुई है—निर्निमेषदृष्टि देखनेसे नहीं प्राप्त हुई है ॥ विरहियों की दश अवस्थाओं में से चक्षुःप्रीति नामकी प्रथमावस्था का यह वर्णन है ॥ १०३ ॥

पातुर्दृशालेख्यमयीं नृपस्य त्वामादरादस्तनिमीलयास्ति ।
ममेदमित्यश्रुणि नेत्रवृत्तेः प्रीतेर्निमेषच्छिदया विवादः ॥ १०४ ॥



इममेवार्थं भङ्ग्यन्तरेणाह । पातुरिति । अस्तनिमीलया निर्निमेषया दृशा आले-

न्मयीं चित्रगतां त्वां आदरात्पातुर्द्रष्टुरित्यर्थः पिबतेस्तृन् प्रत्ययः । अत एव न लोकेत्यादिना षष्ठीप्रतिषेधात्त्वामिति द्वितीया नृपस्य नेत्रवृत्तेः प्रीतेश्चत्तुप्रीतेर्निमेषस्य च्छिदयाच्छेदेन सह नेत्रवृत्त्येति शेषः । भिदादित्वादङ् प्रत्ययः अश्रुणि विषये इदमश्रु ममेति मत्कृतमेवेति विवादः कलहो अस्ति भवतीत्यर्थः ॥ १०४ ॥

हे कुमारी ! आपकी प्रतिकृति (तसवीर) को निर्निमेष दृष्टिसे आदरसे देखते हुए उन महाराज नलकी आंखोंमेंसे लगातार आंसू बहने लगते हैं। उन आंसुओंके लिए महाराजकी आंखोंमें रहनेवाली प्रीति और निर्निमेष दोनोंमें झगड़ा होने लगता है—प्रीति कहती है कि "ये आंसू मेरे हैं" और निर्निमेष कहता है कि "ये आंसू मेरे हैं। अर्थात्—महाराज आप की प्रतिकृतिको अति आदरसे देखते हैं आपकी तसवीर पर जब इतना प्रगाढ़ानुराग है तो आप का कहना ही—क्या ॥ १०४ ॥

त्वं हृद्गता भैमि बहिर्गतापि प्राणायिता नासिकयास्य गत्या ।
न चित्तमाक्रामति तत्र चित्रमेतन्मनो यद्भवदेकवृत्ति ॥ १०५ ॥

अथ मनःसङ्गमाह—त्वमिति । हे भैमि ! त्वं बहिर्गतापि हृद्गता अन्तर्गता अपि विरोधे तेन चाभासाद्विरोधाभासोऽलङ्कारः । कया गत्या केन प्रकारेण अस्य नलस्य प्राणायिता प्राणवदाचरिता प्राणसमा उपमानादाचारे कर्तुः क्यङ् प्रत्ययः नासि अस्ये-त्यर्थः । यतः प्राणोऽपि नासिकया नासाद्वारेण आस्यगत्या मुखद्वारेण उच्छ्वासनि-श्वासरूपेण बहिर्गतोऽप्यन्तर्गतो भवतीति शब्दश्लेषः । अतएव प्राणायितेति श्लिष्ट-विशेषणेयमुपमा पूर्वोक्तविरोधेन सङ्कीर्णा किन्तु तत्र प्राणायितत्वे चित्रमाश्चर्यरसः चित्तमाक्रामति न किञ्चिच्चित्रमित्यर्थः । कुतः यद्यस्मादेतन्मनो नलचित्तं भवति त्वमे-वैकावृत्तिर्जीविका यस्य तद्भवदेकवृत्ति भवच्छब्दस्य सर्वनामत्वाद् वृत्तिमात्रे पुंवद्भावः जीवितभूतस्य प्राणायितत्वे किं चित्रं जीवितस्य प्राणधारणात्मकत्वादिति भावः ॥१०५॥

हे भैमि ! आप बाहर रहने पर भी महाराज नलके प्राणोंके समान होकर उनके शरीरके भीतर रहती हैं। जैसे प्राण नाकके छेदोंसे बाहर आकर पुनः भीतर जाते हैं वैसे ही आप भी नाक, आंख आदिके दर्शनसे उसके भीतर ही हैं अर्थात्—आपकी नाक-आंखकी तसवीर देख-कर वे अपने चित्तमें रखे हुए हैं। आपमें निरन्तर लगी हुई उनकी चित्तवृत्ति उनके चित्तको चंचलायमान नहीं करती हैं, इसे देखकर आश्चर्य होता है। अथवा आपमें लगा हुआ उनका चित्त अन्य चित्रको नहीं देखता केवल आपके चित्रको देखता है। यदि वह दूसरेके चित्रको देखे तो आश्चर्य अवश्य होता। परन्तु, वह आप ही के चित्रको देखता है इसलिए आश्चर्य नहीं होता है। वे महाराज आपको हार्दिक रूपेण चाहते हैं। महाराज नलके श्वासोच्छ्वास क्या हैं आप ही के प्राण हैं इस बातको जानकर चित्त आश्चर्यान्वित नहीं होता क्योंकि आपमें लगी हुई उनकी चित्तवृत्ति सदा निस्तब्ध है॥ १०५ ॥



अजस्रमारोहसि दूरदीर्घां सङ्कल्पसोपानततिं तदीयाम् ।

श्वासान् स वर्षत्यधिकं पुनर्यद्ध्यानात्तव त्वन्मयतान्तराप्य ॥१०६॥

अथ द्वाभ्यां सङ्कल्पावस्थामाह। अजस्रमिति। दूरदीर्घो अत्यन्तायतां तदीयां सङ्कल्पा मनोरथा एव सोपानानि तेषाम् ततिं पङ्क्तिमजस्रं त्वं आरोहसि श्वासान् पुनः स नलो अधिकं वर्षति मुञ्चतीति यत् तच्छ्वासवर्षं तव ध्यानात् त्वन्मयतां त्वदात्मकत्वमाप्य प्राप्य आप्नोतेराङ् समासे क्त्वो ल्यबादेशः अन्यथा कथमन्यायासादन्यस्य श्वासमोक्ष इति भावः। अत्र श्वाससोपानारोहणयोः कार्यकारणयोर्वैयधिकरण्योक्तेरसङ्गत्यलङ्कारः 'कार्यकारणयोर्भिन्नदेशत्वे स्यादसङ्गति'रितिलक्षणात् तन्मूला चेयं नलस्य दमयन्ती। तादात्म्योत्प्रेक्षेति सङ्करः ॥ १०६ ॥

हे भैमि ! आप उन महाराज नलकी विशाल एवं लम्बी–लम्बी कल्पना रूपी सीढ़ियों की पंक्तियोंपर चढ़ती हैं। तब वे महाराज नल खूब तेजीसे श्वासोंको छोड़ते हैं। उस समय उनके श्वास छोड़नेसे ज्ञात हो जाता है कि, वे आपके ध्यानमें निमग्न हैं। इस श्लोकमें यह दिखाया गया है कि महाराज नल दमयन्तीके ध्यानमें निमग्न होकर (दमयन्तीप्राप्तिपर' ऐसा करूंगा वैसा करूंगा ) सोचते है। ऐसी कल्पनाओंको करते हुए वे कल्पनारूपी सीढ़ियोंपर दमयन्तीको चढ़ाकर आप थकावटकी श्वासें छोड़ते हैं। इसपर कवि कल्पना करते है कि, जब दमयन्ती उन कल्पनारूपी सीढ़ियोंपर चढ़ती हैं तब महाराज नल क्यों थकावटकी सांसें छोड़ते हैं। जो सीढ़ियां चढ़ता है उसे थकावटकी सांसे लेनी चाहिये। पुनः कवि इसका उत्तर स्वयं ही देते हैं कि, वे महाराज नल उस समय दमयन्तीमें तन्मय हो जाते हैं और इसीसे साँसें छोड़ते हैं अर्थात्—उस समय वे दमयन्तीरूप धारण कर लेते हैं। दमयन्तीको सोचते-सोचते उसमें तल्लीन होकर लम्बी सांसें छोड़ते हैं। नहीं तो एककी श्रान्ति दूसरेमें कैसे आती ॥ १०६ ॥

हृत्तस्य यां मन्त्रयते रहस्त्वां तां व्यक्तमामन्त्रयते मुखं यत् ।
तद्वैरिपुष्पायुधमित्रचन्द्रसख्यौचिती सा खलु तन्मुखस्य ॥ १०७ ॥

हृदिति। तस्य नलस्य हृत् हृदयं कर्तृ यां त्वां रहः उपांशु रहश्चोपांशु चालिङ्ग इत्यमरः। मन्त्रयते सम्भाषते तां त्वां तन्मुखं कर्तृ व्यक्तं प्रकाशमामन्त्रयते हे प्रिये ! क यासि मामनुयान्तं पश्य इत्येवमुच्चैरुच्चरतीति यत् सा तद्रहस्यप्रकाशनं विधेयप्राधान्यात् स्त्रीलिङ्गता तन्मुखस्य तद्वैरिणो नलद्वेषिणः पुष्पायुधस्य मित्रं सखा शरच्चन्द्रः। तेन यत् सख्यं मैत्रीसादृश्यञ्च तस्य औचिती औचित्यं खलु अरि मित्रस्याप्यरित्वादुचितमेतद्रहस्यभेदनमित्यर्थः। अत्र मुखकर्तृकरहस्योद्भेदनस्य उक्तवैरनिमित्तत्वमुत्प्रेक्ष्यते ॥ १०७ ॥

हे राजकुमारी ! उन महाराज नलका अन्तःकरण एकान्तमें जो कुछ भी आपसे कहता है। वह बात उनका मुख प्रकाशित कर देता है। क्योंकि उनके मुखकी मित्रता चन्द्रके साथ है और चन्द्रमाकी मित्रता कामदेवके साथ है तथा कामदेव नल महाराजका शत्रु है। अर्थात्—एकान्तमें जो कुछ महाराज नलका अन्तःकरण आपके लिए सोचता है उसका

प्रभाव उनके मुखपर पड़ता है और उनका चिन्तायुक्त होकर पीला पड़ जाता है। उसी पिलाई को देखकर लोग ज्ञात कर लेते हैं कि महाराज दमयन्तीके लिए चिन्तित हैं। कवि स्वयं कहते हैं कि, यह मुख क्यों पीला होकर महाराजकी बाते प्रकट कर देता है। फिर इसका कारण यह बताते हैं कि महाराज नलसे और कामदेवसे शत्रुता है पर महाराजके मुख कामदेवके मित्र चन्द्रका सखा है। अर्थात् नलका मुख कमलके समान है। अतः मित्रका मित्र होनेके कारण वह मुख महाराजकी भीतरी बातोंको अपने मित्रके मित्र कामदेवकी बड़ाईके लिए प्रकट कर देता है। जिसमें लोग जान जायें कि कामदेव राजा नलको सता रहा है। संसारमें अभी लोग मित्रके मित्रको परममित्र और शत्रुके शत्रु को दृढ मित्र बनाते । अर्थात्—राजा नल आपके विरहमें पीले मुखवाले हो गये हैं॥ १०७॥

**स्थितस्य रात्रावधिशय्य शय्यां मोहे मनस्तस्य निमज्जयन्ति ।**
**आलिङ्ग्य या चुम्बति लोचने सा निद्राधुना न त्वहतेऽङ्गना वा॥१०८**

अथ एकेन जागरमरतिञ्चाह स्थितस्येति। रात्रौ शय्यामधिशय्य शय्यायां शयित्वा अधिशीङ्स्थासामिति अधिकरणस्य कर्म्मत्वम्। स्थितस्य तस्य मनो मोहे सुखपारवश्ये निमज्जयन्ती सती या आलिङ्ग्य लोचने चुम्बति सा निद्रा त्वहते त्वत्तो विना अन्यारादितरर्तेइत्यादिना पञ्चमी त्वद्विरहाद्धेतोस्त्वदन्या चेति द्रष्टव्यं अङ्गना वा अधुना नास्ति निद्रानिषेधाज्जागरः अङ्गनान्तरनिषेधाद्विषयद्वेषलक्षणा अरतिश्चोक्ता अत्र निद्राङ्गनयोः प्रस्तुतयोरेवालिङ्गनाक्षिचुम्बनादिधर्मसाम्यादौपम्यप्रतीतेः केवल प्रकृतगोचरातुल्ययोगितालङ्कारः प्रस्तुताप्रस्तुतानाञ्च केवलं तुल्यधर्मतः औपम्यं गम्यते यत्र सा मता तुल्ययोगिता इति लक्षणात्॥ १०८॥

हे कुमारिके! रात्रिमें शय्यापर लेटे रहने पर भी आपके बिना उन महाराज नलकी आँखोंको चूमने वाली निद्रा नहीं आती है तथा न कोई अंगना ही महाराजकी आँखोंको चूमकर न उनसे आलिङ्गन करके शय्यापर उन्हें सान्त्वना देती है। यह श्लोक श्लेष है—अर्थात्—भैमि! जब महाराज शय्यापर लेटे रहते हैं तो आपके बिना निद्रा भी अंगनाकी भाँति आजकल उनका आलिङ्गन तथा अक्षिचुम्बन नहीं करती है। वे आपके लिए अति व्याकुल रात हैं॥ १०८॥

**स्मरेण निस्तक्ष्य वृथैव बाणैर्लावण्यशेषां कृशतामनायि ।**
**अनङ्गतामप्ययमाप्यमानः स्पर्धां न सार्धं विजहाति तेन ॥ १०९ ॥**

अथ कार्श्यावस्थामाह। स्मरेणेति। अयं नलः स्मरेण बाणैर्निस्तक्ष्य निशात्य वृथैव लावण्यं कान्तिविशेषः मुक्ताफलेषु छायायास्तरलत्वमिवान्तरा प्रतिभाति यदङ्गेषु लावण्यमिहोच्यते इति भूपालः। तदेव शेषो यस्यास्तांतनुतां कार्श्यमनायि नीतः नीञ्द्विकर्मकत्वात्प्रधाने कर्मणि लुङ् प्रधानकर्मण्याख्येये लादीनाहुर्द्विकर्मणामिति वचनात्। वृथरवं व्यनक्ति अनङ्गतां कृशाङ्गतां अनुदरातिवदीषदर्थे नञ् समासः

आप्यमानो अनीयमानोऽपि अत्र पूर्ववत्प्रधाने शानच् तेन स्मरेण सार्द्धं स्पर्धां न विजहाति तथापि तं जिगीषत्येवेत्यर्थः । अङ्गकार्श्येऽपि स्पर्द्धाबीजलावण्यस्याकार्श्यादङ्गकर्शनं वृथैवेति भावः । अतएव विशेषोक्तिरलङ्कारः तत्सामग्र्यामनुत्पत्तिर्विशेषोक्तिरलङ्कृतिरिति लक्षणात् ॥ १०९ ॥

हे कुमारी ! कामदेवने महाराज नलको तेज बाणोंसे वेधकर वृथा ही उनके प्रत्यंगों को कृशित किया है—इससे उसका मनोरथ पूर्ण न हुआ । क्योंकि वे महाराज यद्यपि अंगोंसे कृश तो अवश्य हो गये हैं परन्तु सौन्दर्यसे कृश नहीं हुए हैं और सौन्दर्यमें अभी भी कामदेव के साथ स्पर्धा करने वाले हैं। कामदेवने चाहा था कि उन्हें तेज बाणोंसे वेधकर कुरूप बनादें जिससे वे मेरी बराबरी सुन्दरतामें न कर सकें । किन्तु, ऐसा नहीं हो सका ॥ १०९ ॥

त्वत्प्रापकात्त्रस्यति नैनसोऽपि त्वय्येव दास्येऽपि न लज्जते यत्।
स्मरेण बाणैरतितक्ष्य तीक्ष्णैर्लूनः स्वभावोऽपि कियान् किमस्य ॥११०

अथ द्वाभ्यां लज्जात्यागमाह त्वदित्यादि । स्मरेण तीक्ष्णैर्बाणैरतितक्ष्य शरीरमिति शेषः । अस्य नलस्य स्वभावोऽपि पापभीरुत्वनीचत्वगर्हताच्छील्यमपि कियानल्पोऽपि लूनः किमित्युत्प्रेक्षा यद्यस्मात्त्वत्प्रापकात्त्वत्प्राप्तिसाधनादेनसः पापादपि न त्रस्यति भीत्रार्थानां भयहेतुरिति अपादानत्वात् पञ्चमी त्वय्येव दास्येऽपि त्वदधिगतदास्यविषये न लज्जते ॥ ११० ॥

हे कुमारी ! कामदेवने महाराज नलके शरीरको तेज बाणोंसे भेदकर उनके स्वभावको भी बेध दिया है । क्योंकि पापसे भी आपकी प्राप्तिके लिए वे नहीं डरते हैं तथा आपकी प्राप्तिके लिए आपकी दासता करनेके लिए भी वे लज्जा नहीं करते हैं । अर्थात्—यदि उन्हें आपकी प्राप्तिके लिए पाप भी करना पड़े तो उससे भी वे नहीं घबड़ायेंगे तथा आपका सेवक भी बनना पड़े तो भी लज्जा नहीं लायेंगे । यद्यपि ये दोनों कार्य राजाओंको करना शास्त्र विरुद्ध है ॥ ११० ॥

स्मारं ज्वरं घोरमपत्रपिष्णोस्सिद्धागदंकारचये चिकित्सौ ।
निदानमौनादविशद्विशाला साङ्क्रामिकी तस्य रुजेव लज्जा ॥ १११

स्मारमिति । घोरं दारुणं स्मारं ज्वरं कामसन्तापं चिकित्सौ प्रतिकर्त्तरि कित निवास इति धातोः गुप्तिज्किद्भ्यः सनिति निन्दाक्षमाव्याधिप्रतीकारेषु इष्यत इति रोगप्रतीकारे सन् प्रत्ययः सनाशंस भिक्ष उः नलोकेत्यादिना षष्ठीप्रतिषेधः सिद्धागदङ्कारचये सिद्धवैद्यसङ्घे कर्मण्यणि कारे सत्यागदस्येति मुमागमः निदानमौनाद्रोगनिदानानभिधानाद्धेतोरपत्रपिष्णोर्लज्जाशीलस्य अलङ्कृञित्यादिना इष्णुच् तस्य नलस्य विशाला महती लज्जा संक्रमादागता सांक्रामिकी रुजेव अचिरोगो ह्यपस्मारः क्षयः कुष्ठमसूरिका । दर्शनात् स्पर्शनाद्दानात् संक्रमन्ति नरान्नरं इति उक्ताद्यादिरोग इवेत्यर्थः भिदादित्वादङ् प्रत्ययः आविशत् ॥ १११ ॥

हे राजपुत्रि ! छुतही बीमारीकी भांति महाराज नलकी विशाल लज्जा लज्जाशील महाराज नलके शरीरसे निकलकर उन निपुण वैद्योंमें प्रविष्ट हो गयी जो निपुण वैद्य दारुण कामज्वरसे पीडित महाराजकी चिकित्सा करने आये थे क्योंकि निपुण वैद्य महाराज नलके रोगके कारणमें ( निदान ) बतलानेमें मूक रहे ( लज्जासे लोग नहीं बोलते हैं—चुप रहते हैं। ) इस श्लोकमें लज्जा छुतही बीमारीके समान मानी गयी है। क्षय, कोढ़, नेत्र-रोग, अपस्मार और मसूरिका आदि बीमारियां एक मनुष्यसे दूसरेको उनके देखनेसे, स्पर्श करनेसे वा परस्पर संघटन करनेसे हो जाती हैं। इस श्लोकका आशय यह है कि जो वैद्य गण महाराज नलकी चिकित्साके लिए आये थे वे महाराजकी चिकित्साका निदान करनेमें असमर्थ हो गये और जब मनुष्य किसी पढ़ी हुई विद्याकी परीक्षामें अनुत्तीर्ण होता है तो लज्जित हो जाता है। वैद्यगण भी अपनी पढ़ी विद्याओंसे जब महाराजकी बीमारीका कारण न जान सके तो लज्जित हो गये ॥ १११ ॥

**बिभेति रुष्टासि किलेत्यकस्मात्स त्वां किलोपेत्य हसत्यकाण्डे ।**
**यान्तीमिव त्वामनुयात्यहेतोरुक्तस्त्वयेव प्रतिवक्ति मोघम् ॥ ११२ ॥**

अथ उन्मादावस्थामाह विभेतीति। स नलः अकस्मादकाण्डे रुष्टा कुपितासीति बिभेति अकाण्डे अनवसरे उपेत्य किल प्राप्येव हसति अहेतोरकस्माद्यान्तीं गच्छन्तीं किल त्वामनुयाति त्वया युक्त इव मोघं निर्विषयं प्रतिवक्ति सर्व्वोऽप्ययमुन्मादानुभावः। उन्मादश्चित्तविभ्रमः ॥ ११२ ॥

हे राजपुत्रि ! आप उनपर कुपित हो गयी हैं ऐसा समझकर वे महाराज नल सहसा डर जाते हैं। आप उन्हें प्राप्त हो गयीं ऐसा ज्ञातकर वे विना कारणके हंस पड़ते हैं। आप जा रही हैं ऐसा सोचकर वे आपके पीछे-पीछे अनुगमन करने लगते हैं। आपने उन्हें सम्बोधित करके कुछ कहा है ऐसा विचारकर वे वृथा ही आपकी बातोंका उत्तर देने लगते हैं। वे आपके लिए उन्मादीसे हो रहे हैं ॥ ११२ ॥

**भवद्वियोगाभिदुरार्तिधारायमस्वसुर्मज्जति निश्शरण्यः ।**
**मूर्छामयद्वीपमहान्ध्यपङ्के हाहा महीभृद्भटकुञ्जरोऽयम् ॥ ११३ ॥**

अथ मूर्च्छावस्थामाह भवदिति। भवत्या वियोगो भवद्वियोगः सर्वनाम्नो वृत्तिमात्रे पुंवद्भावः। तस्मिन्नच्छिदुरा अविच्छिन्ना विदिभिदिच्छिदेः कुरच्। आर्तिधारा दुःखपरम्परा तस्या एव यमस्वसुर्यमुनाया मूर्च्छामयं मूर्च्छावस्थारूपं यद्द्वीपं तत्र महान्ध्यं महामोहस्तस्मिन्नेव पङ्के महीभृद्भटो राजवीरः स एव कुञ्जरः निःशरण्यो निरालम्बः सन् मज्जति हाहेति खेदे रूपकालङ्कारः। आर्तिधारायास्तमोविकारत्वेन साम्याद्यमुनारूपणम् ॥ ११३ ॥

हे भैमि ! अति खेद है कि, वे राजवीर महाराज नल आपके वियोगरूपी दुःखकी अविच्छिन्न परम्परामें फंसकर उस प्रकार मूर्च्छित और निरावलम्ब होकर पड़े हैं जिस प्रकार

यमुना नदीके किनारे महान्ध्य द्वीपमें कोई ( हाथी ) फंसकर मूर्च्छित और निरावलम्ब होकर पड़ जाता है। अर्थात्—हे भैमि ! वे महाराज आपके वियोगमें मूर्च्छितावस्था प्राप्त कर चुके हैं ॥ ११३ ॥

सव्यापसव्यत्यजनाद्द्विरुक्तैः पञ्चेषुबाणैः पृथगर्जितासु ।
दशासु शेषा खलु तद्दशाया तया नभः पुष्प्यतु कोरकेण ॥ ११४ ॥

दशमावस्था तु तस्य कदापि माभूदित्यत आह सव्येति । सव्यापसव्याभ्यां वामदक्षिणाभ्यां व्यसनान्मोचनात् द्विरुक्तैर्द्विगुणीकृतैर्दशभिरित्यर्थः । पञ्चेषुबाणैः पृथगर्ज्जितासु प्रत्येकमुत्पादितासु दशसु "दृङ्मनःसङ्गसङ्कल्पो जागरः कृशतारतिः ह्रीत्यागोन्मादमूर्च्छान्त इत्यनङ्गदशा दश ॥" इत्युक्तासु चक्षुः=प्रीत्यादिदशावस्थासु शेषा अवशिष्टा या तद्दशा दशमावस्थेत्यर्थः । तयैव कोरकेण कलिकयेति रूपकम् । नभः पुष्प्यतु पुष्पितमस्तु । अस्य सा दशा खपुष्पकल्पास्तु कदापि मा भूदित्यर्थः । तच्च त्वत्प्राप्तिलाभादिति भावः । पुष्पविकसन इति धातोर्लोट् ॥ ११४ ॥

हे राजकुमारी ! कामदेवके बायें और दाहिने हाथोंसे फेंके जानेवाले तीरोंसे महाराज नलको आपके वियोगमें प्राप्त होनेवाली अवस्थाएं दुगुनी पीड़ा दे रही हैं। क्योंकि कामदेव सबपर एक हाथसे तीर चलाता है इनपर दोनों हाथोंसे चला रहा है अतः सभी वियोगियो की अपेक्षा इन्हें दूना कष्ट हो रहा है। अस्तु आपके वियोगमें महाराज नलने वियोगियोंको होनेवाली दश अवस्थाओंमें नवको तो भोग लिया है। परन्तु, हे ईश्वर ! दशमी अवस्था अब उन्हें आकाशके पुष्पकी कलिकाके समान हो। अर्थात्—जैसे आकाशमें पुष्प कलिका नहीं होती है वैसे ही उन्हें भी दशमी अवस्था न भोगनी पड़े ।

दशों अवस्थाओंके नाम—( १ ) नेत्रप्रीति । ( २ ) मनःसङ्ग । ( ३ ) सङ्कल्प । ( ४ ) जागरण । ( ५ ) कृशता । ( ६ ) रति । ( ७ ) लज्जात्याग । ( ८ ) उन्माद ( ९ ) मूर्च्छा । ( १० ) अन्त ( मरण ) ॥ ११४ ॥

त्वयि स्मराधेस्सततास्मितेन प्रस्थापितो भूमिभृतास्मि तेन ।
आगत्य भूतस्सफलो भवत्या भावप्रतीत्या गुणलोभवत्याः ॥ ११५ ॥

त्वयीति । त्वयि विषये स्मराधेः स्मरपीड़ा दुःखाद्धेतोः सततमस्मितेन स्मितरहितेन खिन्नेन तेन भूमिभृता प्रस्थापितोऽस्मि । अथ आगत्य गुणलोभवत्याः भवत्यास्तव भावप्रतीत्या अभिप्रायज्ञानेन सफलो भूतः सिद्धार्थोऽस्मीत्यर्थः ॥ ११५ ॥

हे कुमारी ! कामदेवकी पीड़ासे व्यथित होकर निरन्तर अस्मित मुखवाले ( खिन्न मुखवाले ) महाराज नलने मुझे आपके समीप भेजा है यहां आकर मैंने गुणलोभवती आपकी भावप्रतीति परिज्ञात करके कृतकृत्यता ( सिद्धि ) प्राप्त की । अर्थात्—यहां आकर आपको गुणोंको मानने वाली प्राप्त किया । यदि आप गुणों पर मुग्ध होने वाली न होतीं तो नलके गुणोंपर कैसे मुग्ध होती । अतः आप गुणमुग्धा—गुणलोभवती हैं । आपके गुणमुग्धत्वसे मैं भी सफल हुआ क्योंकि मैं इसीलिए आया था कि आप महाराज नलके

प्त हो जायें। मेरे कहनेसे आपने नलके गुणोंपर मुग्धता प्रगट कर दी है। अतः मैं सफल हुआ ॥ ११५ ॥

**धन्यासि वैदर्भि गुणैरुदारैर्यया समाकृष्यत नैषधोऽपि।**
**इतः स्तुतिः का खलु चन्द्रिकाया यदब्धिमप्युत्तरलीकरोति ॥११६॥**

धन्येति। हे वैदर्भि! भैमि! वैदर्भीरीतिरपि गम्यते। धनं लब्धा धन्य असि कृतार्थासीत्यर्थः। धनगणं लब्धेति यत्प्रयः कुतः यया त्वया उदारैरुत्कृष्टैर्गुणैर्ला-वण्यादिभिरन्यत्र श्लेषैः प्रसादादिभिः पाशैश्चेति गम्यते नैषधो नलोऽपि तादृक् धीरो-ऽपीति भावः। समाकृष्यत सम्यगाकृष्टो वशीकृत इति भावः। एतेन वैदर्भीत्यादि-विशेषणाद्गुणैर्भावकमिवेत्युपमालङ्कारो युज्यते। तथाहि चन्द्रिकाया अब्धिमपि गभी-रमपीति भावः। उत्तरलीकरोति क्षोभयतीति यत् इतोऽपि अभ्यधिका स्तुतिर्वर्णना का खलु न कापीत्यर्थः। दृष्टान्तालङ्कारः। एतेन नलस्य समुद्रगाम्भीर्यं दमयन्त्या-श्चन्द्रिकाया इव सौन्दर्यं च व्यज्यते ॥ ११६ ॥

हे वैदभि! आप धन्य हैं जो आपके उदार गुणोंके द्वारा महाराज नल भी आकर्षित किये गये हैं। उस चन्द्रिकाकी क्या अधिक स्तुति की जाय जिसने समुद्रको उत्तालितकर दिया। अथवा हे भैमि! माधुर्य प्रसादादि गुणों तथा श्लेषादि अलंकारोंसे विभूषित वैदर्भी रीतिकी तरह आपने समुद्रके समान गम्भीर महाराज नलको वशीभूत कर लिया। अतः हे वैदर्भि! आप धन्यवादार्ह हैं काव्यमें—वैदर्भी रीति प्रसाद गुणसे परिपूर्ण होकर तथा उपमादि श्लेषा-लंकार युक्त होकर चारुत्व लाती है। आपभी सौभाग्यादि सौन्दर्य गुणोंसे युक्त होकर नलमें चारुत्व लानेवाली हैं—नलको वशीभूत करने वाली हैं। आपकी अधिक प्रशंसा नहीं की जा सकती। उस चन्द्रिकाकी प्रशंसा कौन कर सकता है जो गम्भीर समुद्र को ज्वारभटायुक्त कर देती है। अर्थात्—आपने चन्द्रिका के समान मनोज्ञ होकर समुद्रके समान गम्भीर चित्तवाले नलको उत्तालित कर दिया है ॥ ११६ ॥

**नलेन भायाश्शशिना निशेव त्वया स भायान्निशया शशीव।**
**पुनःपुनस्तद्युगयुग्विधाता स्वभ्यासमास्ते नु युवां युयुक्षुः॥ ११७ ॥**

फलितमाह—नलेति। शशिना निशेव त्वं नलेन भायाः। भातेराशिषि लिङ्। सोऽपि निशया शशीव त्वया भायात् भातेः पूर्ववदाशिषि लिङ्। किं च अत्र दैवानुकूल्यमपि सुभाव्यमित्याह–पुनः पुनस्तयोर्निशाशशिनोर्युगं युनक्ति योजयतीति तद्युगयुक् विधाता युवां नलन्त्वाञ्च त्यदादीनि सर्वैर्नित्यमिति एकशेषः योक्तुमिच्छतीति युयुक्षुः सनन्ताद्उप्रत्ययः स्वभ्यासं अभ्यासस्य समृद्धौ निरन्तराभ्यास इत्यर्थः। समृद्ध्य-व्ययीभावः। ततः परस्याः सप्तम्या वैकल्पिकत्वादम्भावः। आस्ते नु तथाभ्यस्यति इत्यर्थः। अत्र तादर्थ्ये चतुर्थ्या अम्भाव इति व्याख्याने अभ्यासार्थमभ्यस्ततीत्य-र्थः स्यात् तदात्माश्रयत्वादित्यपेक्षणीयं अत्र दमयन्ती नलयोरन्योन्यशोभाजननोक्ते-

रन्योन्यालङ्कारः । परस्परक्रियाजननमन्योन्यमिति लक्षणात् । उपमाद्वयानुप्राणित इति सङ्करः । तन्मूला चेयं विधातुः पुनर्निशाशशियोजनायां दमयन्तीनलयोजनाभ्यासत्वोत्प्रेक्षेति ॥ ११७ ॥

हे राजकुमारी ! आपकी शोभा नलके साथ ऐसी हो जैसी चन्द्रकी शोभा रात्रिके साथ होती है । नलकी शोभा आपके साथ भी वैसी हो जैसी चन्द्रकी शोभा रात्रिके साथ होती है। सम्भव है ब्रह्मदेव पुनः पुनः चन्द्र और रातका जो संयोग करनेका अभ्यास करते हैं वह अभ्यास इसीलिए करते हैं । जिसमें आप और नल महाराजके संयोग करानेका उन्हें अभ्यास रहे । जैसे—कोई मनुष्य किसी कामको करनेके पूर्व उसका अभ्यास करके उसे करता है। उसी प्रकार ब्रह्मदेव भी आप लोगोंकी जोड़ी मिलानेका अभ्यास पहले चन्द्र–निशाकी जोड़ी मिलाकर कर रहे हैं क्या ॥ ११७ ॥

स्तनद्वये तन्वि परं तवैव पृथौ यदि प्राप्स्यति नैषधस्य ।
अनल्पवैदग्ध्यविवर्धिनीनां पत्रावलीनां रचना समाप्तिम् ॥११८॥

स्तन इति । हे तन्वि ! किञ्च नैषधस्य नलस्य अनल्पेन महता वैदग्ध्येन नैपुण्येन विवर्धनीनामुज्जृम्भणीनां पत्रावलीनां रचना समाप्तिं सम्पूर्णतां प्राप्स्यति यदि, तर्हि पृथौ पृथुनि भाषितपुंस्कत्वाद्विकल्पेन पुंवद्भावः। तवैव स्तनद्वये परं प्राप्स्यति नान्यस्या इत्यर्थः । अन्यस्या अयोग्यत्वादिति भावः ॥ ११८ ॥

हे कृशाङ्गि ! हे भैमि !! महाराज नल पत्ररचना करनेमें बड़े निपुण हैं अतः उन महाराज नलद्वारा रची हुई पत्रावली यदि कहीं समाप्त हो सकती है तो केवल आपके बड़े-बड़े कुचों पर ही, अन्यत्र नहीं । अर्थात्—हे कृशाङ्गि ! महाराज नल अंगोंपर कस्तूरी चन्दनादिसे सुन्दर रचनाएं करनेमें बड़े प्रवीण हैं । परन्तु, वे रचनाएं विस्तीर्ण स्थान चाहती हैं अतः आपके कुचोंपरही वे रचनाएं हो सकती हैं क्योंकि वे कुच अन्यांगनाओंके कुचोंसे विपुल हैं अन्य अंगनाओंके कुच आपसे अल्प है । अतः वहां वे रचनाएं नहीं हो सकती हैं ॥११८॥

एकस्सुधांशुर्न कथञ्चन स्यात्तृप्तिक्षमस्त्वन्नयनद्वयस्य ।
त्वल्लोचनासेचनकस्तदस्तु नलास्यशीतद्युतिसद्वितीयः ॥ ११९ ॥

एक इति । एकः सुधांशुस्त्वन्नयनद्वयस्य कथञ्चन कथञ्चिदपि तृप्तौ प्रीणने क्षमो न स्यात्तत्तस्मान्नलास्यशीतद्युतिना नलमुखचन्द्रेण सद्वितीयः सन् त्वल्लोचनयोरासेचनकस्तृप्तिकरोऽस्तु, तदासेचनकं तृप्तेर्नास्त्यन्तो यस्य दर्शनादित्यमरः । आसिच्यते अनेनेत्यासेचनकं करणे ल्युट् स्वार्थे कः ॥ ११९ ॥

हे राजपुत्रि ! आपके दोनों नेत्रोंमें एक चन्द्र अपनी किरणोंसे अमृत नहीं सींच सकता है यही असमर्थता देखकर उस चन्द्रने अपने दूसरे रूपको नलमुखाकार होकर धारण किया है । अतः आप चन्द्रमुखी नलको प्राप्त कीजिये ॥ ११९ ॥



अहो तपःकल्पतरुर्नलीयस्त्वत्पाणिजाग्रस्फुरदङ्कुरश्रीः ।

त्वद्भ्रूयुगं यस्य खलु द्विपत्री तवाधरो रज्यति यत्कलम्बः॥ १२०॥
यस्ते नवः पल्लवितः कराभ्यां स्मितेन यः कोरकितस्तवास्ते।
अङ्गम्रदिम्ना तव पुष्पितो यः स्तनश्रिया यः फलितस्तवैव॥१२१॥

अथ द्वाभ्यां नलतपःसाफल्यमाह। अहो इत्यादिना। नलस्यायं नलीयः वा नाम-
धस्येति वृद्धसंज्ञायां वृद्धाच्छः। अतएव कल्पतरुः अभिनवः प्रसिद्धकल्पतरुविल-
ण इत्यर्थः। अतएव अहो इत्याश्चर्यं वैलक्षण्यमेवाह त्वदित्यादि। अत्रापि यच्छब्दो
ष्टव्यः यः कल्पतरुः तव पाणिजाग्रैः कररुहाग्रैर्नित्यं स्फुरन्ती अङ्कुरश्रीर्यस्य सः अङ्कु-
वानित्यर्थः यस्य त्वद्भ्रूयुगमेव द्वयोः पत्रयोः समाहारो द्विपत्री प्रथमोत्पन्नपत्रद्वयं खलु
वाधरो यत्कलम्बो यस्य नासिकाकिसलयकाण्ड इत्यर्थः अस्य तु नालिका कलम्ब-
त्यमरः। रज्यति स्वयमेव रक्तो भवति कुपिरजोः प्राचा सन् परस्मैपदञ्चेति कर्म-
र्तरि रूपम्॥ १२०॥

य इति। यस्ते तव कराभ्यां पल्लवितः सञ्जातपल्लवः यस्तव स्मितेन कोरकितः
ञ्जातकोरकः सन् आस्ते यस्तवाङ्गानां म्रदिम्ना मार्दवेन पुष्पितः सञ्जातपुष्पः य-
तवैव स्तनश्रिया स्तनसौन्दर्य्येण फलितः सञ्जातफलः सर्वत्र तारकादित्वादितच्
त्ययः। अत्र श्लोकद्वयेन तपसि दमयन्तीनखादिषु च कल्पतरुतावयवत्वरूपणात्सा-
यवरूपकं तथा अवयविनि कल्पतरोरवयवानां नखाङ्कुरादीनाञ्च मिथः कार्य्यकार-
भूतानां भिन्नदेशत्वादसङ्गत्याश्रितमिति सङ्करः कार्यकारणयोर्भिन्नदेशत्वे स्यादस-
तिरिति लक्षणात्॥ १२१॥

( अब दो श्लोकोंसे नलके तपका साफल्य कहते हैं— )

हे राजकुमारी! महाराज नलके तपस्यारूपी इस कल्पवृक्षको देखिये आश्चर्य है कि वह
ल्पवृक्ष आकाशके कल्पवृक्षसे विलक्षण है—( उसकी विलक्षणता देखें ) उस कल्पवृक्षकी
कुर शोभा आपके हाथोंके नाखूनोंके सदृश हो दीप्तिमान है। अथवा आपके हाथोंके नाखून
ी जिसमें अंकुरके समान है।

उस कल्पवृक्षके अंकुरके पश्चात् दो पत्र प्रस्फुटित हुए हैं वे आपकी भौंहोंके समान हैं।
थवा आपकी भौंहें ही उसमें दो पत्तोंके समान हैं। उसमें जो लाल लाल नाल है वह आपके
धरके समान लाल है। अथवा आपका स्वयं ही लाल–लाल अधर उसका नाल स्वरूप है
मध्यमांकुर है )। उसके नये किसलय आपके हाथोंके समान हैं। अथवा आपके हाथ ही
सके नूतन पल्लवके समान है। उसकी कलियां आपके मृदु हास्यके समान है अथवा आपका
दु हास्य ही उसमें मृदु कलियोंके समान है। आपके शरीर मार्दवके समान वह पुष्पित
ोता है। अथवा आपके शरीरका मार्दव ही उसमें पुष्पितरूप है ( आपका कोमलांग ही उस
क्षका पुष्प है ) तथा वह आपकी देहकी शोभासे फलित है। अथवा आपकी देहकी शोभासे
लवान है। आपके स्तनोंके समान उसमें फल लगे हैं। अथवा आपके स्तन ही उसमें फल-
स्वरूप हैं। इस प्रकारसे वह विलक्षण कल्पवृक्ष नलकी विलक्षण तपस्याके फलस्वरूप है।

अथवा इस प्रकार की कठिन तपस्या नलने आपकी प्राप्तिके लिए की है । अन्य कोई ऐसी तपस्या नहीं कर सकता । इससे आप उन्हींपर प्रेम कीजिये ॥ १२०–१२१ ॥

कंसीकृतासीत्खलु मण्डलीन्दोः संसक्तरश्मिप्रकरा स्मरेण ।
तुला च नाराचलता निजैव मिथोऽनुरागस्य समीकृतौ वाम् ॥१२२॥

किञ्च समानुरागत्वाच्च युवयोः समागमः श्लाघ्य इत्याशयेनाह कंसीति । स्मरेण कर्त्रा वां युवयोर्मिथोऽनुरागस्य अन्योन्यरागस्य यस्तव तस्मिन् यश्च तस्य त्वयि तयोरनुरागयोरित्यर्थः । समीकृतौ समीकरणे निमित्ते तदर्थमित्यर्थः संसक्तः संयोजितः रश्मीनामंशूनां सूत्राणाञ्च प्रकरः समूहो यस्यां सा किरणप्रग्रहौ रश्मी इत्यमरः । इन्दोर्मण्डली विम्बं कंसीकृता लोहापात्रीकृता आसीत् । कंसोऽस्त्री लोहभाजनमिति शाब्दिकमण्डने । मण्डले निजा नाराचलता वाणवल्ली सैव तुला तुलादण्डकृतेति शेषः । तत्रेन्दुमण्डलादौ कंसादिरूपणादेव स्मरस्य कार्यकारणरूपसिद्धेरेकदेशविवर्तिरूपकम्॥१२२॥

हे भीमपुत्री ! आपके और महाराज नलके समान अनुरागोंको मापनेके लिए कामदेवने चन्द्रमण्डलको तराजूका पलरा तथा अपने वाणको तराजूका दण्ड और चन्द्रकिरणोंको तराजूकी रस्सियां बनाया है । अर्थात् कामदेव अपने वाणरूपी तराजूकी दण्डीसे जिसमें चन्द्ररूपी पलरा लगा है और वह पलरा चन्द्रकिरणरूपी रस्सियोंसे दण्डीमें बंधा है आपलोगोंके अनुरागों को बराबर कर रहा है॥ जगत्में बड़ी–बड़ी वस्तुएँ नापनेके लिए तराजूका व्यवहार किया जाता है । कामदेवकी उक्त तराजूमें एक ओर चन्द्ररूपी वर्तन रखा था जिसमें एकके पश्चात् दूसरेके अनुराग धरकर नापे गये और दूसरी ओर कामदेवकेवल वांट (वजन मापक पदार्थ (मन, सेर–छटाक) आदि रखे थे । अभी अभी संसारमें कहीं कहीं ऐसे कांटे दिखायी देते हैं जिनमें एक तरफ वस्तु रखनेके लिए बढ़ियां पात्र बंधे रहते हैं और दूसरे तरफ खराब–लोहे आदि के पदार्थ पात्र रहते हैं । इस तराजूमें जिधर अनुराग रखे जाने वाले थे उधर चन्द्रका पात्र था तथा जिधर मापक पदार्थ थे उधर लोहे आदिके कोई अवर्णनीय पदार्थके पात्र थे । इसीसे उनका वर्णन नहीं किया है ॥ १२२ ॥

सत्वस्रुतस्वेदमधूत्थसान्द्रे तत्पाणिपद्मे मदनोत्सवेषु ।
लग्नोत्थितास्त्वत्कुचपत्ररेखास्तन्निर्गतास्तत् प्रविशन्तु भूयः ॥ १२३ ॥

सत्त्वेति । किं च मदनोत्सवेषु रतिकेलिषु सत्त्वेन मनोविकारेण स्रुतो यः स्वेदः सात्त्विकविकारविशेषः तेनैव मधूत्थेन मधूच्छिष्टेन सान्द्रे निरन्तरे अतएव तस्य नलस्य पाणिपद्मे लग्नाः संक्रान्ताः । अतएव उत्थिताः त्वत्कुचतटाद्विश्लिष्टाः । मधूच्छिष्टे निकषस्थकनकरेखावदिति भावः । स्नातानुलिप्तवत्पूर्वकालसमासः तन्निर्गताः । तत्पाणिपद्मोत्पन्ना त्वत्कुचपत्ररेखाः भूयः तत् पाणिपद्मं वा पुंसि पद्मं नलिनमित्यमरः । प्रविशन्तु कार्यस्य कारणे लयनियमादिति भावः । युवयोः समागमोऽस्तु इति तात्पर्यम् ॥ १२३ ॥

हे राजकुमारी महाराज नलके कमलरूपी हाथोंसे जो पत्रावली आपके विशाल कुचोंपर सुरत क्रीड़ाके समय रची जाय वह पत्रावली पुनः उन्हीं महाराज नलके हाथोंमें सुरत क्रीड़ाके समय जनित पसीनेसे भींगे कमलरूपी हाथोंमें उसी भाँति चपक जाय जिस भाँति मोमके बने सांचे ( ठप्पे ) पर दूसरी वस्तुका नकशा आ जाता है। अर्थात्—आप और उनका समागम शीघ्र हो ॥ १२३ ॥

बन्धाढ्यनानारतमल्लयुद्धप्रमोदितैः केलिवने मरुद्भिः।
प्रसूनवृष्टिं पुनरुक्तमुक्तां प्रतीच्छतं भैमि युवां युवानौ ॥ १२४ ॥

बन्धेति। किं च हे भैमि! बन्धैरुत्तानादिकरणैः। कामतन्त्रप्रसिद्धैराढ्यं समग्रं नानारतं उत्तानकादिविविधसुरतं तदेव मल्लयुद्धं तेन प्रमोदितैः सन्तोषितैः केलिवने मरुद्भिः वायुभिर्देवैश्च मरुतौ पवनामरौ इत्यमरः। पुनरुक्तं सान्द्रं यथा तथा मुक्तां प्रसूनवृष्टिं युवतिश्च युवा च युवानौ पुमांस्त्रियेत्यकशेषः। युवां प्रतीच्छतं स्वीकुरुतं युद्धविक्रान्ता हि देवैः पुष्पवृष्ट्या सम्भाव्यन्त इति भावः ॥ १२४ ॥

हे भैमि! आप और महाराज दोनों युवती-युवक पवन द्वारा उत्पेक्षित पुष्पवृष्टि, केलिवनमें अनेकों प्रकारके रतिके आसनोंसे, प्रसन्न होते हुए प्राप्त करें। जैसे· समरविजयी वीरोंपर देवगण पुष्पवृष्टि करते हैं। वैसे—आप लोग भी कामदेव रूपी मल्लयुद्धको परस्पर केलिवनमें करते हुए पवन द्वारा प्रक्षिप्त पुष्पवृष्टि प्राप्त करें ॥ १२४ ॥

अन्योन्यसङ्गमवशादधुना विभातां तस्यापि तेऽपि मनसी विकसद्विलासे।
स्रष्टुं पुनर्मनसिजस्य तनुं प्रवृत्तमादाविव द्व्यणुककृत्परमाणुयुग्मम् ॥ १२५ ॥

अन्योन्येति। किं च अधुना अन्योन्यसङ्गमवशाद्विकसद्विलासे वर्धमानोल्लासे तस्यापि तेऽपि नलस्य तव च मनसी मनसिजस्य कामस्य तनुं शरीरं पुनः स्रष्टुमारब्धुं प्रवृत्तमतएवादौ द्वाभ्यामारब्धं कार्यं द्व्यणुकं तत्करोतीति तत्कृत् तदारम्भकं करोतेः क्विप्। तत्परमाणुयुग्ममिवेत्युत्प्रेक्षा तार्किकमते मनसोऽणुत्वादिति भावः। विधातां कार्यारम्भकपरमाणुयुगलवदविश्लेषेण विराजतामित्यर्थः। भातेर्लोट् तस्थेति तसः तामादेशः ॥ १२५ ॥

हे राजकुमारी! अधुना, आप और महाराज नलके पारस्परिक प्रकर्षानुरागायुक्त चित्त कामदेवको पुनः उत्पन्न करनेवाले हैं क्या। आपका और महाराजका चित्त एकीभूत हो रहा है। नैयायिकगण चित्तको अणुरूप मानते हैं। प्राणीकी उत्पत्ति दो अणुओंके सम्पर्कसे होती है। अतः कामदेवको उत्पन्न करनेके लिए आप दोनोंके मन एकीभूत हो रहे हैं। अतः आप दोनोंके चित्त एकीभूत होकर शिवजी द्वारा जलाये गये कामदेवकी पुनः उत्पत्ति करनेका आरम्भ कर रहे हैं ॥ १२५ ॥

कामः कौसुमचापदुर्जयममुं जेतुं नृपं त्वां धनु-
र्वल्लीमव्रणवंशजामधिगुणामासाद्य माद्यत्यसौ।

श्रीवालङ्कृतिपट्टसूत्रलतया पृष्ठे कियल्लम्बया
भ्राजिष्णुं कषरेखयेव निवसत्सिन्दूरसौन्दर्यया ॥ १२६ ॥

काम इति । असौ यो नलजिगीषुरिति भावः । कामः कौसुमेन चापेन दुर्जयं जितेन्द्रियत्वादिति भावः । अमुं नृपं नलं जेतुमत्रणवंशजां सत्कुलप्रसूतां दृढवेणुजन्याञ्च द्वौ वंशौ कुलमस्कराविति अमरः । अधिगुणामधिकलावण्यादिगुणामधिज्याञ्च निवसदनुवर्तमानं सिन्दूरस्याङ्कुरावस्थायां नालान्तराले स्थितस्य सौन्दर्यं शोभा यस्यां तया कषरेखया कालान्तरे सिन्दूरसंक्रान्तिपरीक्षार्थं कृतवर्षणरेखयेवेत्युत्प्रेक्षा। पृष्ठे ग्रीवापश्चाद्भागे कियत् किञ्चिद्यथा तथा लम्बया स्रस्तया ग्रीवालङ्कृतिः ग्रीवालङ्कारभूता या पट्टसूत्रलता तया भ्राजिष्णुं ताच्छील्ये भुवश्चेति चकारादिष्णुच् भ्राजमानां त्वामेव धनुवल्लीं चापलतामासाद्य माद्यति हृष्यति श्लेषोत्प्रेक्षासङ्कीर्णो रूपकालङ्कारः ॥ १२६ ॥

हे भैमि ! कामदेव महाराज नलको अपने पुष्पोंके धनुषसे दुर्जय समझ गया ( और दुःखी हो गया ) परन्तु, वह आपके द्वारा उन्हें जीतनेकी युक्ति प्राप्तकर अति हर्षित हो रहा है । उसने उत्तम कुलमें उत्पन्न आपको धनुष बनाया है । जैसे कोई धनुर्धारी अच्छे बांसोंका धनुष बनाता है वैसे ही कामदेवने भी अच्छे कुलमें उत्पन्न आपको धनुष रूपमें बनाया है । आपके गलेके पीछे पीठपर लटकने वाली लाल—लाल सिन्दूरके समान सुन्दर चोटीको उसने कषण रेखा बनाया है । जब कोई धनुर्धारी धनुषकी परीक्षा करता है "धनुष ठीक परिपक्व हो गया है कि नहीं उसपर सिन्दूरका घर्षण करके देखता हैं यदि बांसपर सिन्दूर रेखाके समान हो जाता है तो वह धनुष उत्तम माना जाता है ।" कामदेवने भी जब आपको नया धनुष बनाया तो आपकी परीक्षा की । आप भी उसकी परीक्षामें उत्तीर्ण हुईं । अतः वह आपको धनुष रूपमें प्राप्त करके उन्हें जीतने की युक्तिसे परमानन्दित हो रहा है ॥ १२६ ॥

त्वद्गुच्छावलिमौक्तिकानि घुटिकास्तं राजहंसं विभो-
र्वेध्यं विद्धि मनोभुवः स्वमपि तां मञ्जुं धनुर्मञ्जरीम् ।
यन्नित्याङ्कनिवासलालिततमज्याभुज्यमानं लस-
न्नाभीमध्यबिला विलासमखिलं रोमालिरालम्बते ॥ १२७ ॥

त्वदिति । विभोर्मनोभुवः कामस्य पक्षिवेद्धुरिति शेषः । तव गुच्छावलेर्मुक्ताहारविशेषस्य मुक्ता एव मौक्तिकानि विनयादित्वात् स्वार्थे ठगिति वामनः । घुटिकाः गुलिकाः विद्धि जानीहि तं राजहंसं राजश्रेष्ठं तमेव राजहंसं कलहंसं श्लिष्टरूपकम् । राजहंसो नृपश्रेष्ठे कादम्बकलहंसयोरिति विश्वः । वेधितुं प्रहर्तुमर्हं वेध्यं लक्ष्यं विधविधाने ऋहलोर्ण्यत् अनेकार्था धातवः एवमाह वेधितव्यमिति [illegible] स्वामी । अन्ये त्वाहुः स्वप्नेऽपि विधानार्थएव प्रयोगाच्च विधवे धन इत्येवाकरस्थः पाठः पाठान्तरं तु प्रामादिक-

न्धपरम्परायातमिति विद्धि स्वमात्मानमपि स्वो ज्ञातावात्मनि स्वमित्यमरः। तां वक्ष्यमाणप्रकारां सज्जुं मञ्जुलां धनुर्मञ्जरीं चापवल्लरीं विद्धि यस्याः नित्यमङ्कवासेन समीपस्थित्या लालिततमया अत्यादृतया ज्यया मौर्व्या भुज्यमानमनुभूयमानमखिलं विलासं शोभां ज्यारूपतामित्यर्थः। लसन्नाभ्येव मध्यविलङ्गुलिकास्थानं यस्याः सा रोमालिस्त्वद्रोमशजिरालम्बते भजति अत्र मौक्तिकादौ गुटिकाद्यावयवरूपणादवयविन्नि नामे वेदुधृत्वरूपणस्य गम्यमानत्वादेकदेशविवर्त्तिसावयवरूपकमलङ्कारः ॥ १२७ ॥

हे राजकुमारी ! आपका हारावली महाराज नलरूपी मेघ पक्षीके लिए कामदेवके धनुषकी गुलिकारूप हैं। अथवा आपकी हारावली राजश्रेष्ठ महाराज नलको भेदन करनेमें धनुषक गुलिकाके समान है। आप भी उस कामदेवके धनुषकी मञ्जुल वल्लरीके समान हैं। उक्त धनुकी मञ्जुल वल्लरीके समीप स्थित सुन्दर विलासकी पराकाष्ठा वाली गुलिकारूप मध्यभागमें बिलवाली, चारो तरफ रोमावली वाली आपकी नाभि शोभित है। अर्थात्—हे राजकुमारी ! आप कामदेवका धनुष हैं। कामदेव आपको धनुष रूपमें धारण करके नलको जीतेगा। धनुषमें जैसे गुलिका रहती है वैसे यहां भी आपमें नाभि है गुलिका स्थान धनुष की डोरीके समीप रहता है। यहां आपकी नाभिके चारों ओर भी आपकी रोमावली विराजमान है। गुलिका धनुषके अखिल गुणोंको धारण करती हैं। नाभि भी रोमावलीके सुन्दर गुणोंसे युक्त हैं। अतः आप धनुषके सभी गुणोंसे पूर्ण हैं ॥ १२७ ॥

पुष्पेषुश्चिकुरेषु ते शरचयं स्वं भालमूले धनू
रौद्रे चक्षुषि यज्जितस्तनुमनुभ्राष्ट्रं च यश्चिक्षिपे ।
निर्विद्याश्रयदाश्रमं स वितनुस्त्वां तज्जयायाधुना
पत्रालिस्त्वदुरोजशैलनिलया तत्पर्णशालायते ॥ १२८ ॥

पुष्पेषुरिति। यः पुष्पेषुः कामो यज्जितो येन नलेन सौन्दर्यात्पराभूतः अतएव निर्विद्य ईर्ष्यया जीवनवैयर्थ्यं मत्वेत्यर्थः। तत्त्वज्ञानोदितेर्ष्यादेर्निर्विदो निष्फलत्वधीरिति लक्षणात् ते तव चिकुरेषु केशेषु स्वं स्वकीयं शरचयन्त्वदुधृतकुसुमव्याजादिति भावः। भालमूले ललाटभागे धनुः भ्रूव्याजादिति भावः। तथा रौद्रे रुद्रसम्बन्धिनि चक्षुष्येव अनुभ्राष्ट्रमम्बरीषे विभक्त्यर्थेऽव्ययीभावः। क्लीबेऽम्बरीषं भ्राष्ट्रो ना इत्यमरः। तनुं शरीरं च चिक्षिपे क्षिप्तवान् पूर्वमेव दग्धतनुव्याजादिति भावः स्वरितेत्त्वात्तङ् स पुष्पेषुर्वितनुरनङ्गः सन् अधुना तज्जयाय नलविजयार्थन्त्वामेवाश्रमं तपोवनमाश्रयत् आश्रितवान् तपश्चर्य्यार्थ्यमिति शेषः। अन्यथा कथं तं जेष्यतीति भावः। अतएव त्वदुरोज एव शैलो निलयो यस्याः सा तन्निष्ठेत्यर्थः। पत्रालिः पत्ररचना पर्णचयश्च तस्य कामस्य पर्णशालायते सेवाचरति उपमानात् कर्त्तुः क्यङ्। अत्र पूर्वार्द्धे शरचापादीनां पूर्वोक्तपुष्पादिविषयनिगरणेन तदभेदाध्यवसायाभेदे अभेदलक्षणातिशयोक्तिः तत्पर्णशालायत इत्युपमा चोत्थापितेन त्वमाश्रममिति रूपकेण सङ्कीर्णा व्यञ्जकाप्रयोगाद्गम्या कामस्याश्रमाश्रयणोत्प्रेक्षेति सङ्करः ॥ १२८ ॥

हे भैमि ! कामदेवने नलसे पराजित होकर अपने सभी अस्त्र-शस्त्र फेंक दिये हैं और शरीरको भी भट्ठीमें झोंककर कठिन तपस्या कर रहा है—महाराज नलको पुनः जीतनेके लिए। उस कामदेवने अपने पुष्प बाणोंको आपके शिरपर गूंथे हुए फूलोंमें फेंक दिया—अर्थात्-आपके शिरके पुष्प कामास्त्रसे हैं। अपने धनुषको आपके ललाट भागमें स्थित भौंहोंमें फेंक दिया है। आपकी भौंहे कामदेवके धनुषके सदृशी हैं। अपने शरीरको उसने शिवजीके तृतीय नेत्ररूपी भट्ठीमें फेंक दिया है अर्थात् तपानेके लिये शिवजीके तृतीय नेत्रमें उसने अपने शरीरको फेंक दिया है। अधुना वह कामदेव अशरीरी होकर महाराज नलको जीतनेके लिए आपके ही शरीररूपी तपोवनके आश्रयमें है। आपके शरीरमें आश्रय लेकर वह कामदेव आपके स्तनरूपी पर्वतपर लगी हुई चन्दन आदिकी रचनावाली पर्णशालामें तप कर रहा है।

ईर्ष्याभिभूत कामदेव महाराज नलसे सौन्दर्यमें पराजित होकर अपने सभी अस्त्र-शस्त्रों को फेंककर आजकल नलको जीतनेके लिए प्रबल तप कर रहा है। लोग जैसे-दूसरेसे हारकर पर्वतपर जाकर पत्तोंकी कुटी बनाकर तप करते हैं और विपक्षीको जीतनेकी प्रबल इच्छा करते हुए अस्त्र-शस्त्र त्याग देते हैं। वैसे ही कामदेवने भी अपने अस्त्रोंको त्यागकर आपके स्तनरूपी पर्वतपर चन्दनपत्रकी कुटियामें तपकर प्रारम्भ किया है। आपके ही द्वारा नल कामदेवसे जीते जा सकते हैं दूसरेसे नहीं ॥ १२८ ॥

इत्यालपत्यथ पतत्रिणि तत्र भैमीं सख्यश्चिरात्तदनुसन्धिपराः परीयुः ।
शर्मास्तु ते विसृज मामितिसोऽप्युदीर्य वेगाज्जगाम निषधाधिपराजधानीम् ॥१२९॥

इतीति। तत्र तस्मिन् पतत्रिणि हंसे भैमीमिति इत्थमालपति भाषमाणे सति अथास्मिन्नवसरे चिरात्प्रभृति तस्या भैम्या अनुसन्धिरन्वेषणम्, उपसर्गे घोः किरिति किः। तत्पराः सख्यः परीयुः परिवव्रुः इणो लिट्। हंसोऽपि ते तव शर्मास्तु सुखमस्तु मां विसृज इत्युदीर्य उक्त्वा वेगान्निषधाधिपराजधानीं जगाम ॥ १२९ ॥

राजहंसके द्वारा उपर्युक्त बातें कह चुकने पर दमयन्तीको खोजनेमें तत्पर उसकी सखियां वहांपर आ गयीं और उन्होंने दमयन्तीको घेर लिया। (उन सखियोंको आते देखकर) राजहंसने कुमारी दमयन्तीसे कहा—"आपका मंगल हो, मुझे आज्ञा दीजिये—जानेके लिए।" ऐसा कह वह राजहंस शीघ्र निषधेशकी राजधानीको चला गया ॥ १२९ ॥

चेतोजन्मशरप्रसूनमधुभिर्व्यामिश्रतामाश्रय-
त्प्रेयोदूतपतङ्गपुङ्गवगवीहैयङ्गवीनं रसात् ।
स्वादं स्वादमसीम मृष्टसुरभि प्राप्तापि तृप्तिं न सा
तापं प्राप नितान्तमन्तरतुलामानर्छ मूर्च्छामपि ॥ १३० ॥

चेत इति। सा भैमी चेतोजन्मनः कामस्य शरप्रसूनानां शरभूतपुष्पाणां मधुभिस्तद्रसैः क्षौद्रैश्च मधुमद्ये पुष्परसे क्षौद्र इत्यमरः। व्यामिश्रतामाश्रयत् तथा मिश्रं सदित्यर्थः। असीमं निःसीमं अपरिमितमित्यर्थः। नकारान्तोत्तरपदो बहुव्रीहिः

मृष्टं शुद्धम् अन्यत्रामलं तच्च तत् सुरभि सुगन्धि च खञ्जकुब्जद्विशेषणसमासः । प्रेयसो नलस्य दूतः सन्देशहरो यः पतङ्गः पुङ्गवः इव पतङ्गपुङ्गवो हंसश्रेष्ठः पुमान् गौः पुङ्गवः । गोरतद्धितलुकीति टच् तस्य गौर्वाक् तद्गवी पूर्ववत् टचि टिड्ढाणञि- त्यादिना ङीप् । सैव हैयङ्गवीनं ह्योगोदोहोद्भवं घृतमिति रूपकम् । हैयङ्गवीनं संज्ञायामिति निपातः । तद्गवी तद्धेनुः तस्या इति च गम्यते रसाद्रागात् स्वादं स्वादं पुनः पुनरास्वाद्य आभीक्ष्ण्ये णमुल्प्रत्ययः । पौनःपुन्यमाभीक्ष्ण्यं आभीक्ष्ण्ये द्वे भवत इति उपसंख्यानात् द्विरुक्तिः । तृप्तिं प्राप्तापि अपिर्विरोधे अन्तः नितान्तं तापं न पाप अतुलां मूर्च्छामपि नानर्च्छ न प्राप ऋच्छत्यृतामिति गुणः अत आदेरित्यभ्यासाका- रस्य दीर्घः तस्मान्नुड् द्विहल इति नुट्, मधुमिश्र घृतस्य विषत्वात्तत्पाने तापाभा- वादिति विरोधः सः पूर्वोक्तरूपकोत्थापित इति सङ्करः । मधुनो विषरूपत्वं तुल्यांशे मधुसर्पिषी इति वाहटः ॥ १३० ॥

ततः कामदेवके बाणसे उत्पन्न पुष्पोंके मधुसे परिव्याप्त और अति मधुर एवं सुगन्धित अपने प्रियतमके दूत उस पक्षिराज राजहंसके वाणीरूपी गौके घृतको अति प्रेमसे पीते हुए अपने अन्तःकरणमें उस कुमारी दमयन्तीने अतुल तृप्ति प्राप्त करके भी अत्यन्त तृप्ति प्राप्त न की तथा मूर्च्छा प्रभृति उन्मादता भी प्राप्त न की। अर्थात्—संसारमें जब कोई मनुष्य शहद और घृतको समान भागमें मिश्रित करके खा लेता है तो वह मूर्च्छित हो जाता है क्योंकि समान मधु और घृतका मिश्रण विष तुल्य माना जाता है। परन्तु, कुमारी दमयन्तीने कामदेवके बाणके पुष्पों का मधु और अपने प्रियतम महाराज नलके दूत राजहंसके वचनरूपी घृतको समान अंशमें अपने अन्तःकरणमें प्राप्त करके प्रसन्नता प्राप्त की, मूर्च्छादि प्राप्त न की ॥ १३० ॥

तस्या दृशो वियति बन्धुमनुव्रजन्त्या स्तद्बाष्पवारि न चिरादवधिर्बभूव ।
पार्श्वेऽपि विप्रचकृषे तदनेन दृष्टेरारादपि व्यवदधे न तु चित्तवृत्तेः ॥१३१॥

तस्या इति । वियत्याकाशे बन्धुमनुव्रजन्त्यास्तस्या दृशो भैमीदृष्टेः तद्बाष्प- वारि बन्धुजनविप्रयोगजन्यं तद्दृग्जलं न चिरादचिरादवधिर्बभूव ओदकान्तं प्रियं पान्थमनुव्रजेदिति शास्त्रात्तद्दृक्सीमाभूदित्यर्थः । ततः तस्माद्बाष्पोपगमादेव हेतो- रनेन हंसेन दृष्टेः पार्श्वे समीपे विप्रचकृषे विप्रकृष्टेनाभावि । वाष्पावरणात् समीपस्थो- ऽपि नालभ्यतेत्यर्थः चित्तवृत्तेस्तु आराद् दूरेऽपि न व्यवदधे व्यवहितेन नाभावि स्नेह- बन्धान्मनसो नापेत इत्यर्थः । उभयत्रापि भावे लिट् समीपस्थस्य विप्रकृष्टत्वं दूरस्थस्य सन्निकृष्टत्वं चेति विरोधाभासः ॥ १३१ ॥

आकाशके समीप भागमें ही जाने वाले उस राजहंसको वह कुमारी दमयन्ती, अपने आंखोंमें उसी राजहंसके गमनसे उत्पन्न आंसुओंके कारण न देख सकीं । परन्तु उसके चले जानेपर—दृष्टिके ओट हो जानेपर वह उसको अपनी चित्तवृत्तिमें धर सकी । अर्थात्—जगतमें जब कोई अतना सुहृद् बिदा होता है तो करुणार्द्र चित्तवालों को आंसू आ जाते हैं । अतः

दमयन्तीको भी हंसके गमनपर आंखोंमें आंसू आ गये । आंसूसे व्याप्त आखें समीपस्थ भी नहीं देख सकती हैं । अतः उन्होंने भी उस राजहंसको समीपमें ही जब वह उड़कर रहा था न देखा । किन्तु जो जिसे चाहता है वह उसके चित्तमें सदा रहता है अतः कुमा. दमयन्ती भी उस राजहंसको दृष्टिसे ओझल होनेपर भी अपने चित्तमें देख सकीं । क्योंकि उसे चाहती थी ॥ १३१ ॥

> अस्तित्वं कार्यसिद्धेः स्फुटमथ कथयन् पक्षयोः कम्पभेदै-
> राख्यातुं वृत्तमेतन्निषधनरपतौ सर्वमेकः प्रतस्थे ।
> कान्तारे निर्गतासि प्रियसखि पदवी विस्मृता किन्तु मुग्धे
> मा रोदीरेहि यामेत्युपहृतवचसो निन्युरन्यां वयस्याः ॥ १३२ ॥

अस्तित्वमिति । अथ एको अनयोरेकतरो हंसः पक्षयोः कम्पभेदैश्चेष्टाविशेषैः कार्यसिद्धेरस्तित्वं सत्तां अस्तीत्यव्ययं विद्यमानपर्यायं तस्मात्त्वप्रत्ययः । स्फुटं कथयन् वृत्तं निष्पन्नमेतत्सर्वं निषधनरपतौ नले विषये आख्यातुं तस्मै निवेदयिष्यन्नित्यर्थः प्रतस्थे अन्यां दमयन्तीं वयसा तुल्या वयस्याः सख्यः नौवय इति यत्प्रत्ययः । हे प्रियसखि ! मुग्धे ! कान्तारे विषमे निर्गतासि सङ्कटं प्रविष्टासि पदवी विस्मृता किम् मा रोदीः एहि यामः गच्छामः इत्युपहृतवचसो दत्तवचनाः सत्यः एनां निन्युः ॥ १३२ ॥

इसके पश्चात् इन दोनों ( दमयन्ती और राजहंस ) में एकने (राजहंस ने) कार्यसिद्धि सफलताके स्पष्ट सूचनार्थ अपने पंखों को फड़फड़ाते हुए आकाशमें उड्डयन गति प्राप्त की और दूसरी ( [illegible]यन्ती ) ने निम्नोक्त सखियोंके वचन प्राप्त किये । "हे मुग्धे ! इस गहन वनमें घूमती हुई तुम मार्गभ्रष्टा हो गयो ? अतः रो[illegible] मत, चलो हम लोग घर चल रहे हैं तुम भी हमारे साथ चलो ।" ऐसा कहकर वे लोग उस कुमारीको ले गयी अर्थात्— राजहंस समस्त वृत्तान्त नलसे कहने चला गया और सखियोंके साथ कुमारी दमयन्ती घर चली गयीं ॥ १३२ ॥

> सरसि नृपमपश्यद्यत्र तत्तीरभाजः
> स्मरतरलमशोकानोकहस्योपमूलम् ।
> किसलयदलतल्पम्लापिनं प्राप तं स
> ज्वलदसमशरेषुस्पर्धिपुष्पर्धिमौलेः ॥ १३३ ॥

सरसीति । हंसो यत्र सरसि नृपमपश्यत् दृष्टवान् तस्य सरसस्तीरभाजस्तटस्थस्य । [illegible]ज्वलद्भिरस[illegible] [illegible]स्य पञ्चेषोरिषुभिः स्पर्द्धत इति तत्स्पर्धिनी तत्सदृशी । पुष्पर्द्धिः पुष्पसमृद्धिः मौलिः शिखरं यस्य तस्याशोकानोकहस्य अशोकवृक्षस्य उपमूलं मूले विभक्त्यर्थे अव्ययीभावः । स्मरेण तरलं चञ्चलं किसलयदलतल्पं पल्लवपत्रशयनं म्लापयति स्वाङ्गदाहेन म्लापयतीति तथोक्तं तं नृपं प्राप ॥ १३३ ॥

उस [illegible]हंसने इसी [illegible] किनारे [illegible] ( जिस तालाबके किनारे महाराज नलको

d peel, cover the bowl with a cloth, and let
d for at least a night. (Longer standing, up
eek, will improve the flavour).

n mix the yeast, flour, milk and seasoning
stiff dough, mix the fruit, etc., into it and,
moistened board, form round or oblong
. Place these on rice paper, cover them with
egg, and decorate with halved almonds on
ake for 1 to 2 hours (according to size) in a
m-hot oven.

## DENMARK

*NGROD* (*Rice Porridge*)
50 grams of rice into 2 litres of boiling milk.
slowly with the lid on for about one hour,
ng frequently. Add salt to taste when
orridge is ready. Sufficient for six persons.
e porridge is served in soup plates with a
butter in the middle, and is sprinkled over
cinnamon mixed with sugar. It is an old
n that a blanched almond is put into it before
g, and whoever gets the almond in his plate
a prize (usually a pig made of marzipan).
nish 'Juleol' (Christmas beer or sweet beer)
erally drunk with the porridge.

breadcrumbs and sugar. Add the ... fruit ... a
almonds as they are cleaned, chopped and stoned
as necessary, thoroughly mixing the whole.
Continue mixing and add the lemon rind and
juice, eggs well beaten with the salt, and milk as
required to obtain a soft mixture.

Leave to stand, covered, overnight. The next
day add rum or brandy, stirring well, and divide
the mixture into well-greased basins about 7/8ths
full, cover with greased paper and cloth, tie
round firmly with string, gathering ends of cloth
upwards into loose knots for easy handling, and
place them in large pans of boiling water so that
the water is not more than half-way up the basins.
Cover pan firmly and allow to boil gently for six
hours, refilling with boiling water as required.
Store the puddings with fresh cloths in a dry
place at equable temperature. Re-heat to serve
as for cooking.

## FRANCE

*BÛCHE DE NOËL AU CAFÉ* (*Yule Log with Coffee Cream*)

*For the Cake Foundation:—*

125 gr. sugar, four eggs, 125 gr. flour, 50 gr.
butter.

## GERMANY

*SPEKULATIUS* (*Christmas Bis*

125 gr. butter 250 gr.
125 gr. sugar baking
1 egg 5 gr. ci

Beat the butter, sugar and eg
cream, then add sifted flour, bak
cinnamon and knead the mixt
dough in a cold place for a short
out thinly, cut out in various s
these on a greased baking-tin for
they are golden-brown.

## GREECE

*ROAST TURKEY STUFFED*
*CHESTNUTS*

Clean and prepare the turkey
lemon juice, salt and pepper,
following stuffing:—

Put to simmer with about 300
an onion, finely chopped, with
Add some tomato pulp and 650

